संस्कृतविद्यापीठग्रन्थमालाया अष्टाशीतितमं पुष्पम्

# प्रत्यक्षागमप्रमाणोल्लासः



प्रधानसम्पादकः

**प्रो. भवेन्द्रझा**

कुलपतिः

सम्पादकः

**प्रो. शुद्धानन्दपाठकः**

अद्वैतवेदान्तविभागः



**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

**( मानितविश्वविद्यालयः )**

**नवदेहली-110016**

संस्कृतविद्यापीठग्रन्थमालाया अष्टाशीतितमं पुष्पम्

# प्रत्यक्षागमप्रमाणोल्लासः


प्रधानसम्पादकः

**प्रो. भवेन्द्रझा**

कुलपतिः

सम्पादकः

**प्रो. शुद्धानन्दपाठकः**

सहसम्पादकौ

**प्रो. एस्. एन्. रमामणिः** **डॉ. सतीशः के. एस्.**





**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-16



**श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ**
**( मानित विश्वविद्यालय )**
**कुतुब सांस्थानिक क्षेत्र, नई दिल्ली-110016**
**Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeetha**
**(Deemed to be University)**
**Qutub Institutional Area, New Delhi-110016**

दिनाङ्कः 05.02.2012

# पुरोवाक्

विदितमेव विपश्चिदपश्चिमानां यत्प्रपञ्चस्यास्य समस्ता अपि व्यवहारा अनुभावाधीनाः, अनुभूतिश्चात्मसत्तानिबन्धना, आत्मसत्तामन्तरेण तदुपलब्धेर्दुरुपपादात्, अनुभूतिप्रक्रियाया अनुभवकर्तुरात्मनः स्वसत्तानुभूतेर-परिहार्यत्वेन भानाच्च। आहुश्च स्वयं भगवत्पादाः—

आत्मा तु प्रमाणादिव्यवहाराश्रयात्प्रागेव प्रमाणादिव्यवहारात् सिद्ध्यति, न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वयम्। न ह्यग्नेरौष्ण्यमग्निना निराक्रियत इति।

वेदान्तिमते चैतन्यं वा ब्रह्मैव प्रत्यक्षप्रमा। सर्वोऽप्याविद्यक-स्तत्रैवाध्यस्यते। मायापि च तदेव विषयीकृत्य तदाश्रिता। भ्रान्तिस्थले रज्ज्ववच्छिन्नचैतन्याज्ञानं रज्ज्ववच्छिन्नचैतन्यं विषयीकृत्य रज्ज्ववच्छिन्नचैन्य-माश्रियते। अज्ञानेन चाहमिदं ममेदमिति लोकव्यवहारः सम्पद्यते। तथापि प्रतिशास्त्रं प्रवर्तमानस्य प्रमाणविचारस्य व्युत्पत्तिवैचित्र्याद् भेदेऽपि प्रायो भारतीयदर्शनानां मिथः समन्वय एव तात्पर्यमवलोक्यते न विरोधे। तथा चाभाणि अभिनवगुप्ताचार्यैः—

तीर्थक्रियाव्यसनिनां स्वमनीषिकाभि-
रुत्प्रेक्ष्य तत्त्वमिति यद्यदमी वदन्ति।
तत्तत्त्वमेव भवतोऽस्ति न किञ्चिदन्यत्
सञ्ज्ञासु केवलमयं विदुषां विवादः॥

विगतसत्रेषु दर्शनसङ्काये विविधप्रमाणमाश्रित्य समायोजितेषु सङ्गोष्ठीकार्यशालादिषु विद्वज्जनसमर्पितानि शोधपत्राणि समाकलय्य प्रमाणस्वरूपं महता शास्त्रसपर्यासमुत्करोऽद्वैतवेदान्तविभागः प्राचीकशत्। शास्त्ररहस्यावबोधनविधौ ग्रन्थग्रन्थिस्फोरणदक्षा आचार्यपारसनाथद्विवेदि-डॉ. मणिद्राविडप्रभृतयो विरला एव भवन्ति, तदानीं सन्निधौ जिज्ञासासमाधानक्रमेण वेदान्तपरिभाषाप्रत्यक्षपरिच्छेदस्य शिखामणिटीकामादाय प्रतिवाक्यं स्वाध्यायस्य विलक्षण एव कश्चिद् बोधोदयः सन्निहितानामभूदिति स्मरामि।

इत्थमयमद्वैतवेदान्तविभागस्यायं सङ्ग्रहमयः सविशेष उपक्रमो गीर्वाणवाणीप्रणयिनां प्रमाणस्वरूपं बुभुत्सूनाञ्च मनःप्रीतये विद्यासम्पत्समृद्धये च प्रपद्येतेति सम्भावयन् प्रकाशनादौ परिश्राम्यतां यत्नसाफल्यं सर्वविधं श्रेयश्च वाग्देवतां समभ्यर्थये।

भवेन्द्रझाः

**प्रो. भवेन्द्रझाः**

कुलपतिः

# सम्पादकीयम्

दर्शनेषु दर्शनीयतमं दर्शनमद्वैतवेदान्तदर्शनं महनीयविषयपौष्कल्यात् सर्वाण्यतिशय्य वरीवर्ति। तस्यास्याध्यापनशोधादिविषयेष्वनवरतं कार्यरतः स्वसमृद्ध्याऽद्वैतवेदान्तविभागः सर्वात्मना चकास्ति। अयं हि विभागः पुण्यश्लोकानां कुलपतिचराणां सम्प्राप्तयशःशरीराणां प्रो. वाचस्पति-उपाध्याय-महोदयानां सारस्वतं सङ्कल्पं निमित्तीकृत्य प्रो. एस्.एन्. रमामणिमहाभागा-नामाध्यक्ष्ये 2010 मार्च्मासस्य 18 तमदिनाङ्कादारभ्य 31 तमदिनाङ्कपर्यन्तं विद्वत्सङ्गोष्ठीं दशदिवसात्मिकां कार्यशालां च समायोज्य स्वोद्देश्यं पूरितवान्। तत्र विमर्शबहुलायां सङ्गोष्ठ्यां वेदान्तपरिभाषायाः प्रत्यक्षप्रमाणं योगदर्शनस्य च धारणाध्यानसमाधीनुपजीव्य महामहोपाध्यायानां डॉ. श्रीकृष्णमूर्तिशास्त्रि-आचार्यसुधाकरदीक्षितमहोदयप्रभृतीनां बहुविधानि शोधपत्राणि प्रास्ताविषत। कार्याशालायाञ्चाद्वैतदर्शनस्यातिमात्रं प्रथिताया वेदान्तपरिभाषायाः प्रत्यक्षपरिच्छेदस्य शिखामणिटीकामाश्रित्य दार्शनिकजगति विश्रुतनामधेयानां प्रो. पारसनाथद्विवेदी, डॉ. मणिद्राविडप्रभृतीनां शास्त्रस्वारस्यगर्भं प्रतिपङ्क्ति-विश्लेषणं समाकर्ण्य तद्रहस्यं जिज्ञासूनामन्तेवासिनाञ्च भूयानुपकार सम्वृत्तः।

यतोऽनुमानविषयिणी कार्यशाला न्यायविभागेन प्रागेव समायोजितेत्य-द्वैतवेदान्तविभागेन प्रमाणेष्ववशिष्टयोरुपमानशब्दयोरुपमानं स्वल्पविषयं मत्वा तद्विहाय शब्दप्रमाणञ्च बहुप्रमेयसम्भृतं विचिन्त्य तद्विषयिणी राष्ट्रियसङ्गोष्ठी प्रो. शुद्धानन्दपाठकमहोदयानामाध्यक्ष्ये 2012 जनवरीमासस्य 16-17 दिनाङ्कयोः समायोजिता। तत्रापि दार्शनिकविचक्षणैर्विद्याचणैर्विपश्चिद्भिर्यथाविषयं शोधपत्राण्युपस्थापितानि। तदित्थं सम्पादितानां विविधकार्यक्रमाणां पूर्वोक्तानां शास्त्रमन्थनोत्थां सुधां शोधपत्रादिरूपां समाकलय्य प्रत्यक्षागमोल्लासनामकं ग्रन्थं विद्वत्सपर्यायां समर्पयन्नद्वैवेदान्तविभागोऽयं नितान्तं कृतार्थतां मनुते।

प्रत्यक्षपटल-शब्दपटल-विनयपटलेत्याख्यैस्त्रिभिर्भागैः परिपुष्टो ग्रन्थोऽयं पारम्परिकाणामाधुनिकानाञ्च दार्शनिकचिन्तकानां शोधपत्राणि क्रोडीकृत्य विलसति। एवं सङ्कलनात्मिकेयं सारस्वतस्थापना विद्यापीठे विद्यासम्पत्समृद्धये जिज्ञासूनां ज्ञानाभिवृद्धये विदुषाञ्च मनस्तोषाय कल्पेतेति सम्भावयन्नेतत्साकारतायै परिश्राम्यद्भ्यो धन्यवादं वितरन् वर्तमानकुलपति-महोदयानामाचार्यभवेन्द्रझामहाशयानां शोधप्रकाशनविभागाध्यक्षाणां प्रो. रमेशकुमारपाण्डेयमहाभागानां कुलसचिवानां डॉ. बी.के.महापात्राणामुप-वित्ताधिकारिणां श्रीअजयकुमारटण्डन्महोदयानां डॉ. ज्ञानधरपाठकमहोदय-प्रभृतीनाञ्च सर्वविधं साहाय्यं प्रतीक्ष्य तेभ्यः सधन्यवादं कार्तज्ञ्यञ्च वितीर्येमं प्रत्यक्षागमोल्लासनामकं ग्रन्थं सुधीजनानां करकमलेषु सोल्लासमुपहरते।

अद्वैतवेदान्तविभागः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
कुतबसंस्थानिकक्षेत्रम्
नवदेहली - 16

# विषयानुक्रमणिका

## प्रत्यक्षपटलम्


| क्रमः | विषयः | लेखकस्य पत्राचारसङ्केतः | |
|---|---|---|---|
| 1. | अद्वैतरीत्या प्रत्यक्षविमर्शः | डॉ. आर्. कृष्णमूर्तिशास्त्री<br>निवृत्तप्राचार्यः, मद्रपुरीसंस्कृत-महाविद्यालयः, मैलापूर्, चेन्नै - 04 | 1 |
| 2. | वेदान्तदर्शनानुसारेण योग-दर्शनप्रामाण्यम् | डॉ. मणिद्रविडः<br>मीमांसाप्राध्यापकः, मद्रपुरीसंस्कृतमहाविद्यालयः, मैलापूर्, चेन्नै - 04 | 6 |
| 3. | अद्वैतवेदान्ते प्रत्यक्ष-लक्षणविचारः | प्रो. शुद्धानन्दपाठकः<br>आचार्यः, अद्वैतवेदान्तविभागः, श्रीला.बा.शा.रा.सं.विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 11 |
| 4. | विशिष्टाद्वैतवेदान्तानुसारेण प्रत्यक्ष स्वरूपम् | प्रो. के.ई. देवनाथन्<br>आचार्यः, विशिष्टाद्वैतवेदान्तविभागः, रा.सं.विद्यापीठम्, तिरुपतिः | 15 |
| 5. | अद्वैतवेदान्ते वृत्तिनिर्गमन-प्रयोजनम् | डॉ. सतीशः के एस्<br>सहायकाचार्यः, अद्वैतवेदान्तविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 18 |
| 6. | वेदान्तदर्शने प्रत्यक्षप्रमाणम् | डॉ. जवाहरलालः<br>सहायकाचार्यः, सर्वदर्शनविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 21 |

| | | | |
|---|---|---|---|
| 7. | प्रत्यक्षप्रमाणम् | कू. वेङ्कटेशमूर्तिः<br>रा.सं.संस्थानम्, जनकपुरी, नवदेहली-16 | 26 |
| 8. | प्रत्यक्षप्रमाणम् | डॉ. मञ्जुनाथः एस्. जी<br>श्रीभगवानदास-आदर्शसंस्कृतमहाविद्यालयः, हरिद्वारम् | 31 |
| 9. | श्रीभाष्ये सविकल्पक-निर्विकल्पकप्रत्यक्षविचारः | डॉ. सुदर्शनन्. एस्<br>सहायकाचार्यः, विशिष्टाद्वैतवेदान्तविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 35 |
| 10. | भाट्टसम्मतज्ञातातास्वरूप-निरूपणम् | प्रो. के.ई. देवनाथन्<br>आचार्यः, विशिष्टाद्वैतवेदान्तविभागः, रां.सं.विद्यापीठम्, तिरुपतिः | 39 |
| 11. | मीमांसकमते प्रत्यक्षप्रमाणम् | डॉ. ए.एस्. आरावमुदन्<br>सहायकाचार्यः, मीमांसाविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 47 |
| 12. | मीमांसामते प्रत्यक्षस्वरूपम् | डॉ. वृन्दावनदाशः<br>सहायकाचार्यः, वेदविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 51 |
| 13. | मानमेयोदयसम्मतप्रत्यक्ष-प्रमाणविमर्शः | डॉ. प्रभाकरप्रसादः<br>सहायकाचार्यः, सर्वदर्शनविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 54 |
| 14. | भाट्टमते प्रत्यक्षप्रमाण-स्वरूपम् | डॉ. रामानुज उपाध्यायः<br>सहायकाचार्यः, वेदविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 58 |

| | | | |
|---|---|---|---|
| 15. | मीमांसाश्लोकवार्तिके प्रत्यक्षप्रमाणस्य स्वरूपम् | डॉ. गोपालप्रसादशर्मा<br>सहायकाचार्यः, वेदविभागः<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 60 |
| 16. | मीमांसाशास्त्रदिशा-प्रत्यक्षमप्रमाणम् | डॉ. देवेन्द्रप्रसादमिश्रः<br>सहायकाचार्यः, वेदविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 62 |
| 17. | कर्मकाण्डस्य प्रत्यक्ष-प्रामाण्यमीमांसा | डॉ. रामराज उपाध्यायः<br>सहायकाचार्यः, पौरोहित्यविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 64 |
| 18. | वात्स्यायनसम्मतप्रत्यक्ष-प्रमाणविमर्शः | प्रो. पीयूषकान्तदीक्षितः<br>आचार्यः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 72 |
| 19. | तर्कभाषाभिमतप्रत्यक्ष-प्रमाणविमर्शः | प्रो. हरेरामत्रिपाठी<br>आचार्यः, सर्वदर्शनविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 79 |
| 20. | न्यायवार्तिकसम्मतप्रत्यक्ष-प्रमाणविमर्शः | डॉ. विष्णुपदमहापात्रः<br>सहायकाचार्यः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 85 |
| 21. | न्यायशास्त्रदिशा प्रत्यक्षलक्षणम् | डॉ. सुधांशुभूषणपण्डा<br>सहायकाचार्यः, धर्मशास्त्रविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 97 |

| | | | |
|---|---|---|---|
| 22. | तात्पर्यटीकाभिमतप्रत्यक्ष-प्रमाणविमर्शः | डॉ. महानन्दझाः<br>सहायकाचार्यः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 101 |
| 23. | न्यायसिद्धान्तमुक्तावलीसम्मत-प्रत्यक्षप्रमाणविमर्शः | डॉ. रामचन्द्रशर्मा<br>सहायकाचार्यः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 106 |
| 24. | न्यायशास्त्रे प्रत्यक्षप्रमाण-सौन्दर्यम् | डॉ. वेङ्कटेशशर्मा<br>आचार्यः, व्याकरणविभागः,<br>श्रीस्वामिपराङ्कुशाचार्य-<br>आदर्शसंस्कृतमहाविद्यालयः,<br>हुलासगञ्ज, जहानाबाद | 116 |
| 25. | न्यायनये प्रत्यक्षप्रमाणविमर्शः | डॉ. अरविन्दकुमारः<br>सहायकाचार्यः, साहित्यविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 122 |
| 26. | सांख्ययोगदिशा प्रत्यक्ष-प्रमाणविचारः | आचार्यसुधाकरदीक्षितः<br>निवृत्ताचार्यः, विमलनिलयः, बी-37/198<br>बी-1, बिर्दोपुरम्, महमूरगञ्जः,<br>वाराणसी- 221010 | 124 |
| 27. | धारणाध्यानसमाधीनामेक-विषयकत्वम् | डॉ. आर्. कृष्णमूर्तिशास्त्री<br>निवृत्तप्राचार्यः, मद्रपुरीसंस्कृतमहाविद्यालयः,<br>मैलापुर्, चेन्नै- 04 | 127 |
| 28. | जैनदर्शने धर्मध्यानस्य वैशिष्ट्यम् | प्रो. वीरसागरजैनः<br>आचार्यः, जैनदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 134 |

| | | | |
|---|---|---|---|
| 29. | सांख्ययोगे समाधिस्वरूपम् | प्रो. महेशप्रसादसिलोडी<br>आचार्यः, सांख्ययोगविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 137 |
| 30. | ध्यानयोगनिदर्शनम् | डॉ. संगीता खन्ना<br>सह-आचार्या, सर्वदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 142 |
| 31. | ऋते ध्यानान्न मुक्तिः | डॉ. अनेकान्तकुमारजैनः<br>सहायकाचार्यः, जैनदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 153 |
| 32. | सांख्यनये प्रत्यक्षप्रमाणविमर्शः | डॉ. रविशङ्करशुक्लः<br>सहायकाचार्यः, सांख्ययोगविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 163 |
| 33. | जैनदर्शने ध्यानस्य स्वरूपं वैशिष्ट्यञ्च | डॉ. कुलदीपकुमारः<br>सहायकाचार्यः, जैनदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 165 |
| 34. | सांख्ययोगयोः धारणास्वरूपम् | डॉ मारकण्डेयनाथतिवारी<br>सहायकाचार्यः, सांख्ययोगविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 169 |
| 35. | दर्शनेषु प्रत्यक्षप्रमाणविमर्शः | प्रो. एस्. एन्. रमामणिः<br>आचार्या, अद्वैतवेदान्तविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 172 |

| | | | |
|---|---|---|---|
| 36. | काव्यशास्त्रे वर्णितं प्रत्यक्षप्रमाणं बौद्धमतखण्डनञ्च | डॉ. सुमनकुमारझाः<br>सहायकाचार्यः, साहित्यविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 178 |
| 37. | **Consciousness and its States: Exploring Dharmaraja's Concept of Vritti and Its Implications** | **Prof. Godabarisha Mishra**<br>Professor, Dept. of Philosophy,<br>The Madras University, Chennai | **185** |
| 38. | वेदान्तपरिभाषायाः प्रत्यक्षपरिच्छेदः | श्रीधर्मराजाध्वरीन्द्रः | 196 |


## ( शब्दपटलम् )


| | | | |
|---|---|---|---|
| 1. | प्रत्यक्षागमयोः प्राबल्य-दौर्बल्यविचारः | प्रो. शुद्धानन्दपाठकः<br>आचार्यः, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 211 |
| 2. | शब्दप्रमाणम् | प्रो. एस. एन्. रमामणिः<br>आचार्या, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 215 |
| 3. | आगमस्य प्रामाण्यविवेचनम् | डॉ. धनञ्जयकुमारपाण्डेयः<br>सहायकाचार्यः, वैदिकदर्शनविभागः,<br>काशीहिन्दूविश्वविद्यालयः, वाराणसी | 220 |
| 4. | वेदान्ते शब्दप्रमाणविमर्शः | डॉ. प्रभाकरप्रसादः<br>सहायकाचार्यः, सर्वदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 226 |
| 5. | शब्दवृत्तिनिरूपणम् | डॉ. सतीशः के. एस्<br>सहायकाचार्यः, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 232 |

| | | | |
|---|---|---|---|
| 6. | उपक्रमादिलिङ्गानां तात्पर्यनिर्णायकत्वम् | डॉ. के. एस्. महेश्वरः<br>वेदान्तप्राध्यापकः, मद्रपुरीसंस्कृतमहाविद्यालयः, मैलापूर्, चेन्नै - 04 | 238 |
| 7. | शाब्दापरोक्षवादनिरासः | डॉ. सुदर्शनन्. एस्<br>सहायकाचार्यः, विशिष्टाद्वैतवेदान्तविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 245 |
| 8. | मीमांसादिशा शब्द-नित्यत्वविमर्शः | डॉ. संगीता खन्ना<br>सह-आचार्या:, सर्वदर्शनविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 252 |
| 9. | न्यायवैशेषिकदृष्ट्या शब्दविमर्शः | प्रो. हरेरामत्रिपाठी<br>आचार्यः, सर्वदर्शनविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 260 |
| 10. | शब्दस्य प्रमाणान्तरत्वे युक्तिप्रदर्शनम् | डॉ. विष्णुपदमहापात्रः<br>सहायकाचार्यः, न्यायविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 266 |
| 11. | सांख्यन्याययोः शब्द-प्रमाणविषये वाचस्पतिमिश्र-मतचिन्तनम् | डॉ. जवाहरलालः<br>सहायकाचार्यः, सर्वदर्शनविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 272 |
| 12. | सांख्ययोगमते शब्दप्रमाणम् | प्रो. महेशप्रसादसिलोडी<br>आचार्यः, सांख्ययोगविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 278 |
| 13. | सांख्ययोगदृष्टौ आप्तप्रमाणम् | डॉ. रविशङ्करशुक्लः<br>सहायकाचार्यः, सांख्ययोगविभागः, श्रीला.बा.शा.रा.सं. विद्यापीठम् कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 281 |

| | | | |
|---|---|---|---|
| 14. | सांख्यदर्शनरीत्या शब्द-प्रमाणस्वरूपम् | डॉ. मारकण्डेयनाथतिवारी<br>सहायकाचार्यः, सांख्ययोगविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 285 |
| 15. | प्रमाणांशः शब्दनयः | डॉ. अनेकान्तकुमारजैनः<br>सहायकाचार्यः, जैनदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 287 |
| 16. | जैनदर्शने शब्दप्रमाणम् | डॉ. कुलदीपकुमारः<br>सहायकाचार्यः, जैनदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 291 |
| 17. | न्यायदर्शने शब्दस्वरूपविचारः | डॉ. महानन्दझाः<br>सहायकाचार्यः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 299 |
| 18. | Shabda Pramana-Vishishtadvaitin View | Dr. K. Anantha<br>Assistant Professor, Dept. of Vishishtadvaita Vedanta, SLBSRS Vidyapeetha, Qutub Inst. Area, New Delhi-16 | 306 |
| 19. | वेदान्तपरिभाषायाः आगमपरिच्छेदः | श्रीधर्मराजाध्वरीन्द्रः | 312 |

## ( विनेयपटलम् )

| | | | |
|---|---|---|---|
| 1. | शब्दप्रमाणम् | डॉ. राजेन्द्रप्रसादद्विवेदी<br>शोधच्छात्रः, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 321 |

| | | | |
|---|---|---|---|
| 2. | विशिष्टाद्वैतवेदान्ते शब्दप्रमाणम् | डॉ. पी.एस्.पद्मिनी श्रीधरः<br>शोधच्छात्रा, विशिष्टाद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 324 |
| 3. | पाणिनिव्याकरणे प्रत्यक्षस्वरूपम् | डॉ. शिवप्रतापद्विवेदी<br>शोधच्छात्रः, व्याकरणविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 329 |
| 4. | प्रमाणेषु शब्दप्रमाणम् | श्री अरविन्दमोहनरतूडी<br>शोधच्छात्रः, अद्वैतवेदान्तविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 333 |
| 5. | वेदान्तपरिभाषादिशा शब्दप्रमाणविमर्शः | श्री रामसिंहः<br>शोधच्छात्रः, सर्वदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 337 |
| 6. | शब्दप्रमाणम् | श्री प्रदीपकुमारः<br>शोधच्छात्रः, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 341 |
| 7. | शिखामणिटीकादृष्ट्या प्रत्यक्षपरिच्छेदः | श्री सुब्रह्मण्यः<br>श्री चन्द्रशेखरेन्द्रसरस्वतीमानितविश्वविद्यालयः,<br>एनात्तूर्, काञ्चीपुरम् | 344 |
| 8. | शब्दप्रमाणम् | श्रीमती कल्याणी साहू<br>शोधच्छात्रा, अद्वैतवेदान्तविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 349 |
| 9. | शब्दप्रमाणविचारः | श्री विष्णुशङ्करमहापात्रः<br>शोधच्छात्रः, अद्वैवेदान्तविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली–16 | 352 |

| | | | |
|---|---|---|---|
| 10. | विशिष्टाद्वैतसिद्धान्ते शब्दप्रमाणम् | श्री आलोककुमारः<br>शोधच्छात्रः, विशिष्टाद्वैवेदान्तविभागः<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 356 |
| 11. | मीमांसादर्शनदिशा वेदस्य अपौरुषेयत्वविचारः | श्री सुशीलकुमारः<br>शोधच्छात्रः, पाण्डिचेरीविश्वविद्यालयः<br>पुदुचेरी | 359 |
| 12. | मीमांसादर्शने शब्दप्रमाणम् | श्री सन्दीपकुमारः<br>शोधच्छात्रः, मीमांसाविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 363 |
| 13. | शब्दप्रमाणविमर्शः | श्रीमती सियङ्काशर्मा<br>शोधच्छात्रः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 369 |
| 14. | नव्यन्यायमते शब्दप्रमाणम् | श्री धीरजकुमारः<br>शोधच्छात्रः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 375 |
| 15. | न्यायनये शब्दप्रमाणम् | श्री दीपककुमारद्विवेदी<br>शोधच्छात्रः, न्यायविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 379 |
| 16. | न्यायमते शब्दप्रमाणम् | श्री राजेशकुमारः<br>शोधच्छात्रः, न्यायविभागः<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 384 |
| 17. | सांख्ययोगनये शब्दप्रमाणम् | श्री दिनेशशर्मा<br>शोधच्छात्रः, सांख्ययोगविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 388 |

| | | | |
|---|---|---|---|
| 18. | सयुक्तिकं सांख्याभिमत-शब्दप्रमाणविमर्शः | कु. गौतमदेवी<br>शोधच्छात्रा, सर्वदर्शनविभागः,<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 393 |
| 19. | भारतीयदर्शनेषु शब्दप्रमाणम् | श्री सुनीलकुमारः<br>शोधच्छात्रः, सांख्योगविभागः<br>श्रीला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 396 |
| 20. | भारतीयदर्शनेषु शब्दप्रमाणम् | श्रीमती सुनीता कुमारी नागरः<br>शोधच्छात्रः, सांख्ययोगविभागः,<br>श्री ला.बा.शा.रा.सं. विद्यापीठम्<br>कुतुबसांस्थानिकक्षेत्रम्, नवदेहली-16 | 403 |

# अद्वैतरीत्या प्रत्यक्षविमर्शः

डॉ. आर्. कृष्णमूर्तिशास्त्री

जीवः प्रमाणैः प्रमेयं परिज्ञाय स्वीयं सर्वं व्यवहारं निर्वर्तयति। अत एवोक्तं "मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात्" इति। प्रमाणानां संख्याविषये अस्ति वादिनां विप्रतिपत्तिः। तत्र पूर्वोत्तरमीमांसकानां प्रमाणषट्कस्वीकारः। सख्यागणने च निर्विवादं प्रत्यक्षमेव प्रथमं गण्यते। अक्षाणि इन्द्रियाणि एकैकमक्षं प्रति जायमानं प्रत्यक्षमिति व्युत्पत्तिः। शब्दादयो विषयाः पञ्च क्रमेण श्रोत्रादिभिः इन्द्रियैः ज्ञायन्ते, सुखदुःखादिकं च मनसा इति निर्विवादम्। प्रत्यक्षशब्दोऽयं प्रमां प्रमाणं च कथयति। अद्वैतमतरीत्या प्रत्यक्षं किं? इति विषयः विचार्यतेऽधुना। प्रमाता, प्रमाणं प्रमेयम् इति विभागः लोकसिद्धः कथमद्वैते उपपद्यते इति विचारे एवं वेदान्तपरिभाषायां प्रतिपादितम्– अद्वैतसिद्धान्ते एकमेव चैतन्यं ब्रह्म तच्च मायोपहितम् ईश्वरः अन्तकरणोपहितं जीवः इति द्विधा व्यवहारे स्वीक्रियते। चैतन्यमेव ज्ञानं मुख्यं भवति। तच्च स्वयं सर्वदा स्वसंबद्धं सर्वं भासयति। उक्तं हि तस्य भासा सर्वमिदं विभाति इति। सर्वस्य चैतन्यैकरूपत्वे प्रमात्रादिविभागः एवं समर्थ्यते–

सर्वेषाम् अन्तःकरणं मन आख्यं सूक्ष्मपञ्चभूतसमष्टिसत्त्वगुणकार्यं पञ्चेन्द्रियसहायकं कामसङ्कल्पादिवृत्तिकं जीवस्योपाधिः, तादृशान्तः–करणावच्छिन्नं चैतन्यं प्रमाता भवति। यदा बाह्येन्द्रियद्वारा तन्मनः बहिः विषयदेशं प्राप्नोति तदा तस्मिन् मनसि कश्चन परिणामः वृत्त्याख्यो जायते। तादृशवृत्त्यवच्छिन्नं चैतन्यं प्रमाणम् इत्याख्यायते। घटादि यो बाह्यः पदार्थः शब्दादयश्च ज्ञेयाः विषया ये तदवच्छिन्नचैतन्यं प्रमेय इत्युच्यते। जाग्रदवस्थायां चक्षुरादिभिः घटादीनां सम्बन्धे सति तत्तदाकारवृत्तयो मनसि भवन्ति। तदा अयं घटः इति प्रत्यक्षज्ञानम् उत्पद्यते। अत्र च ज्ञानशब्द–

वाच्ये वृत्त्यवच्छिन्ने चैतन्ये स्वतः उत्पत्त्यभावेऽपि तादृशवृत्तेः उपाधिभूताया चक्षुर्घटसंयोगेन उत्पन्नत्वात् घटज्ञानम् उत्पन्नम् इति व्यवहारः, घटोत्पत्तौ घटाकाशोत्पत्तिवच्चैतन्यरूपस्य ज्ञानस्य अवच्छेदकरूपा वृत्तिरपि ज्ञानशब्देन उपचाराद् गृह्यते इति स्वीकारात् घटज्ञानोत्पत्तिः सुतरां सम्भवति।

**प्रत्यक्षलक्षणम्–**

ज्ञानं तदा प्रत्यक्षमुच्यते तस्य विषयः यदा प्रत्यक्षो भवति इति लोके व्यवहारः। घटज्ञानं तदैव प्रत्यक्षं स्वीक्रियते यदा घटः इन्द्रियसन्निकृष्टः समनस्केन इन्द्रियेण गृह्यते। यदा तु स घटः भित्तिव्यवहितो भवति घटज्ञानं परोक्षमेव। एवं विषयप्रत्यक्षाधीनज्ञानप्रत्यक्षत्वम् इति सिद्धम्। विषयाश्च घटादयः शब्दादयो वा यदा अस्मद्व्यवहिता तदा स्वात्मचैतन्येन सम्बन्धा भावात् परोक्षा एव भवन्ति। आत्मचैतन्यं तु सर्वदा प्रत्यक्षमेव, कदापि न परोक्षं इति हेतोः यत्साक्षादपरोक्षाद् य आत्मा सर्वान्तर इति उपनिषदि जोघुष्यते। अत एव स्वात्मसत्ताविषये कश्चिदपि न सन्दिग्धे अहं वा नाहं वेति, नापि विपर्येति नाहमेवेति। सर्वदा सर्वो जन्तुः अहमस्मि इति जानाति। अत एव तमेव भान्तमनुभाति सर्वम् इति मुण्डकोपनिषदि कथितम्। दक्षिणामूर्त्यष्टकेऽपि जाग्रज्ज्ञानसामान्यकाले शब्दस्पर्शादिप्रत्यक्षे जायमाने स्वचैतन्यमेव सर्वस्य भासकम् इति निरूपितम्–

**नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं**

ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते इत्युक्तम्। प्रत्यक्षप्रमाया लक्षणं इदम् विषयावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभेदः इति।

**शङ्का** वृत्तिविषययोरुभयोरुपाध्योः भिन्नत्वेन कथं तयोः अभेदः इति।

**समाधानम्** उपाध्योः द्वयोः बहूनां वा स्वतः उपहितभेदप्रयोजकत्वं नास्ति। यतः बहूनां जलपात्राणां एकत्रैव परस्परान्तःप्रवेशद्वारा स्थापने कृते यथा तावत्पात्रावच्छिन्न आकाशः एकः भवति। परन्तु उपाध्योः उपाधीनां वा यदा भिन्नदेशस्थत्वं वर्तते तदा एव उपहितभेदप्रयोजकता भवति यथा, एवं प्रकृतेऽपि घटप्रत्यक्षकाले घटदेशे मनोवृत्तेः सत्त्वात् वृत्त्यवच्छिन्नचैतन्यस्य

घटावच्छिन्नचैतन्यस्य च एकदेशस्थत्वेन उपहितचैतन्याभेदो भवति। तथाच वृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरभेदात् घटप्रमायां प्रत्यक्षत्वं सिद्धम्।

**शङ्का** अतीतसुखादिस्मरणं यदा भवति, यदा वा त्वं धर्मिष्ठ इति वाक्यद्वारा स्ववृत्तिधर्मादिज्ञानं भवति तादृशस्थलद्वये अतिव्याप्तिः स्यात्। तत्र सुखादिविषयस्य धर्मादिविषयस्य च तद्वृत्तेश्च एकदेशस्थत्वात् इति।

**समाधानम्** प्रत्यक्षप्रमालक्षणे विषयस्य वर्तमानत्वं प्रत्यक्षयोग्यत्वं चेति विशेषणद्वयं दीयते। यथा च सुखादीनां प्रत्यक्षयोग्यत्वेऽपि स्मृतिकाले अवर्तमानत्वात् धर्मादीनां वर्तमानत्वेऽपि प्रत्यक्षायोग्यत्वात् नातिव्याप्तिः प्रत्यक्षप्रमालक्षणस्य।

एवं च इदं प्रत्यक्षज्ञानलक्षणं वृत्त्यवच्छिन्नचैतन्यस्य योग्यवर्तमान-विषयावच्छिन्नचैतन्याभेदः ज्ञानप्रत्यक्षत्वे इदमेव प्रयोजकम्। प्रायः "इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं" इति यल्लक्षणं प्रसिद्धं तत् न युक्तम्। यतः वह्निमान् पर्वतः इति ज्ञाने वह्निज्ञानमपि एतल्लक्षणघटितमिति हेतोः वह्न्यंशेपि ज्ञानं प्रत्यक्षं आपतेत्। अपि च ईश्वरज्ञानस्य अजन्यत्वेन प्रत्यक्षत्वं न स्यात्। अस्मन्मते तु वह्निमान् पर्वतः' इत्यत्र वह्न्यंशे अन्तःकरणस्य पर्वतव्यवधानेऽपि वन्ह्याकारत्वस्य सत्त्वेऽपि तद्देशगमनाभावात् विषयावच्छिन्नचैतन्येन वृत्त्यवच्छिन्नस्य चैतन्यस्य भिन्नदेशस्थत्वेन उपहितयोः भेदादभेदरूपप्रयोजकाभावात् नातिव्याप्तिः। ईश्वरज्ञाने तु एतादृशप्रयोजकस्य सत्त्वेन अतिव्याप्तिरपि न भवति।

**शङ्का** इन्द्रियजन्यत्वस्य प्रयोजकगोष्ठावप्रवेशे त्वं सुखी इत्यादि-वाक्यजन्यज्ञानस्यापि प्रत्यक्षत्वमापतेदिति।

**समाधानम्** इयमापत्तिः नास्माकं दोषाय, अस्या अभीष्टत्वात्। अत एव दशमस्त्वमसि इत्यादिवाक्यजन्यज्ञानस्य सन्निकृष्टविषयकत्वेन प्रत्यक्षत्वं भवति, वृत्त्यवच्छिन्नविषयावच्छिन्नयोः चैतन्ययोः अभेदसत्त्वात्। किञ्च पर्वतो वह्निमान् इति ज्ञानं वह्न्यंशेऽपि प्रत्यक्षं स्यात् यतः तस्य संपूर्णस्य ज्ञानस्य वह्निमत्पर्वतावगाहिनः मनोरूपेन्द्रियजन्यत्वात्।

**विषयप्रत्यक्षलक्षणम्**

घटादेः विषयस्य प्रत्यक्षत्वं तु प्रमात्रभेदः। घटादीनां प्रमातृभिन्नत्वात् अहं घटं पश्यामि इति सर्वैः भेदस्य स्पष्टं अनुभूयमानत्वात् कथं प्रमात्रभेद इति न शङ्कनीयम्। अत्र प्रमात्रभेदो नाम न स्वरूपैक्यम् किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावो विवक्षितः। स च घटादौ भवति। तथाहि सर्वोऽपि प्रपञ्चः स्वाधिष्ठाने चैतन्येऽध्यस्तः इति अद्वैतसिद्धान्तः। विषयश्चायं भगवद्गीतायाम्–

**"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।**
**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥"**

इत्यवधरितम्। एवं च सति अध्यस्तस्य अधिष्ठानात् पृथक्सत्ता नास्ति इति हेतोः घटीदीनां स्वाधिष्ठानचैतन्यात् पृथक्सत्ता नास्ति। स च घटादिः उपाधिः मनोरूपोपाधिश्च प्रत्यक्षकाले एकदेशस्थं सञ्जातम्। एकदेशस्थयोरुपाध्योः भेदकत्वात् मनअधिष्ठानचैतन्यस्य प्रमातुः घटाधिष्ठानचैतन्यस्य च अभेदात् तद्वारा प्रमातृसत्ता एव घटादिसत्ता सम्पन्ना इति हेतोः घटादीनाम् एतादृशः प्रमात्रभेदो जातः। ततश्च घटादिविषयः प्रत्यक्षो भवति। अनुमित्यादिस्थले तु अन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य च भिन्नदेशोपाध्यवच्छिन्नत्वेन अभेदानापत्तेः वह्न्यादिसत्ता प्रमातृसत्तातो भिन्ना इत्यतः नातिव्याप्तिः।

**शङ्का** अहं, पुण्यवान् सुखानुभववत्वात् इत्यनुमितिगोचरपुण्यादीनामपि एतादृशप्रयोजकसत्त्वेन पुण्यस्य प्रत्यक्षत्वापत्तिः। पुण्यावच्छिन्नस्य चैतन्यस्य अन्तःकरणवृत्तिप्रमातृचैतन्यस्य च अभिन्नत्वात्।

**समाधानम्** ज्ञानप्रत्यक्षलक्षणे इव अत्रापि विषयस्य योग्यत्वं विशेषणं दीयते। पुण्यादीनां तु प्रत्यक्षयोग्यता नास्ति इति नातिव्याप्तिः।

**शङ्का** सर्वेषां पदार्थानां ब्रह्मचैतन्ये अध्यस्तत्वं समानम् इत्यतःकथं घटादीनामेव प्रत्यक्षयोग्यत्वं, न पुण्यादीनाम् इति कथं विनिगमनम्? विभागो वा?

**समाधानम्** एकचैतन्याध्यस्तत्वस्य समानत्वेऽपि केषाञ्चित्प्रत्यक्ष-योग्यत्वं, केषाञ्चिन्न इत्यत्र फलबलकल्प्यः स्वभावः एव शरणम्। अन्यथा तार्किकाणामपि अयं प्रश्नः समानः स्यात्। सुखादीनां धर्मादीनां च आत्मगुणत्वे समानेऽपि सुखादिकं प्रत्यक्षयोग्यं धर्मादिकं तु प्रत्यक्षायोग्यं इत्येवं विभागः न स्यात्।

**शङ्का** रूपी घट इत्येवं रूपविषयकप्रमासमये घटगतपरिणामादीनां विषयाणां प्रत्यक्षत्वं कुतो न भवति। घटगतानां रूपादीनामिव परिणामादीनामपि पूर्वोक्तरीत्या प्रमात्रभेदस्य सत्त्वात्?

**समाधानम्** प्रमातुः तत्तदाकारवृत्युपहितत्वं विशेषणं दीयते। एवं च रूपाकारवृत्तिदशायां परिणामाकारवृत्त्यभावेन परिणामाकारवृत्युपहितप्रमातृ चैतन्याभिन्नत्वं परिणामे नास्तीति परिणामस्य न प्रत्यक्षत्वम्।।

**निगमनम्** एवं रीत्या प्रत्यक्षलक्षणम् अद्वैतिभिः स्वीक्रियते। अस्य च मुख्यं प्रयोजनमिदं यत् शाब्दापरोक्षत्वसिद्धिः। दशमस्त्वमसि इति वाक्यस्येव तत्त्वमसि इत्यादिवाक्यजन्यस्यापि आत्मैक्यज्ञानस्य औपनिषदस्य साक्षात्काररूपत्वं पूर्वोक्तलक्षणस्वीकारस्य मुख्यं फलम्।

अपि च तत्त्वमस्यादिवाक्यस्य अपरोक्षज्ञानाजनकत्वे अपरोक्ष भ्रमनिवृत्तिर्नस्यात्। मनसाऽपरोक्षत्वज्ञानं भवतु इति तु न शंक्यम्; मनसः कुत्रापि प्रमाकरणत्वस्य स्वातन्त्र्येणाभावाददृष्टत्वात् वा। यथा शब्दस्य परोक्षप्रमाजनकस्वभावस्य अन्यत्रादृष्टम् अपरोक्षप्रमाजनकत्वं कल्प्यते तथा मनसोऽपि कल्प्यताम् इति तु न शङ्कनीयम्; मनसि प्रमाकरणत्वम् अपरोक्षप्रमाकरणत्वं चेति द्वयकल्पनागौरवात् शब्दे तु प्रमाकरणत्वस्य सिद्धत्वेन अपरोक्षाजनकत्वमात्रस्य कल्पनेन लाघवात्। वस्तुतस्तु दशमस्त्वमसि इत्यत्र लौकिकवाक्ये प्रत्यक्षप्रमाजनकत्वस्य दृष्टत्वाच्च।

वस्तुतस्तु लक्षणान्तरस्य दूषितत्वेन अस्मदभिमतं प्रत्यक्षलक्षणमेव सुस्थमिति सिद्धम्।।

# वेदान्तदर्शनानुसारेण योगदर्शनप्रामाण्यम्

डॉ. मणिद्रविडः

**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥**
इति

सांप्रदायिकश्लोकेन पातञ्जलयोगदर्शनस्य चित्तमलापाकरणं परममुद्देश्यमिति स्पष्टं प्रतीयते। शुद्धचित्तस्य च तत्त्वदर्शने भवति सामर्थ्यम्। तत्त्वदर्शनं च मोक्षस्य साधनं तदिदं सर्वं श्रुत्यादिप्रमाणसिद्धम्। तथाहि कठोपनिषदि–

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ[1]॥**

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्॥[2]**

इत्यादीनि वाक्यानि उक्तमर्थं निरूपयन्ति। तां स्थिराम् अचलाम् इन्द्रियाणां स्वव्यापारपरित्यागपूर्वकब्रह्मैकाग्र्यलक्षणां धारणां योगविदः योगं मन्यन्ते। यदैव इन्द्रियाणां स्थिरा धारणा सिद्ध्यति तदैव अप्रमत्तो भवति। यतो योगः इन्द्रियवृत्तीनां प्रभवाप्ययौ। उपेक्षितो योगः इन्द्रियवृत्तीनां प्रभवः, अनुष्ठितश्च तासां लयहेतुः विषयेभ्यः प्रतिसंहृत्य चेतसः आत्मनि समाधानम् अध्यात्मयोगः तेन देवमात्मानं मत्वा धीरो हर्षशोकौ जहाति यदा ज्ञानानि ज्ञानसाधनानि पञ्चेन्द्रियाणि संकल्पविकल्पात्मकेन मनसा सह अवतिष्ठन्ते स्वव्यापारादुपरतानि भवन्ति, बुद्धिश्च न विचेष्टते, तदा तां परमां गतिमाहुः

1. कठोपनिषद् 2.6.11
2. कठोपनिषद् 2.6.12

इति उक्तवाक्यानां संक्षिप्तोऽर्थः। तथा **'यच्छेद् वाङ्मनसी प्राज्ञः'**[3] इति वचनं च साक्षादेव योगं विधत्ते। सति चैवं योगस्य ज्ञानहेतुत्वे श्रुतिसिद्धे कथं भगवता बादरायणाचार्येण ब्रह्मसूत्रेषु 'एतेन योगः प्रत्युक्तः' इति योगो निराकृतः इति भवति जिज्ञासा।

अत्रायं समाधिः बादरायणाचार्यहृदयवेदिभिः विद्वद्भिः वर्णितः। **'एतेन योगः प्रत्युक्तः**[4] इति सूत्रे 'एतेन' इति पदं पूर्वाधिकरणे **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्**[5] **'इतरेषां चानुलब्धेः**[6] इति सूत्रद्वयोक्तं सांख्यमतप्रसिद्धप्रधान-कारणवादनिराकणहेतुं परामृशति। तेन योगशास्त्रे यत् सांख्यवदेव प्रकृतेरूपादानत्वं, प्रकृतेर्महान् इत्यादि सृष्टिक्रमः तथा ईश्वरस्वीकृतावपि तस्य जगदुपादानत्वास्वीकारः इत्येवमादिकमेव श्रुत्यादिविरोधात् अस्मिन् सूत्रे निराक्रियते। न तु भावनाख्ययोगस्य अनेन सूत्रेण निराकरणं युक्तम्। तन्निराकरणहेतोः पूर्वाधिकरणे कस्याप्यनुक्तेः सांख्यवादनिराकरणहेतुपरामर्शक एतत् शब्दार्थत्वानुपपत्तेः। अत एव तत्सूत्रे भाष्ये ''येन त्वंशेन न विरुध्येते, तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम्'' इति वेदाविरूद्धांशे तत्प्रामाण्यम् अङ्गीकृतमेव।

किञ्च ब्रह्मसूत्रे 'आसीनः संभवात्' इत्यधिकरणे योगस्मृतिनिरूपिताः पद्मस्वस्तिकाद्यासनविशेषाः प्रामाणिकत्वेन स्वीकृताः। तथा 'पञ्चवृत्तिर्मनोवद् व्यपदिश्यते (ब्र. सू.) इत्यत्रापि प्राणस्य पञ्चवृत्तिकत्वे दृष्टान्तत्वेन मनोवत्' इति योगसूत्रे प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति प्रसिद्धाः मनसः पञ्चवृत्तयः स्वीकृताः। इत्थं ब्रह्मसूत्रकृतैव योगस्मृतेः प्रमाणत्वेन स्वीकृतत्वात् अंशतः एव योगप्रत्याख्यानं तदभिप्रेतमित्यवश्यं वर्णनीयम्।

किञ्च भगवता ब्रह्मसूत्रकृतैव पातञ्जलयोगसूत्रस्य भाष्यं विरचितमिति प्रथा। ततश्च योगशास्त्रस्याप्रामाण्यं चेद्विवक्षितं तदा तत्कृतयोग-सूत्रभाष्यस्य वैयर्थ्यमेव स्यात्। अतश्च योगसूत्रवृत्तौ नारायणतीर्थपादा आहुः

---

3. कठोपनिषद् 1-3-13
4. ब्रह्मसूत्रम् 2.1.3,
5. ब्रह्मसूत्रम् 2.1.1,
6. ब्रह्मसूत्रम् 2.1.2,

''स्वतन्त्रसत्यत्वमुखं प्रधाने, सत्यं च चिद्भेदमभेदवाक्यैः।
व्यासो निराचष्ट न भावनाख्यं योगं स्वयं निर्मितब्रह्मसूत्रैः॥''

इति। प्रधाने सांख्ययोगाभिमतमूलप्रकृतौ स्वतन्त्रत्वसत्यत्वादि तथा तदभिमतमात्मभेदस्य पारमार्थिकत्वम् इत्येतदेव एतेन योगः प्रत्युक्त इति सूत्रेण व्यासो निराकृतवान्। वेदान्तसिद्धान्ते प्रकृतेः ईश्वराधीनत्व-मिथ्यात्वादिस्वीकारात्, आत्मभेदस्यापारमार्थिकत्वाच्च। भावनाख्ययोगस्य निराकरणं तु व्यासस्य नाभिप्रेतमिति तदर्थः। इत्थं योगस्य चित्तैकाग्रतादिसाधनत्वे स्वीकृतेऽपि वेदान्तदर्शने अधिकारिविशेषं प्रत्येव योगापेक्षा, न सर्वेषामिति व्यवस्था स्वीकृता। यथोक्तं वासिष्ठे–

द्वौ क्रमौ चित्तनाशस्य योगे ज्ञानं च राघव।
योगस्तद्वृत्तिरोधश्च, ज्ञानं सम्यगवेक्षणम्।
असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः॥

इति। अत्र न्यायरत्नावल्यां ब्रह्मानन्दसरस्वतीस्वामिनां विवरणम्– ''चित्तनाशस्य=चित्तादर्शनप्रयुक्तस्य शुद्धात्मदर्शनस्य। क्रमौ = साधनानुष्ठानक्रमेण क्रियमाणौ उपायौ इति। कीदृशस्याधिकारिणः योगापेक्षेति स्वाराज्यसिद्धितद्व्याख्यानयोः श्रीगङ्गाधरेन्द्रसरस्वतीस्वामिपादाः इत्थं व्युत्पादयांबभूवुः। यः बलवत्तरप्रारब्धवशात् दृढतरासंभावनादिदोषात् विचारितमप्यात्मतत्त्वं न अवगच्छति यश्च दृढतररागद्वेषादिद्वैतसंस्कार-व्याकुलचित्तः विचारितेऽपि आत्मतत्त्वे चित्तस्थैर्यं न लभते, तयोः मुमुक्षावतोः मध्ये प्रथमः श्रवणाद्यावृतिं कुर्यात् द्वितीयस्तु योगाभ्यासेन चित्तनिग्रहं कुर्यादिति। तथा चोक्तम्–

इत्थं संबोधितस्याप्यनवहितमतेः यस्य बोधो न वृतः
स स्याद् भूयो विचारव्यसनवशमनाः सहायः स्वतश्च।
अक्षात् विक्षेपशान्त्यै चपलमपि मनो लालनैर्वा हठाद्वा
रुद्ध्वा ध्यायेदनन्तं परमसुखचिदात्मानमेकं विविक्ते॥

इति। अत्र पूर्वार्धे बोधार्थं श्रावणाद्यावृत्तिः कर्तव्यतयोच्यते। उत्तरार्धे तु कृतश्रवणादेः चित्तस्थैर्यार्थं योगः उपदिश्यते। तत्रापि मनोनिग्रहे उपायद्वयमाह लालनैर्वा हठाद्वेति। यथा दुर्दान्तस्य पशोः अभिमतदेशप्रवेशनेन बन्धनार्थं

तृणादिप्रदर्शनकण्डूयनादिः एकः लालनोपायः तथा लगुडप्रहारादिः दण्डोपायः अपरः। एवमेव चित्तस्य बहिः प्रवणतानिवारणेन आत्मप्रवणतासंपादने अभ्यासवैराग्ये, विषयदोषानुसंधानम् अमानित्वादयो धर्माः, असङ्गात्मभावना, इत्यादिः लालनोपायः। अयं राजयोगाख्यः। तथा द्वितीयः हठयोगाख्यः। इत्थं श्लोकेन दर्शितः

**मुक्त्वा सङ्गं सहिष्णुः शुचिहितमितभुग् योगशास्त्रार्थदर्शी**
**पुण्ये निर्दोषदेशे यमनियमदृढः स्वासनस्थः प्रसन्नः।**
**प्राणायामक्रमेणाहृतचपलमनःस्थूलसूक्ष्मे निरुध्य**
**ध्यायन्नैकात्म्यसौख्यस्थिरगलितमनाः मोहबन्धं छिनत्ति॥**

इति।

भगवद्गीतास्वपि षष्ठाध्याये चित्तस्यात्मनि स्थैर्यार्थं योगो विस्तरेण वर्णितः। तत्फलं चोक्तम्—

**युञ्जंन्नेवं सदात्मानं योगी नियतमानसः।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥**

**यत्रोपरमते चित्तं निरुद्धं योगसेवया।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति॥**

**सुखमात्यन्तिकं यत्तत् बुद्धिग्राह्यमतीन्द्रियम्।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः।**
**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।**
**यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते॥**

**तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम्॥** इति च

अत्र च योगसेवया चित्तस्योपरमो नाम संप्रज्ञातसमाधिपाटवेन मनसः अयत्नतः विषयाकारपरिणामाभावः अभिप्रेतः। सुखस्य बुद्धिग्राह्यत्वं निरुद्धमनोऽभिव्यक्तत्वम्, अतीन्द्रियत्वं च विषयेन्द्रियसंपर्काजन्यत्वम्। एवं च तदा द्वैतभानाभावात् परमार्थात्मस्वरूपाद् योगी न विचलति। तथा पातञ्जलसूत्राणि योगश्चित्तवृत्तिनिरोधः तदा द्रष्टुः स्वरूपेऽवस्थानम् इत्यादीनि।

इदन्त्ववधेयं निरोधसमाधिरूपस्य योगस्य पुण्यविशेषजननद्वारैव आत्मसाक्षात्कारहेतुत्वम्। प्रमाणजन्यत्वात् साक्षात्कारप्रमायाः। तदपि उक्तं निर्विचारवैशद्येऽध्यात्मप्रसादः। ऋतम्भरा तत्र प्रज्ञा। श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् इति। निर्विचारः = निर्विकल्पकसमाधिः। तस्य वैशारद्ये = पाटवे अध्यात्मप्रसादः = अत्यन्तसत्त्वोद्रेकः भवति। ततः ऋतम्भरा = सत्यमेव विषयीकुर्वती प्रज्ञा जायते। सा च शब्दानुमानविषयाभ्यामन्यविषया, ब्रह्मणः शक्त्या शब्दबोध्यत्वाभावात् अनुमानाद्यविषयत्वाच्च ब्रह्मविषया प्रज्ञेत्यर्थः। विस्तरस्तु ग्रन्थेष्वेव द्रष्टव्य इति शम्।

# अद्वैतवेदान्ते प्रत्यक्षलक्षणविचारः

प्रो. शुद्धानन्दपाठकः

प्रत्यक्षलक्षणविचारेऽस्मिन् प्रत्यक्षपदस्य त्रिषु विषयेषु प्रयोगो जायते यथा प्रत्यक्ष्यते इति प्रत्यक्षमर्थात् ज्ञानम्। प्रत्यक्ष्यते अनेनेति प्रत्यक्षमर्थात्प्रमाणम्। अक्षमक्षं प्रति वर्तत इति प्रत्यक्षमर्थाद् विषयः। अत्र वेदान्तपरिभाषायां ज्ञानगतप्रत्यक्षत्वप्रयोजकं विषयगतप्रत्यक्षत्वप्रयोजकमाधारीकृत्य चर्चा चलति। इतः पूर्वं तार्किकोक्तं 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं तदिन्द्रियजन्यत्वादिज्ञानं प्रत्यक्षत्वस्य न प्रयोजकं यतो हि ईश्वरप्रत्यक्षेऽव्याप्तं तथाऽनुमितौ अतिव्याप्तमतः वेदान्ते किं प्रत्यक्षत्वस्य प्रयोजकमिति प्रश्नः उदेति तदा समाधीयते ज्ञानगतप्रत्यक्षत्वस्य प्रयोजकमस्ति प्रमाणचैतन्यविषयचैतन्ययोरभेदस्यैव तत्प्रयोजकत्वमिति। वेदान्ते चैतन्यैकत्वात्कथमत्र चैतन्यस्य भेदः कथ्यते? तत्रोत्तरं दीयते स्वरूपतश्चैतन्यस्याभेदेप्यौपाधिकभेदमादाय चैतन्यस्य भेदो वर्तते यथा अन्तःकरणावच्छिन्नचैतन्यं प्रमातृचैतन्यं, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यं, घटाद्यवच्छिन्नचैतन्यं विषयचैतन्यमिति। अनेन प्रकारेण चैतन्यं त्रिविधं भवति

यथा तडागोदकं कुल्यात्मना केदारान् प्रविश्य केदाराकारमायाति तथा तैजसमन्तःकरणं घटादिचक्षुसंयोगे सति चक्षुर्द्वारेण निर्गत्य घटादिविषयाकारेण परिणमते। तादृशपरिणाम एव वृत्तिरूपप्रमाणमुच्यते। ततश्च विषयावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यस्य च एकता भवति, घटवृत्तिरूपोपाध्योर्बहिरेकत्रावस्थानेन भेदकत्वाऽभावात्। अत एव मठान्तर्वर्तिघटावच्छिन्नाकाशो मठाकाशान्न भिद्यते। तथा च "अयं घटः" इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यतद्वृत्त्यवच्छिन्नचैतन्यस्याऽभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वं भवति, न तु

घटरूपांशे न च घटपरिमाणांशे प्रत्यक्षत्वं भवतीति। अन्यदपि सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमतः एकदेशस्थितोपाधिद्वयावच्छिन्नत्वान्नियमतः 'अहं सुखी' इत्यादिज्ञानस्य प्रत्यक्षत्वं भवति।

अनुमितिस्थले तु वन्ह्याकारवृत्तेर्बहिर्निगमनाऽभावेन चक्षुराद्य-सन्निकर्षाद् वन्हिविषयकं ज्ञानं न प्रत्यक्षम्, तत्रोपाध्योर्भिन्नभिन्न-देशस्थितत्वात्।

न चैवं स्ववृत्तिसुखादिविषयकस्मरणस्यापि सुखाद्यंशे प्रत्यक्षं स्यादिति वाच्यम्, स्मृतसुखस्याऽतीतत्वेन वृत्तेश्च वर्तमानतयोपाध्योर्भिन्नकालीनत्वेन तत्तदवच्छिन्नचैतन्ययोरपि भेदात् उपाध्योरेकदेशस्थत्वे सति एककालीन त्वस्यैवोपधेयाभेदप्रयोजकत्वस्य स्वीकारात्। न चैवं तर्हि भिन्न कालीनयोरेकदेशस्थितयोर्घटमठयोर्भेदकत्वापत्तिः। उपधेयाभेदकाले उपाध्योः एककालत्वविवक्षायान्तु उपधेयाभेदसिद्धावेककालीनोपाधिद्वयावच्छेदसिद्धि स्तत्सिद्धौ चोपधेयाभेदसिद्धिः इत्यन्योन्याश्रयश्च स्यादिति वाच्यम्, विषये वर्तमानत्वविशेषणदानेन अदोषात् तथा च प्रमाणचैतन्यस्य वर्तमानकालीन विषयावच्छिन्नचैतन्याभेदः प्रत्यक्षप्रयोजकः इति फलितम्। न च वर्तमानस्य विषयविशेषणत्वेऽपि धर्माधर्मविषयकशाब्दादिज्ञानेऽतिव्याप्तिः, तयोर्वर्तमानत्वादिति वाच्यम्, योग्यत्वस्यापि विषयविशेषणात्। एवञ्च धर्मादेरयोग्यत्वान्न तत्राऽतिव्याप्तिः। तथा च तत्तदिन्द्रिययोग्यवर्तमान-विषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यविच्छन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।

अधुना विषयगतप्रत्यक्षत्वस्य प्रयोजकविषये चर्चा क्रियते। तत्र इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति स्वीकारेऽनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः, ईश्वरज्ञानस्याऽनिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्चेत्यादियुक्त्या इन्द्रियार्थसन्निकर्षजन्यत्वं प्रत्यक्षत्वप्रयोजकं वेदान्तिभिर्निरस्तम्। तर्हि प्रत्यक्षत्वप्रयोजकं किमिति जिज्ञासायां ज्ञानगतप्रत्यक्षत्वप्रयोजकं पूर्वं प्रतिपादितमधुना विषयगतप्रत्यक्षत्वप्रयोजकं किमिति प्रतिपाद्यते। तत्र घटादेः विषयस्य प्रत्यक्षत्वप्रयोजकं नाम प्रमातृचैतन्याऽभिन्नत्वम्। ननु घटमहं

पश्यामीति भेदाऽनुभवविरोधेन घटावच्छिन्नचैतन्यस्य प्रमात्रभिन्नत्वं, जडत्वेन घटादेर्विषयस्य वा प्रमात्रभिन्नत्वं कथं सम्भवेदिति चेन्न, तत्राऽभिन्नत्वपदेन प्रमातृसत्ताऽतिरिक्तसत्ताकत्वाभावस्य विवक्षितत्त्वात्। तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्ताऽतिरिक्तायाः आरोपितसत्तायाः अनङ्गीकारात्। विषयचैतन्यस्य तडागोदकस्य कुल्यात्मना निर्गमनरीत्याऽन्तःकरणस्य निर्गमनसम्भवेन तदवच्छिन्नचैतन्याऽभिन्नत्वमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटोदेरपरोक्षत्वम्।

अनुमित्यादिस्थले त्वन्तःकरणस्य वन्ह्यादिदेशनिर्गमनाभावेन वन्ह्यवच्छिन्नचैतन्यस्य प्रमातृसत्ता अनात्मकतया वन्ह्यादिसत्ता प्रमातृसत्तातो भिन्नेति न तत्राऽतिव्याप्तिः। एवं धर्माऽधर्मादेरनुमित्यादिस्थले धर्मादीनां प्रत्यक्षत्वापत्तिवारणाय योग्यत्वस्यापि विषयविशेषणं देयम्। तथा च योग्यविषयस्य प्रमात्रभिन्नत्वलक्षणस्य प्रत्यक्षत्वस्य धर्मादावभावान्नाति-व्याप्तिरिति।

न चैवं 'रूपी घट' इति घटगतरूपप्रत्यक्षदशायां तद्गतपरिमाणादेरपि प्रत्यक्षत्वापत्तिः, घटगतरूपपरिमाणादीनां समानचैतन्याऽध्यस्तत्वेनैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेददशायां परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नत्वेन परिमाणादिसत्तायाः प्रमातृसत्ताऽतिरिक्तसत्ताकत्वाभावादिति वाच्यम्, तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन तत्र परिमाणाद्याकारवृत्त्युपहितप्रमातृसत्ता ऽतिरिक्तसत्ताशून्यत्वाभावान्नातिव्याप्तिः।

एवञ्चानवस्थाभयेन वृत्तिगोचरवृत्त्यनङ्गीकारेऽपि घटमहं जानामि इति वृत्तेर्वृत्त्यन्तराऽनपेक्षत्वरूपस्य स्वविषयत्वस्याऽभ्युपगमेन स्वविषयवृत्त्यु-पहितप्रमातृचैतन्यसत्ताऽभिन्नसत्ताकत्वस्य तत्राऽपि सत्त्वान्नाऽव्याप्तिः। न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाऽभ्युपगमे केवलसाक्षिविषयत्वाऽभ्युपगम-विरोधः इति वाच्यम्, केवलपदं न वृत्तिनिरासार्थमपि तु इन्द्रियानुमानादिप्र माणव्यापारनिवृत्यर्थमिति स्वीकारे विरोधाऽभावात्। अत एवाहंकारटीकाया-माचार्यप्रकाशात्मयतिभिरहंवृत्त्यवच्छिन्नमेवाऽन्तःकरणं चैतन्यविषयभावमापद्यते

इत्यादिना अहमाकारान्तःकरणवृत्तिरङ्गीकृता। अत एव प्रातिभासिकरजतस्थले रजताकाराऽविद्यावृत्तिः सर्वज्ञमुनिना स्वीकृता। तस्माद् घटादिविषयाकारवृत्त्यु-पहितप्रमातृचैतन्यसत्ताऽतिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्। तत्र संयोगः संयुक्ततादाम्यः संयुक्ताभिन्नतादात्म्यसम्बन्धानां चैतन्याऽभिव्यञ्जकवृत्तिजनने विनियोगः इति।

विषयगतप्रत्यक्षस्य चैतन्याऽभिव्यञ्जकवृत्तिजनने संयोगसम्बन्धः स्वीक्रियते। विषयगतरूपप्रत्यक्षस्य कृते चैतन्याऽभिव्यञ्जकवृत्तिजनने संयुक्ततादात्म्यसम्बन्धो भवति। विषयगतरूपत्वप्रत्यक्षस्य कृते चैतन्याभिव्य-ञ्जकवृत्तिजनने संयुक्ताभिन्नतादाम्यसम्बन्धः स्वीक्रियते। घटाभाववद्रूपत्व मित्यत्र चैतन्याऽभिव्यञ्जकवृत्तिजने नैयायिकवत् यदि घटाभावस्य विशेष णरूपत्वस्वीकारे। संयुक्ताभिन्नतादात्म्यविशेषणतासम्बन्धो भवति। घटाभावस्याऽधिकरणस्वरूपतास्वीकारे संयुक्ताऽभिन्नतादात्म्यसम्बन्धः स्वीक्रियते। रूपत्वे घटाभावः'' इत्यत्र घटाभावस्य विशेष्यतास्वीकारे संयुक्ताभिन्नतादात्म्यविशेष्यता सम्बन्धः स्वीक्रियते यदि अधिकरणस्वरूपता स्वीक्रियते चेत् संयुक्ताऽभिन्नतादात्म्यसम्बन्धः एव स्वीकर्तुं शक्यते। शब्दगतप्रत्यक्षत्वस्य कृते चैतन्याऽभिव्यञ्जकवृतिजनने तादात्म्यसम्बन्धो भवति तथा च शब्दत्वगतप्रत्यक्षत्वस्य कृते अभिन्नतादात्म्यसम्बन्धः स्वीक्रियत इति। शम्।

# विशिष्टाद्वैतवेदान्तानुसारेण प्रत्यक्षस्वरूपम्

प्रो. के. ई. देवनाथन्

प्रत्यक्षमनुमानं शब्द इति प्रमाणत्रयमभ्युपगच्छन्ति विशिष्टाद्वैतिनः। उक्तं हि मनुना–

**प्रत्यक्षमनुमानं च शास्त्रं च विवधागमम्।**
**त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता।।** इति

शौनकोऽपि "दृष्टानुमानागमजं ध्यानस्यालम्बनं त्रिधा" इति प्राह। श्रुतिश्च स्मृतिः **प्रत्यक्षैतिह्यमनुमानश्चतुष्टयम्** इत चतुष्ट्वानुवादः न विरुध्यते। स्मृतिःकरणस्य वस्तुतः पृथक्प्रमाणत्वाभावात्।

**प्रत्यक्षप्रमाया लक्षणम्**

साक्षात्कारिप्रमा प्रत्यक्षम्। साक्षात्त्वं च जातिरूपः उपाधिरूपो वा कश्चित् ज्ञानस्वभाविशेषः स्वात्मसाक्षिकः।

**ज्ञातकरणजज्ञानस्मृतित्वरहिता मतिः।**
**अपरोक्षेति निष्कर्षे नाव्याप्त्यादिप्रसन्जनम्।।**

घटं साक्षात्करोमि, पटं साक्षात्करोमि इति हि अनुभवः लोकानाम्। अयं श्लोकः उपाधित्वपक्षे। तत्पक्षे ज्ञातकरणजज्ञानत्वाभावे सति स्मृतित्वाभावे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणम्। अनुमितिशाब्दबोधयोः वारणाय प्रथमदलम्, स्मृतेः वारणाय द्वितीयदलम्। घटादिवस्तुवारणाय ज्ञानत्वमिति। इन्दियस्यापि ज्ञातत्वं कदाचित् संभवति इति ज्ञातकरणेऽस्मदादिप्रत्यक्षेऽस्मदादिप्रत्यक्षेऽति व्याप्तिः अतः ज्ञायमानत्वावच्छिन्नकरणताकनिरूपकत्वशून्यत्वप्रथमदलार्थः। इन्द्रियस्य ज्ञायमानत्वेन कारणत्वं नास्तीति यावत्। ज्ञायमानलिङ्गशब्दयोः करणत्वाभिप्रायेणेदम्, ज्ञानस्य करणत्वपक्षे तु ज्ञानकरणकस्मृतित्वरहितामतिः इति पठनीयम्। साक्षात्त्वं द्विधा नित्यमनित्यं च। ईश्वरनित्यज्ञानादिनिष्ठं

नित्यम्। अस्मदादिज्ञाननिष्ठं त्वनित्यम्। अस्मदादिप्रत्यक्षं द्विधा योगिप्रत्यक्ष मयोगिप्रत्यक्षं चेति। तत्र योगिप्रत्यक्षं प्रकृष्टादृष्टाविशेषजन्यम्। तत् युक्ता वस्थायां मनोमात्रजन्यम्। वियुक्तावस्थायां तु बाह्येन्द्रियजन्यमपि। तच्च बुभुत्सादिप्रतिनियतम् आगमैकसिद्धं च। इन्द्रियार्थसन्निकर्षः द्विधाविभक्तः। द्रव्येषु संयोगः। द्रव्याश्रितेषु रूपादिषु संयुक्ताश्रयणम्। उक्तं च तत्त्वरत्नाकरे

**अत्र वृद्धा विदामासुः संयोगः सन्निकर्षणम्।**
**संयुक्ताश्रयणं चेति यथासँभवमूह्यताम्।** इति भट्टपराशरैः

**प्रत्यक्षं पुनरपि द्विविधम् सविकल्पकं, निर्विकल्पकं चेति।**

सप्रत्यवमर्शं प्रत्यक्षं सविकल्पकं संस्काराधीनविषयताश्रयः संस्कार जन्यप्रत्यक्षम् इति यावत्। संस्कारप्रयोज्यविषयत्वानिरूपकं प्रत्यक्षं निर्विकल्पकम्। निर्विकल्पकमपि विशिष्टविषयकमेव। मूकादिज्ञानमपि संज्ञादि विकल्परहितमपि विशिष्टवस्तुविषयकमेव। विशिष्टज्ञानं विशेषणज्ञानपूर्वकम् विशिष्टज्ञानत्वात्, सुरभिचन्दनम् इति ज्ञानवत् इत्यनुमाने विशेषणाग्राहकेन्द्रिय ग्राह्यविशेषत्वमुपाधिः। विशेषणाग्राहकत्वं च विशेषणनिष्ठलौकिक विषयताशालिप्रत्यक्षाजनकत्वम्। तेन चक्षुषः सौरभापनीतभानहेतुत्वेऽपि न क्षतिः। स्वरूपग्रहणेनैव सम्बन्धस्य गृहीतत्वात् न तद्ग्रणात् पूर्वं निष्प्रकारक ज्ञानस्य संभवः। समवायवादेऽपि तस्यैव गृह्यमाणस्य भासमानवैशिष्ट्यं प्रतियोगित्वानुयोगित्वसम्पादकत्वम्। योग्यस्य सन्निकृष्टगृह्यमाणसम्बन्धिनः सम्बन्धस्याग्रहणानुपपत्तेः निर्विकल्पके सम्बन्धग्रहणमुपपद्यत एव। अन्यथा नित्यं तदग्रहापातात्। प्रथमाक्षसन्निपातजन्याबुद्धिः विशिष्टविषया, बुद्धित्वात्, संप्रतिपन्नवत् इत्यनुमानमपि सिद्धान्तानुगणं ग्राह्यम्।

सविकल्पकं न प्रत्यक्षमिति केचित्। तत्र साक्षात्कारित्वबाधा भावेन तस्यापि प्रत्यक्षत्वस्य युक्तत्वात्। ''निर्विकल्पकमेकजातीयेषु द्रव्येषु प्रथमपिण्डग्रहणम् ''इतिभाष्यम् उदाहरणपरं योजनीयम्। इदं लक्ष्य विशेषप्रदर्शनपरमेव। इदमेव लक्षणकथनं चेत्। अनुवृत्तविषयेषु सेयं गौः सुरभिचन्दनम् इत्यादिज्ञानेषु सविकल्पकत्वानुपपत्तिः स्यात्।

निर्विकल्पकमपि सविशेषविषयकं चेत्, निर्विकल्पकमिति शब्दः

कथं तत्र युज्यत इति चेत्, अल्पधने दारिद्रव्यवहारवदिति। प्रज्ञापरित्रणे

**अत्रेन्द्रियानपेक्षं यज्ज्ञानमर्थावभासकम्।**
**दिव्यं प्रमाणमित्येतत् प्रमाणज्ञाः प्रचक्षते।।**

**परमेश्वरविज्ञानं मुक्तानां च धियस्तथा।**
**सञ्जयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत्।।** इति

अदिव्येन्द्रियानपेक्षं ज्ञानं कथितम्। तत् आर्षाभिमतं योगिप्रत्यक्षेऽन्तर्भवति सञ्जयार्जुनयोः यत् दिव्यं प्रत्यक्षं तत्र अप्राकृतेन्द्रियजन्यम् इति यावत् निर्विकल्पकशब्देन संस्कारनिरपेक्षेन्द्रियजन्यं ज्ञानं विवक्षितम् इति कथनेन भाट्टसम्मतं सम्मुग्धाकारत्वं, नैयायिकसम्मतं प्रकारताविशिष्टज्ञानत्वादिरूपं, प्राचीननैयायिकसम्मतं जातिमात्राविषयकज्ञानत्वं च न विशिष्टाद्वैतिसम्मतमिति लभ्यते। भवतः यज्ज्ञानं तत् करणनिरपेक्षमेव जायते यो वेति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः। इति श्रीनाथमुनिपद्यानुसारात्। एवं न्यायपरिशुद्ध्यनुसारेण संक्षेपः कृतः।।

# अद्वैतवेदान्ते वृत्तिनिर्गमनप्रयोजनम्

डॉ. सतीशः के एस्

अद्वैतवेदान्ते ज्ञानं परं ब्रह्मैव। सत्यं ज्ञानमनन्तं ब्रह्म[1], विज्ञानमानन्दं ब्रह्म[2] इत्यादिश्रुतेः। एतदनाद्यनन्तम्। एतदेव यदा विषयाकारबुद्धिवृतौ प्रतिफलति तदा घटादितद्विषयबोधो भवति। तस्या अपि आत्मचैतन्य-प्रफिलनग्राहकबुद्धिवृतेर्ज्ञानमिति व्यवहारो भवति[3]। विषयाकारबुद्धिपरिणाम एव वृत्तिशब्दग्राह्यः। अद्वैतवेदान्ते प्रत्यक्षप्रमाणम्।

प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्[4]। अद्वैतवेदान्ते सर्वावभासकं स्वयंप्रकाशमात्मचैतन्यमेव प्रत्यक्षप्रमा। यत्साक्षादपरोक्षाद्ब्रह्म[5] इति श्रुतेः। एकमेवेदमुपहितत्वेन रूपेण त्रिविधं व्यवह्रियतेप्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यमिति। तत्रान्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। अन्तःकरण-वृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। विषयावच्छिन्नं चैतन्यं विषयचैतन्यम्।[6] अत एव चैतन्यस्यानादित्वाद्घटादिविषयकं प्रत्यक्षं ज्ञानं चैतन्यरूपं कथं जायते इति संशयो न कार्यः। तस्य स्वाभिव्यञ्जकान्तःकरणवृत्तेर्जायमानत्वेन तस्य जातत्वेन व्यवहारः। अस्य प्रत्यक्षज्ञानस्य प्रयोजकन्तु प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदो तत्करणं प्रत्यक्षप्रमाणम्[7]।

---

1. तैत्तिरीयोपनिषद् - 2/1
2. बृहदारण्यकोपनिषत् - 3/9/28
3. तथापि बुद्धेरुपाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारेण परिणामिन्या ये शब्दाद्याकारावभसास्त आत्मविज्ञानस्य विषयभूता उत्पद्यामाना एवैवात्मविज्ञानेन व्याप्ता उत्पद्यन्ते। तस्मादात्मविज्ञानावभास्या श्च ते विज्ञानशब्दवाच्या श्च - तैतिरीयोपनिषच्छाङ्करभाष्यम्- 2/1
4. वेदान्तपरिभाषा- पृष्ठसंख्या - 43
5. बृहदारण्यकोपनिषत् 3/4/1
6. वेदान्तपरिभाषा - पृष्ठसंख्या- 62
7. वेदान्तपरिभाषा- पृष्ठसंख्या- 61

अयमत्र प्रत्यक्षज्ञानोत्पतिक्रमः – सावयवमन्तःकरणं सूर्यरश्मिवतैज-सत्वाच्चक्षुरादीन्द्रियद्वारा निर्गत्य घटादिविषयं प्राप्य तत्तद्विषयाकारेण परिणमते। मनः सावयवं सादित्वात् घटवत्। अयं विषयाकारान्तःकरणपरिणामो वृत्तिरित्युच्यते। ततश्च तत्तद्विषयावच्छिन्नदेशे विषयतदृत्योरवस्थानं भवति। अन्तःकरणस्य बहिर्निर्गमनाद्वृतेरपि विषयावच्छिन्नचैतन्ये समवधानादुपधेय-योर्विषयावच्छिन्नवृत्त्यवच्छिन्नचैतन्ययोरभेदो भवति। ततस्तद्विषयकज्ञानस्य प्रत्यक्षत्वं भवति, तत्करणं वृत्तिः। घटदेशस्थत्वेन घटावच्छिन्नचैतन्यस्य तद्वृत्यवच्छिन्नचैतन्यस्य चाभिन्नतया तत्र घटज्ञानस्य घटाकारांशे प्रत्यक्षत्वम्। एवमुक्ते सुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिः। सुखाद्यवच्छिन्न-चैतन्यस्यत तद्वृत्त्यवच्छिन्नचैतन्यस्यचैक देशस्थिततत्वेनाभेदात्। ततश्च तत्रातिव्याप्तिः स्यात्। अतो वर्तमानत्वं विषयविशेषणं देयम्। अतः स्मर्यमाणस्य सुखादेरवर्तमानान्न दोषः।

एवमपि धार्मिको भवानधार्मिको भवानित्यादिवाक्यजन्यवृत्यवच्छिन्न-चैतन्यं प्रति धर्माधर्मयोर्वर्तमानत्वेनोपाधितया तस्य तदवच्छिन्नचैतन्याभिन्नतया तत्रातिव्याप्तिः। स्यात्। अतो योग्यत्वमपि विषयविशेषणं देयम्। धर्माधर्मयोः प्रत्यक्षायोग्यत्वान्न दोषः। तथा च ततदिन्द्रिययोग्यवर्तमानविषयावच्छिन्न-चैतन्याभिन्नत्वं तत्तदाकारवृत्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।[8]

## वृत्तिनिर्ममनविचारः

अन्तःकरणस्य विषयाकारपरिणामो वृत्तिरित्युक्तम्। प्रत्यक्षस्थलेऽन्तः करणे चक्षुरादीन्द्रियद्वारा विषयदेशं गत्वा विषयाकारेण परिणमतीत्युक्तम्। तत्कुत एवमिति तन्निर्गमनप्रयोजनमिदानीं निरूप्यते–

प्रत्यक्षस्थले चैतन्यमेव प्रत्यक्षप्रमेत्युक्तम्। वस्तुतस्तु सर्वोऽपि विषयश्चैतन्येनैवावभास्यते। अयं वस्तुप्रकाशश्चैतन्यकृत एव ज्ञानमित्युच्यते। ब्रह्मचैतन्यं च सर्वत्र सुलभमेव। अत इन्द्रियादिसन्निकर्षं विना वृत्तिं विनापि सर्वस्य सर्वदा सर्वविषयकं ज्ञानं भवत्विति कदाचित् प्रश्नो भवेत्। अत्रोच्यते–ब्रह्मचैतन्यं प्रकाशरूपं सदपि स्वसंसृष्टमेवावभासयति।

---

8. वेदान्तपरिभाषा– पृष्ठसंख्या – 82

जीवतैतन्यमपि तन्न्यायेन स्वसंसृष्टमेवावभासयेत्। किन्तु यथा ब्रह्मचैतन्यं सर्वोपादानत्वात् सर्वसंसृष्टं सदवभासयति। न तथा जीवः सर्वजगदुपादानम्। तस्मात् स न सर्वसंसृष्टो विषयमवभासयितुमर्हति।

जीवोऽविद्योपधिक इति पक्षे सर्वगतः। अन्तःकरणोपाधिक इति पक्षे परिच्छिन्नः। अविद्योपाधिकत्वपक्षे तस्य प्रपञ्चानुपादनत्वादसङ्गत्वेऽपि स्वभावतोऽन्तःकरणेन संसर्गो भवति[9]। यथा गोत्वसामान्यमश्वादिव्यक्त्यसङ्ग्यपि स्वभावतः सास्नावद्व्यक्तौ संसृज्यते तद्वत्। तदुक्तम्–

**बुद्धौ संसृज्यते जीवः सर्वगो व्यक्तिजातिवत्।**
**अन्यैस्तु वृत्त्युपारूढो ज्ञाता विवरणे स्थितः।।[10]**

तथा च यदान्तःकरणस्य परिणामो वृत्तिरूपश्चक्षुरादिद्वारा विषयपर्यन्तं निर्गत्य विषयं व्याप्नोति तदा तत्संसृष्टो जीवो विषयसंसर्गलाभेन तत्प्रकाशयति। अतो वृत्तेरात्मचैतन्यस्य विषयसम्बन्धापादकत्वं प्रयोजनम्।

जीवस्यान्तःकरणोपाधिकत्वपक्षे तु जीवः परिच्छिन्नः। अतस्तस्य विषयसंसर्गाभावात्स न घटादिकमवभासयति। वृत्तिद्वारा यदा विषयसंसर्गस्तदा तत्संसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ तं प्रकाशयतीत्यभेदाभिव्यक्तिर्वृत्तेः प्रयोजनम्।

जीवस्य सर्वगतत्वपक्षेऽपि तस्याविद्यावृत्तत्वाद्विषयस्याप्यविद्यावृत्तत्वाद्विषयप्रकाशः। वृत्त्या तु विषयसम्बन्धेनावरणतिरोभावे सत्यभेदाभिव्यक्त्या विषयं प्रकाशयतीत्यावरणाभिभवार्था वृत्तिरित्युच्यते। तदुक्तम्–

**अथवा सर्वगोऽविद्यावृतोऽसौ न प्रकाशते।**
**बुद्धावनावृतो वृत्तिभग्नावरणभासकः।।[11]** इति।

---

9. सिद्धान्तलेशसंग्रहः, प्रत्यक्षपरिच्छेदः, पृष्ठसंख्या – 146
10. वेदान्तसूक्तिमञ्जरी, 1/62
11. वेदान्तसूक्तिमञ्जरी, 1/64

# वेदान्तदर्शने प्रत्यक्षप्रमाणम्

डॉ. जवाहरलालः

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति प्रमाणशास्त्रस्याभिमतम्। यथा गौतमसूत्रम् ''इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्'[1]। सूत्रेऽस्मिन् चक्षुःसन्निकृष्टेषु मरुमरीचिकाषु जायमानस्य उदकमिति भ्रमात्मकस्य ज्ञानस्य प्रत्यक्षत्ववारणाय अव्यभिचारि पदं प्रदत्तं। अतस्मिंस्तदिति ज्ञानं व्यभिचारि। अथ सूत्रस्थाव्यपदेश्यपदेन निर्विकल्पकं प्रत्यक्षं, व्यवसायात्मकमित्यनेन सविकल्पकं प्रत्यक्षं चोच्यत इति। पं. केशवमिश्रेणापि "साक्षात्कारिणी च प्रमा सैवोच्यते येन्द्रियजन्या"।।[2]

''साक्षात्प्रतीतिः प्रत्यक्षम्''[3] इति प्रत्यक्षलक्षणम्। अत्र लक्षणे प्रयुक्तस्य साक्षात् पदस्य नन्दीश्वरेण प्रभाकरविजये त्रिधा व्याख्या कृता।''[4] तत्रादौ–

1. साक्षात्प्रतीतिः स्वरूपप्रतीतिः। स्वस्यैव रूपं स्वरूपम्। असाधारणरूपमित्यर्थः।

2. यद्वा अव्यवहितप्रतीतिः साक्षात्प्रतीतिः। अव्यवहितत्त्वं नाम स्वविषयानन्तर्गतज्ञानान्तराव्यवहितत्त्वमभिप्रेतम्।

3. साक्षात्त्वं स्वकालाकलितवस्तुसत्त्वावबोधकत्वं, यत्कालीनं ज्ञानं तत्कालसंबंधिवस्तुविषयमित्यर्थः।

अत्र चोदना प्रमाणमिति नियमप्रतिष्ठापनार्थः लौकिकवाक्याप्रामाण्यं,

---

1. न्यायसूत्रम् 1-1-4
2. तर्कभाषा प्र प.
3. प्रकरणपञ्चिका 146
4. प्रभाकरविजयः 26

अख्यातिवादमुपस्थापयन्ति प्रभाकराः इति अयं विशेषः। तन्त्ररहस्यकारस्तु ''साक्षात्प्रतीतिः प्रत्यक्षं इत्यत्र साक्षात्त्वं चापरोक्ष्यं विशदावभास इति। तच्च सर्वसंवित्तीनाम् आत्मस्वात्मांशयोः।''[5] तत्र मीमांसादर्शने इन्द्रियाणां विषयैः सह संयोगे सति पुरुषस्य या बुद्धिः जायते तत् प्रत्यक्षम्[6] तथा च सूत्रम् ''सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भत्वात्''[6] लक्षणमिदं भ्रमात्मके ज्ञानेऽपि वर्तते एव। अतः शास्त्रदीपिकायां भट्टपादेन उद्घाटितं-तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म-सत्प्रत्यक्षम्''[7]। एवं मानमेयोदयकारेणापि 'इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षम्''[8] तत्र गागाभट्टेन भाट्टचिन्तामणौ' त्रीणि प्रत्यक्षलक्षणानि उक्तानि[9]—इन्द्रियार्थ-सम्बन्धजन्यं ज्ञानं प्रत्यक्षमिति सूत्रकारः। 2. ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। 3. जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा।

वेदान्तिनां मते तु इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति नेदं प्रत्यक्षलक्षणं भवितुमर्हति। मनोरूपेन्द्रियजन्यत्वेन स्मृत्यादीनां प्रत्यक्षत्व प्रसङ्गात् मनसः अनिन्द्रियत्वे सुखदुःखादिमानसप्रत्यक्षे लक्षणस्याव्याप्तिः। सुखादीनां मनोजन्यत्वात्। ईश्वरस्यापि इन्द्रियाभावात् ईश्वरप्रत्यक्षे अव्याप्तमेव लक्षणम्। अत्र ध्यातव्यं यत् वेदान्तिष्वपि प्रत्यक्षप्रमाणस्वरूपविषये प्रस्थानभेदेन भेदः दरीदृश्यते। तत्रैकं मतं मानाधीनामेयसिद्धिः इति न्यायमतमनुसृत्य ज्ञानमाश्रित्य प्रत्यक्षलक्षणं प्रतिपादयति। प्रत्यक्षप्रमाणेन प्रत्यक्षज्ञानं तद्द्वारा विषयप्रत्यक्षम्। तद्यथा प्रत्यक्षप्रमाणजन्यं ज्ञानं प्रत्यक्षं प्रमा।''[10] एतादृश प्रत्यक्षज्ञानस्य विषयत्वं च विषयगतप्रत्यक्षत्वम्। अपरन्तु एतद् वैपरीत्ये विषयमाश्रित्य प्रत्यक्षं प्रतिपादयति। विषयस्य प्रत्यक्षत्वमादौ प्रतिपाद्य प्रत्यक्षज्ञानं तद्द्वारा च प्रत्यक्षं प्रमाणं निर्धारयन्ति। तद्यथा साक्षादपरोक्षविषयस्यैव विषयगतप्रत्यक्षत्वं प्रत्यक्षविषयमवलम्ब्य यज्ज्ञानमुदेति तत् प्रत्यक्षज्ञानम्। तत् प्रत्यक्षज्ञानस्य साक्षात् साधनं च प्रत्यक्षप्रमाणमिति।

---

5. तन्त्ररहस्यम् 5
6. मीमांसादर्शनम् 1/1/4
7. शा. दीपिका
8. मानमेयोदयम्
9. भाट्टचिंतामणिः
10. वेदान्त परिभाषा प्र परिच्छेदः

विषयमाश्रित्य ज्ञानमुदेति इत्यस्मिन् पक्षे "विषयजन्यं ज्ञानं प्रत्यक्षम् इति लक्षणं क्रियते चेत् मनोविशेष्यकानुमितौ प्रत्यक्षत्वप्रसङ्गः। मनः इन्द्रियं प्रत्यक्षज्ञानकरणत्वात् चक्षुरादिवदित्यत्र मनसः इन्द्रियत्वेन विषयत्वं सिद्धम्। अथ च मनोविशेष्यकानुमितेः मनोरूपविषयजन्यत्वेन तत्र लक्षण-स्यातिव्याप्तिः। सुखादिप्रत्यक्षेऽपि पुनः लक्षणस्याव्याप्तिः स्यादेव। वेदान्तिनां मते सुखं सुखाद्याकारावृत्तिश्च युगपदुदेति सुखाद्याकारावृत्तिः पुनर्न सुखरूपवृत्तिजन्या। युगपदुत्पन्ना जन्यजनकभावाभावाद्। पुनः तत्रोक्तलक्षणे ज्ञानं जन्यं, विषयः जनकः जनकतावच्छेदकं विषयत्वमित्यत्र विषयत्वरूपधर्मस्य अनुमेयेषु विषयेषु वह्न्यादीनामपि विद्यमानतात्वमस्त्येव। तत्र पुनः प्रत्यक्षज्ञानविषयत्वमवच्छेदकं स्वीक्रियते चेत् तर्हि प्रत्यक्षज्ञानं प्रति प्रत्यक्षविषयत्वं, प्रत्यक्षविषयत्वं प्रति प्रत्यक्षज्ञानं कारणम् अतः अन्योन्याश्रयप्रसक्तिः। अतः विषयाश्रितं प्रत्यक्षलक्षणं न युक्तियुक्तम्। ज्ञानमाश्रित्य प्रत्यक्षलक्षणं क्रियते चेत् यथा "यत् ज्ञानं ज्ञानान्तरेण न जन्यं तत् प्रत्यक्षम्। ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्[12] यथा भाट्टैः स्वीकृतम्। तर्हि अनुमानादीनि ज्ञानान्तरपूर्वकमेव जायन्ते न प्रत्यक्षं तथा विषयेन्द्रियसंयोगजन्यत्वाद् अतः प्रत्यक्षस्य ज्ञानाकरणकत्वम्। पुनः तत्र अनुमित्यादीनि ज्ञानानि ज्ञानकारणकानि। दण्डिपुरुष इति प्रत्यक्षज्ञानं न ज्ञानाजन्यं दण्डज्ञानपूर्वकत्वात्।

पुनः स्मृतावपि लक्षणस्यातिव्याप्तिप्रसक्तिः। स्मृतिज्ञानं प्रति संस्कारः कारणम्। ज्ञातविषयकं ज्ञानं स्मृतिरिति[13]। संस्कारः न ज्ञानम्, अतः स्मृतिः न ज्ञानपूर्वकम्। अतः मतमिदमपि नास्ति समीचीनम्। तत्र वेदान्तपरिभाषाकारेण प्रतिपादितं यत् प्रमाकरणं प्रमाणम् इत्यनेन "प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम् एतेषां मते प्रत्यक्षप्रमा चात्र चैतन्यमेव "यत्साक्षादपरोक्षात् ब्रह्म[15]। अद्वैतमते ज्ञानं स्वप्रकाशं स्वतःप्रमाणञ्चेति। ज्ञानस्यापरोक्षत्वं प्रत्यक्षत्वं वा स्वाभाविकम्।

11. प्रमाणसमुच्चयः
12. भाट्टचिन्तामणिः
13. तर्कभाषा
14. वेदान्तपरिभाषा
15. बृ. उपनि.

अस्ति चेत् ज्ञानं प्रमाणान्तरनैरपेक्ष्येण स्वतः अपरोक्ष्येण ज्ञायते। तदेव ज्ञानं प्रत्यक्षज्ञानम्। अत्र ज्ञानत्वं प्रत्यक्षत्वमुच्यते चेद् अनुमित्यादेः ज्ञानत्वात् प्रत्यक्षत्वापत्तिः। तर्हि समाधीयते अत्र विशिष्टस्य ज्ञानस्यास्ति अंशद्वयं ज्ञानांशः विषयांशश्चेति। यथा घटविषयके ज्ञाने अयं घटः इति ज्ञानं विषयांशः घटमहं जानामि इति ज्ञानं ज्ञानांशः। ज्ञानांशे विषयांशः अध्यस्तः भवति ज्ञानस्य प्रत्यक्षेण घटादि- विषयाणामपि प्रत्यक्षं भवति। तत्र ज्ञानांशस्य नित्यत्वात् स्वप्रकाशत्वाच्च। तत्प्रत्यक्षे चक्षुरादीनां करणानां नास्त्यपेक्षा। विषयांशस्य प्रत्यक्षे पुनः चक्षुरादीनां करणानामुपादेयता तु अस्ति एव। अतः विषयांशप्रत्यक्षे चक्षुरादीनां करणत्वं सिद्धम्। अत एव प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणमिति प्रत्यक्षप्रमाणलक्षणं घटितम्। प्रत्यक्षघटज्ञानस्य विषयः घटः, यश्च चक्षुरादीन्द्रिय प्रतीतिभूतः। अनुमेयवह्निज्ञानस्य विषयः वह्निः स च वह्निः न चक्षुरादिप्रतीतिभूतः। अतः अनुमित्यादेः नास्ति प्रत्यक्षत्वापत्तिः।

ज्ञानं तु सदैव प्रत्यक्षं स्वप्रकाशं नित्यत्वाच्च नास्ति तत्र करणापेक्षा ज्ञानस्य प्रत्यक्षत्वपरोक्षत्वादिव्यवहारस्तु विषयस्य प्रत्यक्षतां परोक्षतां ज्ञाने आरोप्य एव भवति। अत एव स्वप्रकाशं ज्ञानमेव मुख्यं प्रत्यक्षं घटादिप्रत्यक्षं तु गौणम्। अस्मिन् गौणप्रत्यक्षे इन्द्रियं करणम्। अतः इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति वक्तुं शक्यते गौणप्रत्यक्षम्। विषयप्रत्यक्षे पुनः ज्ञानांशः अखण्डज्ञानस्येव अंशः नित्यत्वात् चक्षुरादिकरणानां कः उपयोगः? नहि ज्ञानं चक्षुरादिना गृह्यते, अपितु विषयः एव। विषयस्य च जड़त्वात् ज्ञानभिन्नत्वाच्च प्रमाकरणं प्रमाणं इति लक्षणं कथं समन्वयः? उच्यते-स्वरूपचैतन्यस्य अखण्डत्वेऽपि घटादिविषयकं यद् ज्ञानं जायते तन्न नित्यम्। तच्च विषयावच्छिन्नं ज्ञानं चक्षुरादीन्द्रियैः जन्यते, घटादिविषयक ज्ञानम् इन्द्रियजन्यमेव। अद्वैतमते ज्ञानम् अन्तःकरणवृत्तिः। तथा चक्षुरादीन्द्रिय द्वारा बहिर्निर्गच्छत् अन्तःकरणं विषयदेशं गत्वा विषयाकारेण रूपेण परिणमते। अयं चान्तःकरणस्य विषयाकारः परिणामः वृत्तिः उच्यते। सा च वृत्तिः इन्द्रियजन्या। तया वृत्या घटादिविषयमावरणं दूरीकृत्य विषयः इन्द्रियगोचरः क्रियते। अनया रीत्या एव घटस्य प्रत्यक्षं भवति। अतः विषयेन्द्रियसंयोगे सति अन्तःकरणवृत्तिरूदेति इति, इन्द्रियजन्या वृत्तिः, वृत्तिजन्यं च ज्ञानम् इति।

वस्तुतः, इन्द्रियं न घटादिज्ञानकरणम्, घटादिज्ञानस्य अन्तः करणवृत्तिजन्यत्वात् एवं च जडघटादिविषयांशे चक्षुरादीन्द्रियाणां करणत्वेऽपि तेषां प्रमाकरणं प्रमाणम् इत्येवं प्रमाणलक्षणं युक्तमेव। प्रत्यक्षस्य द्वैविध्यम्- घटाद्यंशे प्रत्यक्षं द्विविधम् सविकल्पकं प्रत्यक्षं निर्विकल्पकं प्रत्यक्षञ्चेति। वैशिष्ट्यावगाहिज्ञानं सविकल्पकम्। वैशिष्ट्यन्तु विशेषणविशेष्ययोः संबंधः। अतः सविकल्पकमिति लक्ष्यं वैशिष्यट्यावगाहिज्ञानमिति लक्षणम्। लक्षणे तत्र पदद्वयं वर्तते। वैशिष्ट्यावगाहिज्ञानञ्च। निर्विकल्पके अतिव्याप्तिवारणाय वैशिष्ट्यावगाहीति, इच्छादावतिव्याप्तिवारणाय ज्ञानमिति पदं प्रयुक्तम्। यथा घटमहं जानामि इत्यत्र घटविषयज्ञानवान् अहम् इत्यस्मिन् घटविषयकसाक्षात्कारे अहं विशेष्यतया घटज्ञानं विशेषणतया। तयोः घटज्ञानाहंकारयोः सम्बन्धश्च संसर्गतया भासते। घटे च घटत्वं विशेषणमतः घटघटत्वयोः सम्बन्धच संसर्गतया भासते। अतः विशेषणे विशेषणं यत तत् विशेषणतावच्छेदकम्। तथा विशेषणतावच्छेदकं प्रकारकं ज्ञानं वैशिष्ट्यावगहिज्ञानं सविकल्पकं प्रत्यक्षम् अनुव्यवसायात्मकम्।

संसर्गानवगाहिज्ञानं निर्विकल्पकं प्रत्यक्षम्। संसर्गो नाम विशेष्य-विशेषणयोः सम्बन्धः। विशेषणविशेष्यसम्बन्धाविषयकं ज्ञानं निर्विकल्पकम्। अर्थात् यस्मिन् ज्ञाने विशेष्यं विशेषणं तयोः सम्बन्धश्च इत्येतत् त्रयो विषयाः न भवन्ति तद् ज्ञानं निर्विकल्पकम्। यथा सोऽयं देवदत्तः इति लौकिकवाक्यजन्यं ज्ञानम्।[16] तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानं वैदिकम्।[17] तच्च निर्विकल्पकं ज्ञानं चक्षुःसंयोगादनन्तरं जायमानमपि न प्रत्यक्षानुव्यवसाय-विषयं भवति।

---

16. वे. परि
17. वे परि.

# प्रत्यक्षप्रमाणम्

कू. वेङ्कटेशमूर्तिः

ज्ञानादेव तु कैवल्यमिइत्यादिश्रुत्या ज्ञानादेव हि मोक्ष इत्यवगम्यते।

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।।'

इति गीतासु च ज्ञानान्मुक्तिरिति निरूपितम्। तच्च ज्ञानं प्रमात्मकं भवति। प्रमाकरणं प्रमाणं प्रमाणानि च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धि-भेदेन षडिति ब्रह्माद्वैतवादिनां वेदान्तिनामभिमतम्। तानीमानि प्रमाणान्यधिकृत्य श्रीमद्धर्मराजाध्वरीन्द्रः वेदान्तपरिभाषाख्ये स्वीये ग्रन्थे व्यवृणोत्। तत्र च अष्टप्रकरणानि विद्यन्ते यत्र आद्यानि षट्प्रमाप्रमाणनिरूपणपराणि, प्रकरणद्वयं चान्ते विषयप्रयोजनप्रतिपादकम्। तत्रादौ प्रत्यक्षपरिच्छेदे ज्ञानगतप्रत्यक्षत्वं विषगतप्रत्यक्षत्वं च सम्यङ्निरूपितम्। एवं तार्किकाभिमतसामान्यलक्षणा ज्ञानलक्षणाप्रत्यासत्त्योः निराकरणञ्च विशेषेणोपलभ्यते। मनसः इन्द्रियत्वनिरा करणपूर्वकं मानसप्रत्यक्षं सर्वं साक्षिज्ञानमेव इति निरूपितम्। प्रकृतं तावदत्र प्रत्यक्षप्रमाणमधिकृत्य सङ्ग्रहेण प्रस्तूयते। प्रत्यक्षप्रमा चात्र चैतन्यमेव, 'यत् साक्षादपरोक्षात् ब्रह्म' इति श्रुतेः। इन्द्रियसन्निकर्षादिजन्या अन्तःकरणवृत्तिस्तु ज्ञानाभिव्यञ्जकत्वात् प्रमेत्युपचर्यते। तस्याञ्च जन्यत्वात् तत्करणस्य चक्षुरादेः प्रमाणत्वम्। वृत्तिज्ञानं मनोधर्मः 'कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतसर्वं मन एव' इति श्रुतेः। तत्र धीशब्दो वृत्त्यभिधायी।

ज्ञाने विषये च प्रत्यक्षत्वव्यवहारोऽस्ति। तत्राद्ये वृत्तिचैतन्ये विषयचैतन्याभेदो नियामकः। द्वितीये विषये प्रमातृचैतन्यसत्तातिरिक्तसत्ता-

शून्यत्वम्। तथा हि चैतन्यं त्रिविधं विषयचैतन्यं, वृत्तिचैतन्यम्, अन्तःकरणचैतन्यं चेति। एतानि च क्रमेण प्रमेयप्रमाणप्रमाचैतन्यानीत्यभिधीयन्ते। प्रत्यक्षस्थले तैजसमन्तःकरणम् इन्द्रियद्वारा बहिर्निर्गत्य विषयदेशं गत्वा तदाकारेण परिणमते। स परिणामो वृत्तिरित्युच्यते। चैतन्यभेदकोपाधीनां यत्रैकदेशस्थत्वं तत्र चैतन्यभेदो नोपगम्यते। घटाकाशमठाकाशयोर्भेदेऽपि मठस्थघटाकाशः यथा न मठाकाशाद्भिन्नः तथा विषयेन्द्रियसन्निकर्षदशायां वृत्तेर्विषयस्य च एकदेशस्थत्वात्तच्चैतन्ययोरभेदेन वृत्तिचैतन्ये विषय-चैतन्याभेदाद्वृत्तेः प्रत्यक्षत्वम्। एवं विषयस्य घटादेः स्वावच्छिन्नचैतन्ये अध्यस्ततया तत्सत्तायाञ्च, आरोपितनिष्ठसत्ताया अधिष्ठानसत्तातोऽन-तिरिक्ततया, अधिष्ठानचैतन्यसत्तातो न भेदः। प्रत्यक्षस्थले उक्तरीत्या प्रमातृविषयचैतन्ययोरेकदेशस्थत्वेन विषयसत्तायाः प्रमातृचैतन्यसत्तातोऽपि अनतिरेकाद् विषये प्रत्यक्षत्वमुपपद्यते। सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्य-वच्छिन्नचैतन्यस्य च उपाध्योः नियमेन एकदेशस्थत्वात् सुखादिविषयके मानसप्रत्यक्षेऽपि लक्षणसङ्गतिः।

तत्राद्ये प्रत्यक्षलक्षणे विषये तत्तदिन्द्रिययोग्यत्वं वर्तमानत्वं च विशेषणं देयम्। तेन वाक्यादिजन्ये अदृष्टादिज्ञाने, सुखादिस्मृतौ सुखाद्यंशे च नातिव्याप्तिः। एवं च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभिन्नत्वं ज्ञानात्मकप्रत्यक्षस्य लक्षणं पर्यवसन्नम्।

द्वितीयलक्षणेऽपि तत्तदाकारवृत्त्युपहितत्वं प्रमातरि, तत्तदिन्द्रिययोग्यत्वं च विषये, विशेषणं देयम्। इत्थं च तत्तदाकारवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्न-सत्ताशून्यत्वे सति तत्तदिन्द्रियोग्यत्वं विषयस्य प्रत्यक्षत्वम्। रूपवान् घट इत्यादिप्रत्यक्षस्थले घटादिगतपरिमाणादौ अतिव्याप्तिवारणाय तत्तदाकारवृत्त्युपहि-तत्वं प्रमातृविशेषणम्। तत्र रूपाद्यवछिन्नचैतन्यस्य तद्वृत्त्यवछिन्नचैतन्यस्य च तदुपाध्योरेकदेशस्थत्वेन एकत्वात् रूपाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिणामाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नत्वं प्राप्तमित्यतिव्याप्तिः। रूपादिविषयकवृत्तिदशायां परिणामाद्याकारकवृत्त्यभावाच्च न तत्रेदानी-मतिप्रसङ्गः। धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मादेः प्रत्यक्षत्वापत्तिवारणाय विशेष्यभागः। धर्मादेः गुरुत्वादिवत् स्वभावत एव अयोग्यत्वान् न तत्र

अतिव्याप्तिः। सुखदिसत्त्वदशायां तु 'अहं सुखी' इत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वापादनम् इष्टापत्त्या परिहरणीयम्। सन्निकृष्टविषये दशमस्त्व-मसीत्यादिवाक्यादपि प्रत्यक्षाङ्गीकारात्।

पर्वतो वह्निमानित्यादिज्ञानं सन्निकृष्टविषयतया पर्वतांशे प्रत्यक्षम्। वह्नेरतथात्वेन तदंशे अनुमितिः। अवच्छेदकभेदेन विरुद्धयोरपि प्रत्यक्षत्वा-नुमितित्वयोः कपिसंयोगतदभावयोरिव एकत्र समावेशः सूपपादः। सुरभिचन्दनमित्यादौ सौरभांशे ज्ञानं परोक्षमेव, ज्ञानलक्षणायाः सन्निकर्षत्वानङ्गीकारात्। अतस्तत्र न अव्याप्तिशङ्कावकाशः। न चैवम् अनवस्थाभिया वृत्तिगोचरापरवृत्तेः अनङ्गीकारात् द्वितीयलक्षणस्य तत्तदाकारवृत्त्युपहितत्वघटिस्य वृत्तावव्याप्तिरिति वाच्यम्। वृत्तेः वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाङ्गीकारेण स्वविषयवृत्त्युपहित-प्रमातृचैतन्यघटितलक्षणस्य तत्राक्षतत्वात्। केवलसाक्षिवेद्यत्वस्य इन्द्रियानु-मानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वरूपत्वात् न अन्तःकरणतद्धर्मादीनां तद्हानिः। इदं रजतमिति भ्रमस्थलेऽपि रजताकाराविद्यावृत्तेरभ्युपगमेन प्रातिभासिकरजतेऽपि लक्षणसङ्गतिः। चैतन्याभिव्यञ्जकवृत्तिश्च इन्द्रियसन्नि-कर्षाज्जायते। ते च सन्निकर्षाः संयोग-संयुक्ततादात्म्यसंयुक्ताभिन्नतादात्म्यभेदात् त्रिविधाः। क्रमेण तद्रूपघटानां वृत्तिजनने तेषामुपयोगः वृत्तिश्चतुर्विधा-संशयनिश्चयगर्वस्मरणभेदात्। वृत्तिभेदाद् एकमप्यन्तःकरणं मनः बुद्धिरहङ्कारः चित्तमिति च आख्यां लभते। तदुक्तम्

**मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्।**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे॥** इति।

निरुक्तं प्रत्यक्षं सविकल्पकनिर्विकल्पकभेदात् द्विविधम्। तत्र वैशिष्ट्यावगाहि प्रथमं, घटमहं जानामीत्याकारकम्। सम्बन्धानवगाहि तु द्वितीयं, यथा सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम्। तस्य इन्द्रियाजन्यत्वेऽपि प्रत्यक्षत्वम्, इन्द्रियजन्यत्वस्य तदप्रयोजकत्वात्। पूर्वोक्तप्रत्यक्षलक्षणस्य च तत्र सत्त्वात्। उक्तवाक्ययोः विशिष्टार्थस्य विरुद्धत्वेन तात्पर्याविषयत्वात्। विरुद्धयोरुपाध्योस्त्यागे विशेष्यस्यैकत्वेन तस्यैव

तात्पर्यविषयत्वेन तज्ज्ञानस्य संसर्गानवगहितया निर्विकल्पकत्वं सिद्धमेव।

तच्च प्रत्यक्षं पुनरपि द्विविधं जीवसाक्षीश्वरसाक्षिभेदेन। तत्र अन्तः-करणविशिष्टं चैतन्यं जीवः, तदुपहितं जीवसाक्षी। अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यां जीवसाक्षिणोर्भेदः। विशेषणोपाध्योः व्यावर्तकत्वे समानेऽपि कार्यान्वयानन्वयाभ्यां भेदः। एवं च कार्यान्वयि व्यावर्तकं विशेषणम्। तदनन्वयि व्यावर्तकमुपाधिः। कार्यं विधेयम्। रूपविशिष्टो घटोऽनित्यः इति विशेषणोदाहरणम्। तत्र विशेषान्वयिनि अनित्यपदार्थे रूपस्य अन्वयसम्भवात् विशेषणत्वम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् इति उपाध्युदाहरणम्। तत्र विशेष्यान्वयिनि विधेये श्रोत्रेन्दिये कर्णशष्कुल्या अयोग्यत्वेन अन्वयासम्भवात् उपाधित्वम्। प्रकृते च अन्तःकरणविशिष्टो जीव इत्यत्र विधेये जीवपदार्थे अन्तःकरणस्य अन्वयसम्भवात् विशेषणत्वम्। अन्तःकरणोपहितचैतन्यं साक्षीत्यत्र विशेष्यान्वयिनि विधेये साक्षिपदार्थे विषयावभासके अन्तःकरणस्य जडस्य अन्वयायोग्यत्वात् तस्य उपाधित्वम्। अन्तःकरणोपाधीनाम् अनेकत्वेन जीवानां भेदात् तत्साक्षिणामपि भेदो ज्ञेयः। अन्यथा एकेनावगतस्य अन्येनापि अनुसन्धानप्रसङ्गात्। ईश्वरोपाधिमायाया एकत्वेन ईश्वरस्यैकत्वम्। तस्याः एकत्वे तु 'अजामेकां लोहितशुक्लकृष्णां' इत्यादिश्रुतिःप्रमाणम्। एवं च मायाविशिष्टं चैतन्यमीश्वरः, तदुपहितं चैतन्यम् ईश्वरसाक्षीति विवेकः। तस्येश्वरस्य एकत्वेऽपि तदुपाधिमायागत-सत्त्वरजस्तमोगुणैः प्रत्येकमुपाधिभूतैः क्रमाद् विष्णुब्रह्मशिवरूपास्त्रि-मूर्तिविलासाः। तत्र ब्रह्मविष्णुशिवाः यथाक्रमं सृष्टिस्थितिलयकर्तारः। ईश्वरकूटस्थस्य अनादित्वेऽपि परिपक्वप्राणिकर्मवशात् उपाधिभूतमायायाम् इन्द्रियसन्निकर्षाज्जीवोपाध्यन्तःकरण इव वृत्तिविशेषा उत्पद्यन्ते। वृत्तीनां जन्यत्वात् तत्प्रतिबिम्बितचैतन्येऽपि जन्यत्वव्यवहारः।

प्रातिभासिकशुक्तिरजतादिपदार्थोत्पत्तौ च शुद्धरजतादिसामग्री नापेक्षिता किन्तु तत्र विलक्षणैव सामग्री। तथा हि काचादिदुष्टदृष्टेः पुरोवर्तिद्रव्यसंयोगात् इदमाकाराचाकचिक्याद्याकारा च अन्तःकरणवृत्तिः जायते। तस्यां वृत्तौ इदमंशावच्छिन्नं चैतन्यं प्रतिबिम्बते। उपाधीनाम् उक्तरीत्या तत्रैकदेशस्थत्वेन तदुपहितानामैक्यं सम्भवति। इत्थं च इदमंशावच्छिन्नचैतन्याश्रिता शुक्तित्वप्रकारिका अविद्या चाकचिक्यादिसादृश्यसन्दर्शनसमुद्बोधित-

रजतसंस्कारेण काचादिदोषेण च सहिता रजताकारेण रजतज्ञानाभासाकारेण च परिणमते। तच्च रजतम् अविद्याधारे इदमवच्छिन्नचैतन्ये वर्तते। सर्वकार्यस्यापि स्वोपादानाविद्याश्रयनिष्ठत्वनियमात्। चैतन्यनिष्ठस्यापि रजतादेः पुरोवर्तिनाऽभेदेन भानं तु, नैयायिकनये आत्मनिष्ठस्य ज्ञानादेः शरीरनिष्ठत्वेनेव, तदवच्छेदकत्वादिति बोध्यम्।

प्रातिभासिकव्यावहारिकरजतयोरुभयोरपि अविद्याजन्यत्वेन साम्येऽपि आगन्तुकनियतकाचादिनानादोषजन्यत्वनियतैकाविद्यादोषजन्यत्वाभ्यां तयोर्वैलक्षण्यम्। स्वाप्नपदार्था अपि प्रातिभासिका एव। तेषां प्रत्यक्षतया अनुभवात्। 'अथ रथान् रथयोगान् पथः सृजते' इति रथादिसृष्टिप्रतिपादिका श्रुतिरप्यनुग्राहिका। स्वाप्नपदार्थाः साक्षान्मायामया इत्येके। अन्तःकरणद्वारा तथेत्यपरे। अध्यासाधिष्ठानस्य चैतन्यस्य जागरे प्रत्यक्षाभावेऽपि स्वाप्नपदार्थानां जागरे नानुवृत्तिः निवृत्तिरूपकार्यनाशेन तत्सिद्धेः। उपादानसद्भावदशायामपि विरोधिवृत्त्युत्पत्या दोषनिवृत्या वा कार्यनाशाङ्गीकारात्। प्रकृते च विरोधि-प्रत्ययोत्पत्या निद्रादिनाशेन च स्वाप्नपदार्थाननुवृत्तिरूपोपपादयितुं शक्या। बाधरूपकार्यनाश एव अधिष्ठानसाक्षात्कारजन्योपादाननाशस्य अपेक्षितत्वात् प्रकृते तदभावेऽपि न क्षतिः। शुक्तिरजतादेः शुक्त्यवच्छिन्नतूलाविद्याकार्यत्वपक्षे अधिष्ठानतत्त्वज्ञानात् तस्य अविद्यया सह बाधः। मूलाज्ञानकार्यत्वपक्षे तन्नाशस्य ब्रह्मसाक्षात्कारैकसाध्यतया शुक्तित्वादिज्ञानेन शुक्तिरजतादेः घटादेः दण्डप्रहारादिनेव तदानीं निवृत्तिमात्रम् न त्वत्यन्तनाशः।

जपाकुसुमसङ्गात् स्फटिके रक्तत्वभ्रमस्थले न प्रातिभासिकरजतोत्पत्ति-रङ्गीकार्या तत्र इन्द्रियसन्निकर्षस्य विद्यमानत्वेन तेनैव प्रत्यक्षत्वनिर्वाहात्। यत्र आरोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तिरावश्यकी।

प्रत्यक्षं पुनर्द्विविधम् इन्द्रियजन्यं तदजन्यं चेति। तत्राद्यं चक्षुरादीन्द्रिय-भेदात् पञ्चविधम्। द्वितीयं सुखादिप्रत्यक्षम्। तत्र मनस एव कारणत्वात् मनसश्च सिद्धान्ते इन्द्रियत्वमनङ्गीकारात्। तत्र घ्राणं रसनं त्वक् च स्वस्थानस्थितान्येव विषयान् गृह्णन्ति। इतरे तु विषयदेशं गत्वा विषयं गृह्णीतः। वीचीतरङ्गन्यायेन कर्णशष्कुलीप्रदेशे भेर्याद्यवच्छेदेन उत्पन्नशब्दस्य उत्पत्तिकल्पनं, 'भेरीशब्दो मया श्रुतः' इति प्रतीतेः सजातीयविषयकल्पनं च गौरवात् क्लिष्टत्वाच्च न सम्भवति।

# प्रत्यक्षप्रमाणम्

मंजुनाथः एस्. जी.

भारतीयदर्शनशास्त्रेषु सर्वैः आस्तिकनास्तिकदार्शनिकैः प्रमाणप्रमेयौ प्रधानतया प्रतिपादितौ। प्रमाकरणं प्रमाणं प्रमाणेन प्राप्यमानोऽयं प्रमेयः प्रमाणेन प्रमितिर्जायते इत्यत्र च नास्ति दार्शनिकानां विमतिः। किन्तु केन प्रमाणेन प्रमितिर्जायते? कथं जायते? कति प्रमाणानि? तस्य स्वरूपं किम्? प्रमेयानां स्वरूपं किमित्यादिविषयेषु अस्ति विमतिः। यद्यपि सर्वेऽपि दार्शनिकाः प्रत्यक्षप्रमाणमङ्गीकुर्वन्ति, तथापि तस्य स्वरूपविषये नास्ति मतैक्यम्।

इन्द्रियेभ्यः उत्पद्यमानं ज्ञानं यथार्थज्ञानम्, यथार्थज्ञानस्य एकमेव साधनं प्रत्यक्षप्रमाणमिति चार्वाकाः कथयन्ति। बौद्धाः प्रत्यक्षेण सह अनुमानमपि अङ्गीकुर्वन्ति। जैनाः विशिष्टाद्वैतिनश्च त्रीणि प्रमाणानि स्वीकुर्वन्ति। श्रुतिसिद्धार्थप्रतिपादनार्थमेव अनुमानप्रमाणं न स्वतन्त्रतया इति प्रतिपादयन्ति माध्वाः। वैशेषिकास्तु प्रत्यक्षमनुमानमिति प्रमाणद्वयं शब्दस्य अनुमाने एव अन्तर्भावः इति वदन्ति। उपमानेन सह चत्वारि प्रमाणानीति नैय्यायिकाः, अर्थापत्त्या सह पञ्चप्रमाणानीति प्राभाकरमीमांसकाः, अनुपलब्ध्या सह षट्प्रमाणानीति भाट्टाः अद्वैतिनश्च साधयन्ति।

इत्थं प्रमाणानां संख्याविषये अस्ति मतभेदः, न प्रमेयसाधनादिविषये। तार्किकाः ईश्वरमनुमानेन साधयन्ति। वेदान्तिनः श्रुतिप्रमाणसिद्धमिति वदन्ति। पीनो देवदत्तः दिवा न भुङ्क्ते इत्यत्रार्थम् अर्थापत्त्या प्रतिपादयन्ति मीमांसकाः। किन्तु अत्रानुमानमेव प्रमाणमिति नैय्यायिकाः निरूपयन्ति। सर्वत्र प्रमाणानि सिद्धार्थस्य स्वरूपं दृढीकुर्वन्ति। न तु वस्तूनि उत्पादयन्ति अथवा सिद्धस्य निवारणं न कुर्वन्ति। तदुक्तं कुमारिलभट्टपादैः वार्तिके–

**सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः।**
**न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्।।** इति

प्रत्यक्षप्रमाणेन विना अन्यप्रमाणानि न सिद्ध्यन्ति। यथा हेतुप्रत्यक्षेण विना अनुमानं, सादृश्यप्रत्यक्षेण विना उपमानं, शब्दप्रत्यक्षेण विना शाब्दबोधः उपपाद्यवस्तुप्रत्यक्षेण विना अर्थापत्तिः, अधिकरणप्रत्यक्षेण विना अनुपलब्धिश्च न सिद्ध्यति।

प्रत्यक्षप्रमाणं सर्वेऽपि दार्शनिकाः स्वीकुर्वन्ति। नैय्यायिकाः इन्द्रियार्थ सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि अध्यवसायात्मकं प्रत्यक्षम् इति प्रतिपाद्य घ्राणजरासनश्रावणचाक्षुषत्वाचमानसप्रत्यक्षान् निरूपयन्ति। अद्वैतिनस्तु इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम् इति नाङ्गीकुर्वन्ति। यतो हि अनुमित्यादेरपि मनोजन्यतया प्रत्यक्षत्वापत्तेः, ईश्वरज्ञानस्य अनिन्द्रियजन्यस्य साक्षात्वानापत्तेश्च। अद्वैतिनः प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्, प्रत्यक्षप्रमा चात्र चैतन्यमेव इत्युक्त्वा श्रुतिप्रमाणं दर्शयन्ति **यत्साक्षादपरोक्षाद् ब्रह्म** इति। अत्र साक्षात्पदेन ब्रह्मज्ञानरूपत्वादेव साक्षात् प्रत्यक्षं भवतीति ज्ञायते। प्रत्यक्षं द्विविधं किञ्चित्प्रत्यक्षज्ञानविषयत्वात् प्रत्यक्षं भवति, यथा घटादयः। प्रत्यक्षविषयत्वं घटादिषु अस्ति अतः घटप्रत्यक्षं सञ्जायते। द्वितीयं किञ्चित् ज्ञानरूपत्वादेव प्रत्यक्षं भवति, यथा ब्रह्म अथवा घटप्रत्यक्षम्, शुद्धं ब्रह्म अखण्डाकारवृत्तिविषयः न भवति इति भामतीकारमतम्। विवरणाचार्यास्तु वृत्तिव्याप्यत्वमिच्छन्ति। यथा

**फलव्याप्यत्वमेवास्य शास्त्रकृद्भिः निवारितम्।**
**ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते।।** इति

इत्थं च उभयमतेऽपि ब्रह्मणि फलव्याप्यत्वं नास्ति, विवरणमते वृत्तिव्याप्यत्वमस्तीति सिद्धम्। घटादिविषयप्रत्यक्षे फलव्याप्यत्वमस्ति। यथा जलासिञ्चितभितौ मुखं प्रतिबिम्बते तथैव वृत्तिनिर्गमनेन एव वस्तुप्रत्यक्षं जायते। वृत्तिनिर्गमनाभावे विषयसम्बन्धाभावात् विषये चैतन्यं वा प्रतिबिम्बते तदा वस्तु परोक्षं भवति

तर्हि प्रतिकर्मव्यवस्था कथम्? यतो हि चैतन्यं विभुः किल चैतन्यं सर्वदा विषयेण सम्बद्धं भवति, अतः किञ्चिदपरोक्षं किञ्चित्

परोक्षमिति किमर्थमिति चेत्, उच्यतेऽत्र वस्तु सर्वदा अज्ञानेनावृतं भवति। वृत्तिनिर्गमनेन यदा आवरणनाशः तदा वस्तुप्रत्यक्षं वृत्तिनिर्गमनाभावे आवरणनाशाभावः तदा वस्तु परोक्षं च भवति। प्रमाणेन प्रमेयसिद्धिः भवति। वेदान्ते ब्रह्मणः अप्रमेयत्वात् प्रमाणं व्यर्थं किल? इति चेत् न नित्यसिद्धब्रह्म अज्ञानेन आच्छादितं भवति स्पष्टतया न प्रकाशते। अतः आच्छादिताज्ञाननिवारणार्थं प्रमाणमपेक्षते।

ज्ञानगतप्रत्यक्षं विषयगतप्रत्यक्षं चेति प्रत्यक्षस्य द्वैविध्यं प्रतिपादयन्ति वेदान्तिनः। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्न चैतन्यं प्रमाणचैतन्यम्, घटाद्यवच्छिनं चैतन्यं विषयचैतन्यञ्चेति उपाधिभेदेन चैतन्यभेदः। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति। तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते। एवं वृत्त्या घटाद्यवच्छिन्नचैतन्यस्य प्रमात्रभिन्नतया प्रत्यक्षं जायते। अत्र प्रमात्रभिन्नत्वमित्युक्ते प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः। तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्तायाः आरोपितसत्तायाः अनङ्गीकारात्। एवं घटाद्यधिष्ठानसत्ता प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्, तथा च 'तत्तदिन्द्रययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्य-वच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्' इति ज्ञानगतप्रत्यक्षस्य निष्कृष्टं लक्षणम्। अत्र धर्मादीनां प्रत्यक्षत्वापत्तिवारणाय योग्यत्वमिति दलं देयम् किञ्चिद्योग्यं किञ्चिदयोग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणम्। 'अहं पूर्वं सुखी' इत्यादिस्मर्यमाणविषये लक्षणस्य अतिव्याप्तिवारणाय वर्तमानत्वं विषयविशेषणं देयम्। 'पर्वतो वह्निमान्' इत्यत्र पर्वतांशे अपरोक्षत्वं वह्न्यंशे परोक्षत्वम्, वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्। अत्र वह्न्यंशे अतिव्याप्तिवारणाय चैतन्याभिन्नत्वमिति दलम्। 'रूपी घटः' इत्यत्र घटगतपरिमाणादेः प्रत्यक्षत्ववारणाय तत्तदाकारवृत्त्यवच्छिन्नत्वमिति विशेषणम्। तदा रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्तिः न सम्भवति। 'दशमस्त्वमसि' इत्यादिसन्निकृष्टविषये शब्दादप्यपरोक्षत्वमङ्गीक्रियते।

अयं घट इत्यत्र घटस्य, घटज्ञानस्य च प्रत्यक्षं जायते। ज्ञानगतप्रत्यक्षविचारविमर्शः सम्पादितः। इदानीं विषयगतप्रत्यक्षत्वविचारः प्रस्तूयते प्रमातृसत्तातिरिक्तसत्ताकत्वाभावात् विषयप्रत्यक्षं सम्भवति। यथा घटादेः स्वावच्छिन्नचैतन्ये अध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्तारोपितसत्तायाः अनङ्गीकारात्। अत्रापि पूर्वोक्तप्रकारेण प्रत्यक्षं भवति। अनुमित्यादिस्थले अन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिचैतन्यस्य प्रमातृसत्तानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति न तत्रातिव्याप्तिः। तथा च स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् इति विषयगतप्रत्यक्षस्य लक्षणम्। तत्र पुनः सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यं वैशिष्ठ्यावगाहिज्ञानं सविकल्पम्। यथा घटमहं जानामि' इति संसर्गावगाहि ज्ञानं निर्विकल्पकम्। अत्र अखण्डार्थतया अथवा प्रातिपादिकार्थतया प्रत्यक्षं जायते। यथा तत्त्वमसि सोऽयं देवदत्तः इति।

तच्च प्रत्यक्षं पुनर्द्विविधम्, जीवसाक्षि, ईश्वरसाक्षि चेति। अन्तःकरणावच्छिन्नं चैतन्यं जीवः। तदुपहितं चैतन्यं जीवसाक्षि, अयं च प्रत्यात्मं नाना, उपाधिभेदात्। जीवः अल्पज्ञः स्वसम्बद्धं वस्तु प्रकाशयति। मायोपहितं चैतन्यम् ईश्वरसाक्षि। तदुपहितमायायाः एकत्वादनादित्वात् तच्चैकमनादि च ईश्वरः सर्वज्ञः सर्वविषयकज्ञानरूपत्वाद् इति केचन वदन्ति। अत्र ईश्वरस्य ज्ञानार्थं मायावृत्तिः स्वीक्रियते। सा वृत्तिः एका इति केचन कथयन्ति। केचन भूतभविष्यत्वर्तमानविषयत्वेन वृत्तेः त्रैविध्यं प्रतिपादयन्ति। अत्र विशेषणत्वोपाधित्वाभ्याम् ईश्वरत्वेश्वरसाक्षित्वयोः भेदः, न तु धर्मिणो ईश्वरतत्साक्षिणोः परिभाषाकारैरपि अहमाकारावृत्तिः अङ्गीकृता। एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यं भवति ज्ञेयगतं, ज्ञप्तिगतं चेति। ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वं सर्वज्ञानसाधारणं भवति।

वेदान्तसिद्धान्ते ब्रह्म स्वतः अपरोक्षं **'यत्साक्षादपरोक्षाद् ब्रह्म'** इति श्रुतेः।

# श्रीभाष्ये सविकल्पकनिर्विकल्पकप्रत्यक्षविचारः

डॉ. सुदर्शनन् एस्

दार्शनिकाः प्रायः प्रत्यक्षस्य द्वैविध्यमुररीकुर्वन्ति। प्रत्यक्षञ्चेन्द्रियार्थ-सन्निकर्षजन्यं ज्ञानमिति बहुधा वर्ण्यते। प्रत्यक्षद्वैविध्यञ्च सविकल्पक-निर्विकल्पकभेदेन भवति। इन्द्रियं यदा वस्तुनः सह सन्निकृष्टं भवति तदा किमाद्यं निष्प्रकारकं ज्ञानं जनयति उत सप्रकारकमिति विषये महान् विचारः वरीवर्ति।

श्रीभाष्यकारः भगवद्रामानुजाचार्याः निर्विकल्पकमपि प्रत्यक्षज्ञानं सविशेषविषयकमित्येव समर्थयन्ति। तथा च सविकल्पकनिर्विकल्पके निर्वच्येते-

1. निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्

2. सविकल्पकं द्वितीयादिपिण्डग्रहणम्। इति

**अत्रैवमाक्षिप्यते-**

प्रथमपिण्डग्रहणस्य सविशेषविषयत्वस्वीकारात्, एकजातीयगोद्रव्येषु प्रथमपिण्डग्रहणवत् द्वितीयादिपिण्डग्रहणानामपि **खण्डोऽयं, कृष्णोऽयं, शुक्लः गौः** इति रूपमेव जात्याकृतिविशिष्ट- व्यक्तिविषयपरत्वात् सविकल्पकनिर्विकल्पकयोरविशेषप्रतीत्या च, आद्यप्रत्यक्षस्य निर्विकल्पकत्वकथनं द्वितीयादीनाञ्च सविकल्पकत्वकथनमनुचितम्।

यत्र ज्ञाने विकल्पो विषयो न भवति तन्निर्विकल्पकं, यत्र तु ज्ञाने विकल्पो विषयो भवति तत् सविकल्पकमिति शब्दार्थस्य सविकल्पकनिर्विकल्पकशब्दाशक्त्यैव स्वयं सिद्धत्वात्, श्रीभाष्यस्थ-निर्वचनमयुक्तम्। यत्र ज्ञाने विकल्पो विषय इत्यादिविचारे विकल्पः

नामजात्यादिरूपो भेद इति निर्विवादम्। तथा च प्रथमपिण्डग्रहणस्यापि भेदविषयत्वात् प्रत्यक्षद्वैविध्यकथनमनुचितम्।

यदि निर्विकल्पकस्य संस्कारासचिवज्ञानपरत्वस्वीकारे सविकल्पकस्य संस्कारसचिवज्ञानपरत्वस्वीकारे द्वैविध्यसिद्धिरिति श्रीसुदर्शनसूरिभणितिरपि न सङ्गतामेति। यथो हि ज्ञानस्य संस्कारसचिवत्वप्रतिपादनपक्षे च तज्ज्ञानं स्मृतिरूपं प्रत्यभिज्ञारूपमेव वावशिष्येत।

**अत्रैदं सैद्धान्तिकमित्थं निगद्यते-**

एकजातीयवस्तुषु प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वे, द्वितीयादिनाञ्च पिण्डग्रहणानाञ्च सविकल्पकत्वे उभयत्र गोपिण्डग्रहणेषु शुक्लः गौः, कृष्णोऽयमित्येव प्रतीतिसिद्ध्या नामजात्यादिविशिष्टप्रथमपिण्डग्रहणं निर्विकल्पकत्वनिर्वचनं, तद्विशिष्टद्वितीयादिपिण्डग्रहणानां सविकल्पकत्वनिर्वचनमित्येकरूपस्यैव प्रत्यक्षस्य द्विधा निर्वचनमनुचितमित्याक्षेपस्य समाधानंत्वेवम् -

प्रत्यक्षज्ञाने एकजातीयवस्तुग्रहणे पिण्डग्रहणानां प्रथमत्वद्वितीयत्वादिकथनमुपलक्षणमात्रमेवेत्यवगन्तव्यम्। **शुक्लः गौः** इत्यादिज्ञानं निर्विकल्पकरूपमेव। तथा च यस्मिन् प्रत्यक्षे धर्मेऽनुवृत्तत्वमपि प्रकाशते तत्प्रत्यक्षं सविकल्पकत्वशब्देनोच्यते। सविकल्पकज्ञानस्यापि **अयं गौः, शुक्लः गौः** इत्यादिरूपत्वमेव। यत्र च द्वितीयादिपिण्डग्रहणेष्वपि प्रत्यक्षे धर्मेऽनुवृतत्वाग्रहणे च तद्वितीयादिपिण्डग्रहणं निर्विकल्पकत्वरूपमित्येवावगन्तव्यम्। धर्मानुवृतिर्नाम पूर्वव्यक्तिवृतित्वस्यैतद्व्यक्तिवृतित्वरूपैव।

सविकल्पकनिर्विकल्पकशब्दयोः

शब्दशक्त्यावगम्यमानार्थकृताक्षेपस्य समाधानन्त्वेवम्।

विकल्पस्य नामजात्यादिरूपभेदपरत्वेऽपि तद्रहितत्वेन निर्विशेषविषयत्वात् निर्विकल्पकपदव्युत्पत्त्यैव तत्प्रत्यक्षस्यैव निर्विशेषविषयकप्रत्यक्षत्वकथनापेक्षोऽयुक्त एव। यद्यपि निर्विकल्पकशब्दविशेषस्य विकल्पसामान्याभाववानित्येवार्थः, तथापि लोकानुभवे निर्विशेषविषयकज्ञानमित्यस्यासम्भवात्, अनुभवे च सविशेषविषयकप्रत्यक्षस्यैवादौ ग्रहणाच्च, आद्यग्रहणे

विवक्षितस्य विकल्पविशेषस्याभावेन तत्प्रत्यक्षं निर्विकल्पकत्वमुखेन व्यवह्रियते।

उक्तञ्च भाष्ये- **निर्विकल्पकं केनचिद्विशेषेण** इति। संस्कारसचिवत्वतदसचिवत्वकृतनिर्वचनप्रतिक्षेपकाक्षेपस्येदं समाधानम्-

तत्र हि निर्विकल्पकस्य संस्कारासचिवत्वज्ञानस्वीकारे, सविकल्पकस्य च संसारसचिवत्वस्वीकारे चोभयविधस्य ज्ञानस्य स्मृतित्वमुत प्रत्यभिज्ञात्वरूपमाक्षितम्। तत्रोच्यतेसंस्कारमात्रजन्यं ज्ञानं स्मृतिः। सविकल्पकप्रत्यक्षन्तु इन्द्रियसन्निकर्षेण संस्कारसहकृतेनोत्पद्यमानं ज्ञानं भवति, ताकथमिव स्मृतिरूपत्वमापद्येत। प्रत्यभिज्ञायां सविकल्पत्वकथनं सिद्धान्त इष्टमेव।

ननु सर्वाण्यपि सविकल्पकानि चेत्प्रत्यभिज्ञाविशेषाणि स्युरिति चेन्न, यद्यपि प्रत्यभिज्ञायाः सविकल्पकरूपत्वेऽपि प्रत्यभिज्ञाप्रयोजकः-विषयविशेषविशिष्टविषयकसंस्कारो भवति। तथा च सविकल्पकसामान्ये प्रत्यभिज्ञात्वापत्तिः न समीचीना। प्रत्यभिज्ञा तदुच्यते - यत्प्रत्यक्षं कालान्तरदेशान्तरविशिष्टभेदविषयकम्, कालान्तरदेशान्तरसम्बन्धविषयकं वा संस्कारविशेषं सहकृत्य भवति। प्रत्यभिज्ञेतरसविकल्पकं तद्भवति यत् विशेषणगतानुवृत्तिविषयकसंस्कारसहकृतं भवति।

विकल्पस्य नामजात्यादिरूपभेदपरत्वात् सर्वप्रत्यक्षस्यापि भेदविषयकत्वं विचार्यतेऽत्र सविकल्पकनिर्विकल्पकरूपभेदानुमोदनाय। भेदविषयकसिद्धान्तस्तु -

प्रत्यक्षं जात्यादिविशिष्टवस्तुविषयम्। जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वरूपस्य च भेदव्यवहारहेतुत्वमिति। तत्रैवमाक्षिप्यते- भेदः दुर्निरूपः। भेदस्तु न प्रत्यक्षेण गृह्यते। यतो हि शब्दादिविषयेष्वुपपद्यमानं भेदमिन्द्रियाणि बाह्यानि न गृह्णन्ति। भेदो न मानसप्रत्यक्षविषयः आन्तरत्वाभावात्। नानुमानं भेदसाधकम्। तथा च पटः घटभिन्नः नामाकारादिभेदात् दण्डवदित्याद्यनुमानानि नामाकारभेदस्य घटपटभेदसिद्ध्याधीनत्वेनान्योन्याश्रयदोषग्रस्तत्वात् दूरोत्सारितानि। सादृश्यज्ञानाभावादेवोपमानं न भेदबोधकम्। श्रुतीनामभेदार्थप्रतिपादनपरत्वात् न शब्दः भेदसाधकः। घटः पटो नेत्याद्यर्थापत्तिप्रमाणेनापि भेदः न बुद्ध्यते,

भेदव्यवहारप्रतीतिस्तु भ्रान्तिसिद्धा। अनुपलब्ध्यापि पटभेदः घटेऽनुपलब्धि प्रमाणेन भवतीति वक्तुं न शक्यते, अनुपलब्धिप्रमाणस्याभावविषयकत्वात्, भेदस्य च भावधर्मरूपत्वरूपाच्च तथा। अभावस्य भेदस्य भावधर्मत्वे न दोष इति वक्तुं शक्यम्। यतो हि भावस्याभावो धर्म इति कथनं व्याहतमेव। जले दाहकत्वाभावरूपो धर्मोऽभावरूपोऽस्तीति न, यतो हि जले दाहनिवारकत्वस्य भावरूपस्यैव सत्त्वात्। तथैव घटध्वंसोऽपि चूर्णत्वादिरूपभावरूप एव। कार्यस्य नाशो नाम स्वकारणेऽवस्थनमेव। भेदस्याभावत्वस्वीकारेऽपि न प्रमाणेन तत्सिद्धिः भवति। पटो घटो नेत्याद्यन्योन्याभावस्य पटघटभेदज्ञानविषयत्वात् भेदस्यैव स्वयमन्योन्याभावत्वे-नात्माश्रयो नाम दोषः आपद्यते। भेदान्योन्याभावयोः पृथग्रूपेण स्वीकारे चान्योन्याश्रयदोषो भूयते।

एवञ्च पटो न घट इत्यन्योन्याभावस्य सिद्धावेव तदधीना भेदसिद्धिः भवति। भेदस्य सिद्धावेव पटो न घट इति अन्योन्याभावप्रतीतिः सिद्ध्यति इति रूपोऽत्रान्योन्याश्रयदोषस्य। भेदः भ्रान्तिरूप एवेति केचन दार्शनिकानां विचारनिष्कर्षः।

**तत्रैव समाधीयते-**

गवादिपदार्थेषु विद्यमानगोत्वादिरेव भेदः। तथा च गोत्वादीनामेव भेदत्वस्वीकारात् शब्दाद्यनन्तर्भूतभेदस्य बहिरिन्द्रियग्राह्यत्वात्। बहिरिन्द्रिय-ग्राह्यत्वादेव भेदः मानसप्रत्यक्षस्यापि विषयः। घट पदाद्भिन्नः इत्याद्यनुमानमपि भेदसाधकत्वेनानुक्तत्वात् नात्र युक्तम्। अभेदार्थप्रतिपादकश्रुतिवाक्यवद्भ-दप्रतिपादकवाक्यानामपि बाहुल्याच्छब्दः न भेदसाधक इति वक्तुं शक्यते। अभावस्य भावधर्मत्वस्वीकरे दोषाभावादेव घटो न पट इति व्यवहारानुपपत्त्या भेदः अर्थापत्तिप्रमाणेनापि सिद्धत्येव। कार्यनाशस्य कारणावस्थानरूपत्वमपि सिद्धान्त इष्टमेव। भेदस्य घटत्वादिरूपत्वादन्योन्याश्रयकृतदोषः न सम्भवति। यत्र पटः घटो न भवतीति व्यवहारस्तत्रैव प्रतियोग्यनुयोगिज्ञानसापेक्षः। भदस्यान्योन्याभावस्य च भिन्नत्वेऽन्योन्याश्रयदोष इति कथनमपि व्यर्थमेव। घटत्वादिरेव भेदः तस्य च घटज्ञाने विषयत्वात्। भेदज्ञानं घटज्ञानकाल एव जातमिति भेदः प्रत्यक्षप्रमाणग्राह्य एव अतः प्रत्यक्षं सविशेषविषयमेव।

# भाट्टसम्मतज्ञाततास्वरूपनिरूपणम्

प्रो. के.ई. देवनाथन्

इन्द्रियार्थसन्निकर्षात् प्रत्यक्षं जायते। तथा लिङ्गदर्शनादिना अनुमित्यादिरुत्पद्यते। जायमानमिदं प्रत्यक्षादिकं मानसप्रत्ययवेद्यमिति नैयायिकाः। ज्ञानं स्वज्ञप्तौ नियमेनान्यज्ज्ञानं नापेक्षते, तत् स्वविषयकमत एव स्वप्रकाशमिति प्राभाकराः। वेदान्तिनोऽपि ज्ञानस्य स्वप्रकाशत्वमाशेरते।

## भाट्टमतम्

कुमारिलभट्टानुयायिनस्तु ज्ञानस्यातीन्द्रियत्वमाचक्षते। तेषां मते ज्ञानेन विषये ज्ञातताख्योऽतिशयो जायते, यः घटो ज्ञात इत्यनुभवसिद्धः। स च 'मया ज्ञातः' इति अनुभवबलेन च पुरुषविशेषजन्यः, तदनुभवमात्रविषयश्च। अतः विषयनिष्ठोऽपि ज्ञातताख्यातिशयः घटादिवत् सर्वेषां प्रत्यक्षविषयो न भवति। अयं चातिशयः अनुमित्यादिपदार्थेष्वपि जायते, अनुमितः श्रुतः, इत्यादि अनुभवस्याविशेषात्। स्मृतिस्थले स्मृत्या ज्ञातता उत्पद्यत इति न स्वीक्रियते, अनुभवजन्यसंस्कारकाले सर्वदा प्रागुत्पन्नज्ञाततायाः सत्त्वात्। गृहीतविस्मृतार्थश्रुतिस्थले प्रागुत्पन्नज्ञातताया नष्टत्वात् प्रामाण्यं सम्भवति। ज्ञातताश्रयवस्तुग्राहित्वं गृहीतग्राहित्वं स्मृतेः प्रागुत्पन्नज्ञातताश्रयवस्तुग्राहित्वमिति न प्रमात्वम्। अतः स्मृतेः प्रमात्वाभावानुरोधेन स्मृत्या ज्ञाततोत्पत्तिः न स्वीक्रियते। अपि च विषये ज्ञानेन किञ्चित् यदि नोत्पाद्यते, तदा इदं ज्ञानं घटीयम् इदं ज्ञानं पटीयम् इति व्यवस्था नोपपद्येत। घटस्य ज्ञानम् इत्येव व्यवहारः, न तु ज्ञानस्य घट इति। अतः घटादिना ज्ञाने आकारः समर्प्यते "हेतुत्वमेव तद्युक्तं यत् ज्ञानाकारार्पणक्षमम्" इति बौद्धोक्तं न ग्राह्यम्। भाट्टा अपि निराकारज्ञानवादिनः।[1] घटगतोपकारः घटसमवेतकार्यत्वात् कपालसमवेतघटवत् इत्यनुमानेन ज्ञाततायाः पुरुषविशेषनियन्त्रिततत्वमपि

सम्भवति। उक्तं च तत्त्वटीकायाम् "अर्थप्रकाशौ हि पुरुषविशेषधीजन्यतया तत्प्रतियोगितयैव स्वतः परतो वा कुतश्चिद्ध्रातत्वात् तद्गतज्ञानानुमापक इति। अपि च ज्ञानस्य स्वप्रकाशत्वं न युक्तम्। अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवत् अशक्यवत्। आहुश्च

**अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति।**
**स्वांशेन ज्ञानमप्येतं नात्मानं ज्ञातुमर्हति।** इति।

अतः ज्ञानस्वप्रकाशत्वमनुपपन्नम्। अस्तु ज्ञानं मानसप्रत्यक्षग्राह्यम्, क्षणिकत्वे सति आत्मविशेषगुणत्वात् सुखादिवत् इत्यनुमानेन ज्ञानस्य प्रत्यक्षत्वमिति न शङ्कनीयम्। मानसस्य सुखादेरबुभुत्सितग्राह्यत्वदर्शनात् ज्ञानस्यापि तथात्वापत्त्या अनन्तज्ञानावलीप्रसक्त्या ज्ञानान्तरस्यावकाशभाव प्रसङ्गात्। अपि च ज्ञानमतीन्द्रयं साक्षात्कृततारूपधर्मानाश्रयत्वात् इत्यनुमानं ज्ञानातीन्द्रियत्वे प्रमाणं न हि घटः साक्षात्कृत इतिवत् ज्ञानं साक्षात्कृतम् इति प्रतियन्ति लोकाः।

**भाट्टमतस्य परिशीलनम्**

तदिह भाट्टमतं नोररीकुर्वन्ति नैयायिकादयः। तथाहि घटादौ विषये ज्ञानेन उपकारः कश्चित् जायत इति हि भाट्टाः तन्न यदि तद्गतोपकारजनकत्वं विना ज्ञानस्य तदीयत्वं वक्तुं वा शक्यते, तदा उपकारजननात् प्राक् तदीयत्वरूपविशेषाभावात् ज्ञानं तत्रैवोपकारं जनयेदिति कथम्? येन इन्द्रियार्थसन्निकर्षादिना ज्ञानं जायते, तत्रैव उपकारं जनयतीति वक्तुं न शक्यम्, तर्हि तेनैव तदीयत्वं ज्ञानस्य सिद्ध्यतीति किमर्थमुपकारः कल्प्यते?

अपि च अतीत-अनागतविषययोः कथं ज्ञातता ज्ञानेनोत्पद्येत? तत्र आधारस्याभावात्। उक्तं च संवित्सिद्धौ-

**अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः।**
**न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति।।**

न च घटस्यातीतत्वेऽपि घटत्वस्य सामान्यस्य सर्वदा सत्त्वात्तत्र ज्ञातता जायत इति वाच्यम्, तथात्वे ज्ञानस्य घटीयत्वं न स्यात् घटत्वीयत्वमेव

स्यात् इत्यापत्तेः। न च धर्मधर्मिणोः भेदाभेदाङ्गीकारात् घटत्वीयत्वेऽपि घटीयत्वं ज्ञातताया उपपद्यत इति वाच्यम्। चक्षुषा घटे ज्ञायमाने रसस्यापि ज्ञानप्रसङ्गात्, घटीयत्वे ज्ञानस्य घटतादात्म्यापन्नरसीयत्वस्याप्यापत्तेः। यदि सामान्याकारेण ज्ञातता उत्पद्यत एवेत्युच्यते तर्हि विशेषाकारेण सा न जातेति अतीतादौ अनुपपत्तिः तिष्ठत्येव। उक्तं च उदयनाचार्यैः–

**स्वभावनियमाभावात् उपकारोऽपि दुर्घटः।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा।।**

अर्थे सति सुघटत्वेऽपि इत्यन्वयः

यदुक्तं क्रियाजन्यफलशालित्वं कर्मत्वम्। ज्ञानस्य कर्म घटादि। तत्र ज्ञानेन कश्चिदुपकारः जननीय इति, तदापि न ज्ञानं स्वकर्मणि किञ्चित् करोति क्रियात्वात् इत्यनुमाने क्रियाशब्देन धात्वर्थमात्रं यदि स्वीक्रियते तदा शरसंयोगेन गगने उपकारस्याजननात् संयोगरूपधात्वर्थस्वीकारे व्यभिचारः। स्पन्दरूपक्रिया यदि क्रियापदेन विवक्ष्यते तदा ज्ञाने गुणे स्पन्दत्वाभावात् स्वरूपासिद्धिः। अतः ज्ञातो घट इत्यनुभवे घटे ज्ञानवैशिष्ट्यमेकमेव भासते, नातिरिक्तं ज्ञाततादि इति। न च ज्ञातता अनुभवसिद्धा घटो ज्ञातः इति सामान्यतः साक्षात्कृतो घटः अनुमितो घट इत्यादिना विशेषरूपेण सोऽतिशयोऽनुभूयते इति वाच्यम् "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति हि बौद्धखण्डने उच्यते। अयं भावः यथा बौद्धसम्मतज्ञानसाकारत्वखण्डनप्रकरणे ज्ञानस्य अर्थवैशिष्ट्यमेव विशेषः न तु ज्ञाने कश्चित् विषयजन्यातिशयः इत्युच्यते, तद्वत् क्रियया कर्मणि उपकारः कश्चित् जन्यते इत्यपि न स्वीक्रियते क्रियावैशिष्ट्यमेव कर्मविशेषकम्। घटक्रिया पटक्रियेतिवत् कृतः घटः करिष्यते घट इत्यादि, तथैव गृहाण घटज्ञानं पटज्ञानम् इतिवत् ज्ञातो घटः ज्ञास्यते घट इति।

कथमसम्बद्धयोः विषयविषयिणोः धर्मधर्मिभाव इति चेत् न ध्वस्तो घट इतिवत् सम्भवात्। न हि ध्वंसस्य घटस्य च कश्चित् संबन्धोऽस्ति। ध्वंसप्रतियोगिभूतघटादिनिरूपणाधीननिरूपणकः प्रतियोगित्वरूपसम्बन्धं विना नातिरिक्तं सम्बन्धमपेक्षते इति यथा तथा घटस्य ज्ञानस्य च सम्बन्धस्वभावापेक्षया नान्यः। एतत्सर्वमभिप्रेत्य प्रत्यपादि आचार्यैः–

**अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।**
**तद्वैशिष्ट्यप्रकाशत्वादध्यक्षानुभवोऽधिके।।** इति।

ननु ज्ञानमतीन्द्रियम्, असाधारणकार्यानुमेयम्। असाधारणकार्येण यदि नानुमीयते तदा अज्ञातस्य ज्ञानस्य कथं व्यवहारः। एवं न च ज्ञानातीन्द्रियत्वात् ज्ञातता स्वीकार्या इति चेन्न, अन्योन्याश्रयात्। प्रथमतो ज्ञाततानुभवः, ततः ज्ञानानुमानम् ततः ज्ञानव्यवहारग्रहणम् इति क्रमः। ज्ञातताया ज्ञानज्ञानं ज्ञाते च ज्ञाने व्यवहारान्यथानुपपत्त्या ज्ञातताज्ञानम् इति अन्योन्याश्रयः। किन्त्र घटादिव्यवहारान्यथानुपपत्त्या ज्ञातता न कल्पनीया ज्ञातताया हेतुत्वेन स्वीकृतस्य ज्ञानस्यैव साक्षात् व्यवहारहेतुत्वं स्यात्। किमर्थं मध्ये ज्ञाततयाः? किञ्च ज्ञानेन प्राकट्यं (ज्ञातता) जायत इति पक्षे ज्ञातताया ज्ञानानुमानं स्वीक्रियते तर्हि ज्ञातताज्ञानं यदि अनुमितिरूपं तथा अनवस्था यदि ज्ञातताज्ञानं स्वप्रकाशरूपं तदा ज्ञानमेव स्वप्रकाशमिति स्वीक्रियताम्।

एतत्सर्वं श्लोकैः संगृहीतम्। तथाहि–

**यदि कल्प्येत विषये प्राकट्यं व्यवहारतः।**
**तद्धेतुत्वेन कल्प्या धीस्तत्फलार्थं प्रकल्प्यताम्।।**
**यथा तत्रैव तस्यैव प्राकट्यं ते धिया भवेत्।**
**तथा भानादयोऽपि स्युः किमन्तर्गडुक्लृप्तितः।।**
**प्राकट्यं प्रकटं स्याद्वः परतः स्वत एव वा।**
**आद्येऽनवस्थितिः शेषे बुद्धिरेव तथा न किम्।।**[1]

न च ज्ञानस्य प्रत्यक्षत्वं वक्तुं न शक्यम् इन्द्रियेणानुपलभ्यमानत्वात्, साक्षात्कृतताना‍श्रयत्वात् क्षणिकत्वाद्वा इति वाच्यम्। प्रथमे हेतौ साध्याविशिष्ट-त्वात्। द्वितीये आश्रयासिद्धेः तृतीये विकल्पासहत्वाच्च। एतद्विस्तरः न्यायकुसुमाञ्जलौ।

अन्ये तु ज्ञातताया: विषयधर्मस्य विषयस्य घटादेरिव सर्वप्रत्यक्षवेद्यत्वं स्यात्। न च यस्य धिया द्वित्वं जन्यते, तेन तदनुभूयते, तद्वत् ज्ञाततापि यस्यानुभवेन जन्या, तेनैव ज्ञायत इति वाच्यम्, अपेक्षावेद्याकारव्यतिरिक्त

द्वित्वादौ प्रमाणाभावात्। यथा बुद्ध्या द्वित्वादिः जायत इत्युच्यते, तयैव द्वित्वादिव्यवहारो भवतु। अतीतादौ द्वित्वाद्युत्पत्तेः वक्तुमशक्यत्वात्। अपि च अतिरिक्तद्वित्वस्वीकारेऽपि द्वित्वदृष्टान्तोऽत्र भवति। द्वित्वादेरिव अनन्यथासिद्धप्रत्यक्षस्य ज्ञातताख्यातिशयेऽभावात्। तस्मात् विषयधर्मस्य कल्प्यमानस्य ज्ञातताख्यस्य सर्वपुरुषवेद्यत्वं स्यादित्याहुः।

किञ्च ज्ञाततां विना ज्ञानघटयोः वैशिष्ट्यमुपपद्यते, यथा ध्वंस-घटयोः अतिरिक्तसम्बन्धं विना वैशिष्ट्यप्रत्यय उपपद्यत इति उदयनाचार्याः प्राहुरित्युक्तम्। ध्वंसः कथं निराधार इति प्रश्न इदानीं समाधीयते। ध्वंसो न निराधारः प्रतियोगिसमवायिदेशवृत्तित्वात्। कपालध्वंसानन्तरघटध्वंसः घटसमवायिनि कथं स्यादिति न प्रष्टव्यम्, तद्भिन्नदेशेऽपि सम्भवात्। न तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणम् इति नियमः, प्रकारान्तरेणापि निरूपणात्। तस्मात् यस्य यावती ग्रहणसामग्री तां विहाय तस्यां सत्यां तदभावो यत्र क्वचिन्निरूप्यो देशे काले वा। इयांस्तु विशेषः-सा सती चेत् प्रत्यक्षेण। असत्येव ज्ञाता चेत् अनुमानादिनेति स्थितिः इति।[2]

न च अङ्गुल्यग्रदृष्टान्तः ज्ञानस्य स्वप्रकाशत्वे विरुध्यत इति वाच्यं ज्ञानस्य स्वप्रकाशत्वानभ्युपगमात्। तदभ्युपगमेऽपि अहं घटं जानामीति अनुभवबलेन सिद्धस्य ज्ञानप्रत्यक्षत्वस्यापलापायोगात्। अङ्गुल्यग्रदृष्टान्तः योगस्य द्विष्ठत्वात् तद्विषये सम्भवति, न ज्ञानविषये। उक्तं च तत्त्वटीकायां वेदान्तदेशिकैः:

**अङ्गुल्यग्रादिदृष्टान्तमात्रमप्यत्र निष्फलम्।**
**दृष्ट्यदृष्टिविशेषेण सर्ववस्तुव्यवस्थितेः॥**

**अस्पृष्टिस्स्वात्मनस्तत्र संयोगाद्विष्ठता बलात्।**
**दृष्टान्तमात्रभक्तेन दीपादिः किन्न दृश्यते।**[3]

यथा दीपः अन्यान् प्रकाशयति, स्वस्य प्रकाशनेऽन्यदीपनिरपेक्षः तथा ज्ञानं स्वप्रकाशे ज्ञानान्तरनिरपेक्षो भवितुमर्हतीत्यर्थः।

एतावत्पर्यन्तं ज्ञातताखण्डनं संगृहीतम्

## भाट्टमीमांसकानां निर्णयः

ज्ञाततायाः साधनं ये कुर्वन्ति भाट्टास्ते गुरुसम्मतं ज्ञानस्वप्रकाशत्व निराचिकीर्षया ज्ञानस्यानुमेयत्वसिषाधयिषया तत् कुर्वन्ति, इति ज्ञातव्यम्। ज्ञानं हि अनुमेयं चेत् तत्र तत्कार्येण स्वरसतः तदनुमितिरिति तेषामाशयः। उदयनाचार्याः न्यायकुसुमाञ्जलौ वेदान्तदेशिकास्तत्त्वटीकायां न्यायसिद्धाञ्जने च तत्पक्षं खण्डयन्ति। तत्संग्रह एतावत्पर्यन्तं कृतः। भाट्टमतानुसारेण वार्तिके, न्यायरत्नाकरे, शास्त्रदीपिकातर्कपादे च कृतः ज्ञाततासमर्थनप्रकारः संग्रहेण प्रदर्श्यते। भाट्टचिन्तामणौ तथा मानमेयोदये च ज्ञातताास्वरूपसमर्थनं दरीदृश्यते।

परन्तु पार्थसारथिमिश्राणां ज्ञानानुमेयत्वे निर्भरे सत्यपि न ज्ञातताख्य-धर्मसमर्थने तावान् निर्भरो लक्ष्यते इति तद्ग्रन्थतो लभ्यते। अपि च भाट्टा ज्ञाततापक्षमेवाश्रयन्त इति प्रथास्ति। उदयनाचार्यैः भाट्टमतमेवेदम् इति अनूद्य खण्डनं चाकारि इत्यतः ज्ञाततापक्षोऽत्र विव्रियते।

## भट्टानुसारी सिद्धान्तः

ज्ञानेन विषये कश्चिदतिशयो जन्यते, यो हि प्राकट्यम्, ज्ञातता, प्रकाशः अवभासनमित्यादिशब्दैः व्यवह्रियते। अयं प्रकाशः पार्थसारथि मिश्रैरेवमुपपादितः। तथाहि यथा पाकक्रिया स्वकर्मणि तण्डुलादौ विकृत्त्यादि फलं जनयति, तथैव ज्ञानमपि क्रियाभूतं इन्द्रियाधीनज्ञानजन्यमपरोक्षत्वं, लिङ्गादिजन्यज्ञानजन्यं परोक्षत्वं च फलं स्वस्वविषये जनयति। विषयेषु परोक्षापरोक्षविभागः सर्वजनेष्टः वरीवर्ति। अयं परोक्षापरोक्षविभागः विषयाविषयविभागश्च फलं ज्ञानजन्यं विना न संभवति। तच्च फलं प्रकाशापरपर्यायं कारणभूतज्ञानं कल्पयति। एवं ज्ञातताया निरूपणं कृतं तैः।

ज्ञानस्यानुमेयत्वादिभिः श्रीपार्थसारथिमिश्रैः प्रकारान्तरेणापि ज्ञानानुमानं विशदीकृतम्। तथाहि ज्ञानक्रियाद्वारा ज्ञातुरात्मनः ज्ञेयस्य कर्मभूतस्य चार्थस्य च व्याप्तव्याप्यत्वलक्षणः कश्चित् सम्बन्धोऽस्ति। आत्मा हि नित्यः आगन्तुकधर्ममन्तरा विषयं न व्याप्नुयात् इति स आगन्तुकधर्मो भवति ज्ञानमनुमानसिद्धम् अयं व्याप्तृव्याप्यत्वलक्षणः सम्बन्धः मानसप्रत्यक्षवेद्यः।

आकारश्च ज्ञातो मया घट इति निरूपितः। न च संविदः स्वप्रत्यक्षत्वमेव स्वीक्रियताम्, किमर्थं तस्या अनुमानमिति वाच्यम्। प्रथमं विषयं प्रकाशञ्च पुनः सम्बन्धं प्रकाशयितुं हि नार्हति संवित्। क्षणिकत्वात्। तस्मात् मानसप्रत्यक्षगम्यः आत्मनोऽर्थेन सह सम्बन्धः ज्ञानं कल्पयतीति युक्तम्।

न्यायरत्नाकरेऽपि तैरयं पक्षः विशदीकृतः। ज्ञातताख्यधर्मोऽन्यथासिद्धः, प्रत्यक्षेऽतिशयस्य कस्यचित् ज्ञानकल्पकत्वेऽपि अनुमानादिषु तस्य कथं ज्ञानकल्पकत्वम्, तत् हि अर्थनिष्ठस्य तस्य प्रत्यक्षेणात्रानवगतत्वात्। कथं तस्यातिशयस्यानुमितिकल्पकत्वम् इति यावत्। व्यवहारात् प्राक् तादृशातिशय-व्याप्यस्य लिङ्गस्याप्रमितत्वात्। अप्रमितस्य तस्यातिशयस्याकल्पकत्वात् नानुमितिकल्पनोपपत्तिः। अनुमितेऽप्यर्थे ज्ञातो मया अग्निरिति पुरुषः ज्ञातमग्निमनुसन्धत्ते, अतः ज्ञाने प्रमाणं वक्तव्यम्। तच्च ज्ञातुः ज्ञेयेन सहाप्तत्वरूपम्। तदेव द्वारभूतं ज्ञानं कल्पयति। आप्तत्वरूपः सम्बन्धः मानसप्रत्यक्षगम्यः। कः पुनरसौ सम्बन्धः उक्तं प्राप्तिरिति इति न्यायरत्नाकरः। स्मृतिस्थलेऽपि यत् पूर्वानुभवस्य ज्ञानं विनैव स्मृत्युत्पत्तिः तत्रापि मानसप्रत्यक्षेण द्रष्टृदृश्यत्वसम्बन्धेन ज्ञानकल्पनायां तस्य च ज्ञानस्य इन्द्रियाद्यजन्यत्वात् स्मृतित्वनिश्चये सति पूर्वानुभवकल्पना। तथा च न्यायरत्नाकरपरिशीलने ज्ञातताख्यधर्मस्वीकारे तेषां निर्भरो नास्तीति गम्यते।

**ज्ञाततापक्षः**

परन्तु शास्त्रदीपिकायामर्थगतो वा ज्ञानजन्योऽतिशयः कल्पयति ज्ञानम्। अवश्यमङ्गीकरणीयश्चायमतिशयः त्रितयप्रतिभासवादिभिरपि। त्रितयं प्रतिभासत इति वदता ज्ञानज्ञेयज्ञातृषु त्रिष्वप्यनुगतं प्रकाशनपदवाच्यमव-श्यमङ्गीकर्तव्यम्। तत्र ज्ञानत्वं तावन्नानुगतं तद्धि ज्ञाने एव न ज्ञातृज्ञेययोः। ज्ञेयत्वमपि ज्ञेय एव न ज्ञातृज्ञानयोः। ज्ञातृत्वं ज्ञातर्येव न ज्ञानज्ञेययोः। व्यवहारविषयत्वं प्रकाशमानत्वमिति चेत् न। संविदि व्यवहाराद्विनष्टत्वात्। शब्दप्रयोगो व्यवहार इति चेत् न उक्तदोषत्वात्। तदवश्यं प्रकाशनभासनादिपर्यायः धर्मविशेषः त्रिष्वप्यनुवृत्तः गोत्वमिव गोव्यक्तिष्वस्ति इति ग्रन्थेन ज्ञाततापक्षः समर्थितः।

**ज्ञाततापक्षे दोषाभावः**

ज्ञातो घट इति प्रतीतिबलात् ज्ञातताख्यधर्मः ज्ञानोत्पाद्यः स्वीकार्यः। एवं साक्षात्कृतत्वादिरपि। न च विषयता विषयस्वरूपा, भूतलं घटवत् इति विशिष्टज्ञानस्य "भूतत्वं घटश्च" इति। समूहालम्बनज्ञानस्य न च वैलक्षण्यानुपपत्तेः। नापि ज्ञानस्वरूपा 'भूतलं घटवत्' इति ज्ञानस्थले भूतलीयं घटं जानामीति अनुव्यवसायापत्तेः (भा चि. 13) अतः उभयातिरिक्ता विषयता नित्या स्वीकार्या, तस्या अनित्यत्वे अनन्ततत्तद्विषयकज्ञानैरनन्त-तत्तद्विषयतोत्पत्तिः। तन्नाशकल्पनाद् गौरवापत्तेः। भाट्टचिन्तामणिकारास्तु आत्मनः घटेन सह व्याप्यव्यापकभावरूप सम्बन्धो मानसप्रत्यक्षगम्य इति पक्षः न युक्तः तत्पक्षस्य दुर्ज्ञेयत्वात् इत्याहुः।

द्वित्वप्रत्यक्षे यावदाश्रयप्रत्यक्षं न कारणं तस्य संयोगप्रत्यक्ष एव हेतुत्वात्। सम्बन्धप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षं कारणमिति कार्यकारणभावस्य रामरुद्रीये निरस्तत्वात् व्यासज्यवृत्तिधर्मप्रत्यक्षे हि तस्य कारणत्वं न स्वीक्रियते। वायुप्रत्यक्षं विनापि तन्निष्ठस्पर्शप्रत्यक्षस्य नैयायिकाङ्गीकारात् कथमाश्रयप्रत्यक्षं विना भूतभावि-अनुमितपदार्थे ज्ञातताया ग्रहणमिति प्रश्नोऽपि नोचितः। उपपादितश्चायमर्थः शब्दानित्यत्वप्रकरणे न्यायकुसुमाञ्जलौ। न चाश्रयाभावे विषयताद्वित्वादेः क्वावस्थानमिति वाच्यं कपालादिनाशे क्षणमात्रं घटादेरिव विषयताया अपि सत्त्वे बाधकाभावात्। अतो नष्टघटादावपि घटो ज्ञात इति अनुभवबलात् ज्ञाततायाः भूतभाविनिष्ठत्वोपपत्तिः।

न च ज्ञातो घट इति प्रतीतिबलात् ज्ञातताया इव इष्टो घट इति अनुभवबलात् इष्टताया अपि अतिरिक्तायाः स्वीकारापत्तिः। तथा ध्वस्तो घटः इत्यत्रापि ध्वंसजन्यातिशयः घटेऽस्तु इति वाच्यम्; विषयताया अतिरिक्तत्वपक्षे एव ज्ञातताया अतिरिक्तत्वस्य स्वीकारात्, तत्पक्षे इष्टताया अतिरिक्तायाः स्वीकारे बाधकाभावात्।

न च ज्ञाततायाः एव ज्ञानानुमापकत्वात् ज्ञातताज्ञानेन ज्ञाततान्तरस्वीकारे अनवस्थेति वाच्यम्; ज्ञातताज्ञानस्यावश्यज्ञेयत्वाभावेन अनवस्थाभावात्। एवमेव अन्येऽपि आक्षेपाः समाधेया इति दिक्।

# मीमांसकमते प्रत्यक्षप्रमाणम्

डॉ. ए.एस. आरावमुदन्

लोके तावत् सुखमिच्छद्भिः पुरुषैः तत्प्राप्तुं नैकाध्वानं समनुश्रीयते। तद्वेदेनैव सिद्ध्यतीति सप्रमाणेन साधयन्ति वाक्यशास्त्रविदः। सोऽयं वेदोऽप्रमाणम् इति भावयतः बौद्धादीन् निराकर्तुं मीमांसापूर्वाचार्यैः, को धर्मः? तत्केनावगम्यते? येन तज्ज्ञानं भवति तत्प्रमाणं वा न वा, यदि प्रमाणं, तर्हि केन प्रमाणेन, धर्मे कस्य प्रमाणस्य प्रवृत्तिरित्याद्याक्षेपोत्थापनद्वारा सूत्रसम्मतसमाधानं समादायि। तदर्थं प्रधानतया सूत्रत्रयं स्वीक्रियते, **'तस्य निमित्तपरीष्टिः**[1], **'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्**,[2] **औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्**[3] इति।

अत्र तस्य निमित्तपरीष्टिरिति सूत्रनिरूपणावसरे शाब्दमेव प्रमाणं वा उतान्येऽपि प्रत्यक्षादयः वा इति स्वात्मनि आक्षेपमुपस्थाय सत्सम्प्रयोगे इति सूत्रमुखेन प्रत्यक्षं धर्मं प्रति न निमित्तमथवा न प्रमाणम् इति ज्ञापितम्। यद्यपि सूत्रदर्शनेन इदं सूत्रं प्रत्यक्षलक्षणं ब्रवीति इति प्रतीयते। तथापि तदवलोकनेन अयमंशः स्पष्टो भवति यदिदं सूत्रं न प्रत्यक्षप्रमाणं वक्तुं प्रवृत्तम्। किन्तु धर्मं प्रति प्रत्यक्षं न निमित्तमिति बोधितुं प्रवृत्तमिति। कुतो न निमित्तमिति चेत् प्रत्यक्षन्तु विद्यमानवस्तुना सह इन्द्रियसन्निकर्षे सिद्ध्यति। किन्तु धर्मो न प्रत्यक्षगम्यः। तदुक्तं चोदनासूत्रे वार्त्तिककारैः–

---

1. जै. सू. 1/1/3
2. जै. सू. 1/1/4
3. जै. सू. 1/1/5
4. श्लो. वा. चो. सू. –191 श्लो

**श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।**
**चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता।।**[4]

श्रेयसः एव धर्मत्वम्। तदुक्तं चोदनालक्षणात्मकेन कर्मणा। तस्मात् वेदोक्तकर्मणः प्रत्यक्षत्वेऽपि तस्य स्वतः श्रेयस्त्वाभावात् श्रेयस्साधनत्वात् धर्मे न प्रत्यक्षस्य निमित्तत्वम्। अत एव सूत्रे विद्यमानोपलम्भनत्वात्' इति पदं दर्शितम्। तर्हि धर्मं प्रति किं निमित्तमिति विचारे प्रवृत्ते औत्पत्तिकसूत्र-रचनेन स्वाशयं स्पष्टयति, शाब्द एव धर्माधर्मं ज्ञातुं प्रमाणम्। कुत इति चेत् उक्तं भाष्ये–'चोदना हि भूतं भवन्तं भविष्यन्तं, सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चन इन्द्रियम्[5] इति। तस्मात् धर्मं प्रति चोदना एव (शाब्दः) प्रमाणमिति उच्यते।

वृत्तिकारस्तु ''न परीक्षितव्यं निमित्तम्। प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि। तदन्तर्गतं च शास्त्रम्। तदपि न परीक्षितव्यम्''[6] इत्युक्त्वा'' व्यभिचारात् परीक्षितव्यम्''[7] इत्यनेन प्रत्यक्षादिप्रमाणसमन्वयं समारभत। तदेवाग्रे वार्त्तिककाराः प्रत्यक्षप्रमाणं शास्त्रसम्मतरीत्या विस्तारेणाकुर्वन्।

**मीमांसकमते प्रत्यक्षम्।**

प्रत्यक्षलक्षणन्तु भाष्यकाराः ''सत्प्रम्प्रयोगे पुरूषस्येन्द्रियाणां बुद्धि-जन्म तत्प्रत्यक्षम्'' इति समवदन्। तद्यथा यद्विषयकं ज्ञानं तेनैव सम्प्रयोगे-न्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षम् इत्यादिना।[8]

लोके तावदिन्द्रियाणां घटपटाद्यर्थेन सह वर्तमानकाले दोषरहितव्यापारादिरूपप्रयोगे उत्पन्नपुरुषबुद्धिरेव प्रत्यक्षज्ञानं जनयति। प्रयोगस्य विद्यमानता एवं कारणदोषाभावेन अयमंशो ज्ञायते यत् प्रत्यक्षं वर्तमानवस्तुप्रकाशकमिति। तत् प्रत्यक्षस्य वर्तमानिकत्वात् (भविष्यति) उत्पद्यमानधर्माधर्मं प्रति तन्न प्रमाणम्। प्रत्यक्षलक्षणं एवमप्युक्तम्–

---

5. शा. भा. चो. सू. पृ. 15
6. शा. भा. चो. सू. पृ. 31
7. शा. भा. चो. सू. पृ. 7
8. शा. भा. चो. सू. पृ. 32

**'इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति'।**[9]

अत्र सन्निकर्षः द्वेधा भवति। संयोगरूपेण संयुक्ततादात्म्यरूपेण। पृथिव्यप्तेजोभिः चक्षुस्त्वगिन्द्रियाभ्यां, वायोः त्वक्संयोगात्, दिङ्नभस्तमसां दृक्संयोगाच्छब्दस्य श्रोत्रसंयोगात् आत्मनः मनस्संयोगात् ग्रहणम्। एवं चक्षुरादिसंयुक्तेषु पृथिव्यादिषु तदात्मभूतानां जातिगुणकर्मणां ग्रहणं यदा भवति तदा संयुक्ततादात्म्यसन्निकर्षः उच्यते। तार्किकास्तु सन्निकर्षः षोढा इति वदन्ति। तदपास्तं वार्त्तिककारेण। अतः तद्वयोरपि सन्निकर्षयोः विद्यमानकालीनत्वात् धर्माधर्मनिर्णये नास्त्यनयोः प्रवृत्तिः।

एवमिन्द्रियसन्निकर्षः प्रकारद्वयेन भवतीति निरुपणाच्च तेन उत्पद्यमानज्ञानस्याऽपि प्रकार इत्थं निरूप्यते। तज्ज्ञानं द्विविधम्। निर्विकल्पकं सविकल्पकं चेति। निर्विकल्पकं नाम इन्द्रियसन्निकर्षानन्तरं द्रव्यादिस्व-रूपमात्रावगाहि शब्दानुगमशून्यं यत्संमुग्धं ज्ञानं जायते तत् विशिष्टकल्पनाभावात् निर्विकल्पकमित्युच्यते। तदुक्तं वार्त्तिके–

**अस्ति ह्यालोचना ज्ञानं प्रथमं निर्विकल्पकम्।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्।।**[10]

एवं शब्दोच्चारणात्पश्चात् जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं घटोयं, इत्यादिव्यक्तविज्ञानं सविकल्पकमिति। तदेवमभिहितं वार्त्तिककारेण–

**ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यथा।**
**बुद्ध्यावसीयते साऽपि प्रत्यक्षत्वेन सम्मता।।**[11]

एवं रूपेण निरूपिते सति तद्वयोरपि इन्द्रियसन्निकर्षजन्यज्ञानयोः धर्माधर्मनिर्णये न निमित्तत्वमिति उच्यते। कुत इति चेत् बौद्धानाम्मते निर्विकल्पकमेव प्रत्यक्षम्। जात्यादिज्ञानेन रहितभ्रमभिन्नं ज्ञानं प्रत्यक्षमिति उच्यते। यतो हि स्वर्गादिरूपश्रेयस्साधनता एव धर्मता इत्युच्यते। तादृश धर्मत्वग्रहणं 'इदमस्य साधनम्' इत्यादिविकल्पद्वारा भवति। एवं मीमांसकमते

---

9. मा. मे. पृ. 9
10. श्लो. वा. प्र. सू. 112 श्लो.
11. श्लो. वा. प्र. सू. 120 श्लो.

सविकल्पकज्ञाने भ्रमसंशयाद्यभावः नितरां दृश्यते। तज्ज्ञानं विद्यमानवस्तुना सह भवति। यद्विद्यते तद्धर्मसाधनं भवति।

यथा–यागादयः। एतन्न धर्मः। अतः विद्यमानवस्तुज्ञानजनकप्रत्यक्षस्यापेक्षया शाब्दः एव स्पष्टतया धर्माधर्मज्ञानं जनयतीति न निर्विकल्पकसविकल्पके धर्माधर्मज्ञानग्रहणे प्रमाणे भवतः।

एतदेवाभिलक्ष्य वृत्तिकारैरुक्तं प्रत्यक्षसूत्रे सत्पदतत्पदयोः व्यत्ययेन। एतेषामभिप्रायेण येनार्थज्ञानं भवति तेन सह इन्द्रियसन्निकर्षेण यज्ज्ञानं भवति तत्प्रत्यक्षम् इति। अनेन प्रत्यक्षाभासोऽपि निराकृतो भवति। तत् प्रत्यक्षं लोकसिद्धमव्यभिचारि च तस्मात् परीक्षा न कर्तव्या। तन्निरूपणं परीक्षासूत्रे 'नञ्' अध्याहारेण कृतम्। तदुक्तं वार्त्तिके–

**आदिशब्दो मकारान्तो लुकि क्लेशेन सङ्गतिः।**
**नञध्याह्रियते सूत्रे सङ्करात् परिचोदना॥**[12]

एवं रूपेण सूत्रोक्तत्वात् मीमांसकैः लोकसिद्धषट्प्रमाणनिरूपणं कृत्वा शाब्दं विहाय तदतिरिक्तपञ्चप्रमाणानि धर्माधर्मनिर्णये निमित्तत्वेन नाङ्गीक्रियन्ते। अनेनायमाशयः सिद्ध्यति यत् प्रत्यक्षं प्रमाणमेव किन्तु धर्माधर्मज्ञानं प्रत्यक्षप्रमाणेन न भवतीति।

# मीमांसामते प्रत्यक्षस्वरूपम्

डॉ. वृन्दावनदाशः

मीमांसासूत्रकारस्य भगवतो जैमिनेः मतानुरोधमिन्द्रियाणां विषये सति संयोगे पुरुषस्य जायते या बुद्धिस्तत्प्रत्यक्षमुच्यते। तथा च सूत्रम् सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानो-पलम्भनत्वात्''[1] इति यथाश्रुतसूत्रतः एवमवगम्यते इन्द्रियार्थसन्नि- कर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति। तथा सति भ्रमात्मकज्ञानेऽपि प्रत्यक्षमुच्यते। तथा च सूत्रम् ''सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्''[2] इति अत्र तदिति तृतीयान्तमव्ययम्। तेनेति यावत् न च साक्षात्सम्प्रयोग- जत्वोक्तावेव कुत्रापि व्यभिचारादिसम्भवात् तत्सतोर्व्यत्यासः अनावश्यक इति वाच्यम्। पीतशंखद्विचन्द्रादिज्ञाने अतिव्याप्तिवारकतया तत्र सार्थक्यसम्भवात्। मानमेयोदयकारः नारायणस्तु तत्र इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षम्[3] इति प्रत्यक्षलक्षणमभ्यधात्, इदं च प्रमाणाभिप्रायेण। गागाभट्टस्तु भाट्टचिन्तामणौ त्रीणि लक्षणानि प्रत्यक्षप्रमाया उक्तवान् यथा (क) इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षमिति सूत्रकाराः। (ख) ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। (ग) जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा।[4]

इति नवीनैः मीमांसकैः भाट्टमतावलम्बिभिः एवमेव प्रत्यक्षप्रमालक्षणं प्रतिपादितम्। प्रभाकरैः नैयायिकोक्तं प्रत्यक्षलक्षणं नाभ्युपगतम्। तत्र तै दोषाः उद्भविताः। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्य-भिचारिव्यवसायात्मकं प्रत्यक्षम्।[5] इति खलु प्रत्यक्षस्य लक्षणं नैयायिकैः

1. मीमांसासूत्रम् 1.1.4
2. शा.दी. पृ. 48
3. मा.मेय. पृ. 8
4. भा.चिन्ता. पृ. 15
5. न्या.सू. 1.1.4

स्वीक्रियतत्र किं नामाव्यपदेश्यपदस्य सार्थक्यम्? यदा खल्वयं रूपं रूपं इति जानाति रसं रसं इति जानाति तदानीं शब्दजन्यं संभवतीति कस्यचित्स्यात् शाब्दत्वसङ्केतेति तन्निरासाय अव्यपदेश्यमिति।

इदं खलु नोपपद्यते। कुत इति चेत् लक्षणमिदं हि प्रत्यक्षस्य सजातीयविजातीयभेदकं हि नाम लक्षणम्। शब्दाद् भेदस्य इन्द्रियार्थसन्निकर्षजं प्रत्यक्षमित्यनेनैव सिद्धत्वात् नात्र तत्प्रस्तावमर्हति, शाब्दस्य सर्वस्य अनुमानशङ्का यथा शब्दपरीक्षाप्रकरणे प्रतीति विधीयते तथा शब्द सजल्पनानुविद्धस्य प्रत्यक्षस्य शाब्दत्व शंकापि तत्रैव निराकरणीया। अतः निरर्थकमत्र प्रत्यक्षलक्षणगतमव्यपदेश्यपदमिति[6] एवमेवाव्यभिचारिपदमपि विपर्ययादूषणायेति नैयायिकमतं नैव घटते। प्राभाकरमते सर्वज्ञानानां अव्यभिचारिरूपत्वात्।

अपि च तन्मते संशयवारकं व्यवसायात्मकपदमपि निरर्थकम्। स्थाणुर्वा पुरुषो वेति हि स्मृतिरूपज्ञानद्वयम्। नैदमिन्द्रियार्थसन्निकर्षजमिति नैव तस्य प्रत्यक्षत्वप्रसक्तिः। किं च अव्यभिचारिपदेनैव संशयव्युदासस्य सुलभतया पुनस्तन्निरासाय व्यवसायात्मकमिति पदं नैयायिकमते गौरवावहम्। वस्तुतस्तु अव्यभिचारित्वम् व्यवसायात्मकं चेतीदं दलद्वयं न प्रत्यक्षलक्षणे आवश्यकम्। किन्तु प्रमाणलक्षणे अवश्यम्भावि। एवं च तद् विरहितया केवलमिन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्षमित्येव लक्षणमुच्यते तर्हि तदापि अनुमानादिप्रमितिः स्वात्मनि प्रमातरि च नैव प्रत्यक्षभवितुमर्हति। अनिन्द्रियजन्या हि सन्ति,[7] अतः नैयायिकोक्तं लक्षणं नास्माभिरभ्युपगम्यते।

मीमांसकमते तु साक्षात्प्रतीतिः प्रत्यक्षम्[8] इति प्रत्यक्षलक्षणम्, न चैवं भावनाप्रकर्षपर्यन्तजा स्मृतिरपि साक्षात्कारवतीति सापि प्रत्यक्षं प्रसज्येत इति वाच्यम्। प्रमाणाधिकारबलात् तद्वारणस्य सुलभत्वात् तथा हि अनुभूतिः प्रमाणं तद्विशेषं च प्रत्यक्षमिति स्मृतेः तत्राप्रवेशात् न प्रत्यक्षत्वापत्तिः। अनुभूतेः स्मृतिव्यतिरिक्तायाः प्रागेव व्यवस्थापितत्वात्। प्रभाकरविजये नन्दीश्वरस्तावत् साक्षात्त्वमिदं प्रत्यक्षलक्षणघटकं त्रिधा व्याचख्यौ। यथा–

---

6. प्र.प. पृ. 134
7. प्र.प. पृ. 139
8. प्र.प. पृ. 149

(क) “साक्षात्प्रतीतिः स्वरूपप्रतीतिः। स्वस्यैव रूपं, स्वरूपम् असाधारणरूपमित्यर्थः।

(ख) यद्वा अव्यवहितप्रतीतिः साक्षात्प्रतीतिः। अव्यवहितत्वं नाम स्वविषयान्तर्गतज्ञानान्तराव्यवहितत्वमभिप्रेतम्।।

# मानमेयोदयसम्मतप्रत्यक्षप्रमाणविमर्शः

डॉ. प्रभाकरप्रसादः

श्रीनारायणप्रणीतो मानमेयोदयग्रन्थः प्रमाणखण्डः प्रमेयखण्ड इति द्विधा विभक्तः। तत्र प्रमाणखण्डः श्रीनारायणभट्टप्रणीतः। प्रमेयखण्डस्तु श्रीनाराणयपण्डितविरचितः।[1] तत्र प्रमाणखण्डे श्रीनारायणभट्टेन "राम षड्युक्तयो लोके याभिः सर्वोऽनुदृश्यते" इति श्रीवाल्मीकीयरामायणस्योद्धरण-पूर्वकं षडेव प्रमाणानीति षण्णां प्रमाणानां विवेचनं कृतम्। आदौ प्रमाणानां ज्येष्ठं प्रमाणं प्रत्यक्षप्रमाणमिति प्रत्यक्षप्रमाणस्यैव विचारः कृतः। यतः प्रत्यक्षप्रमाणमनाश्रित्य किमपि प्रमाणं नोत्पद्यते। अतः प्रत्यक्षप्रमाणं ज्येष्ठं प्रमाणम्। अनुमानोपमानार्थापत्त्यनुपलब्धीनां लिङ्गसदृशानुपपन्नादिद्वार त्वाल्लिङ्गादिज्ञानार्थं शब्दद्वारत्वाच्च शब्दप्रमाणस्य तज्जानार्थं प्रत्यक्षस्या-पेक्षादर्शनात्। यद्यपि लिङ्गविज्ञानं प्रत्यक्षेणैव भवतीति नियमो नास्ति शब्दादिनापि सम्भवात् तथापि लिङ्गादिज्ञानानां हेतुभूतलिङ्गादिज्ञानार्थं प्रत्यक्षमपेक्षितमेव। अत एव आपामरं व्यवहारः प्रत्यक्षे कि प्रमाणमिति प्रसिद्धम्। "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् इति स्मरणमपि शब्दप्रमाणस्य प्रत्यक्षोपजीव्यत्वे न बाधकम्। अत एवागमबाध्यं प्रत्यक्षमिति ये वदन्ति तेऽपि आगमस्योत्पत्तौ प्रत्यक्षस्यापेक्षित्वं स्वीकुर्वन्त्येव। अतः भामत्यां ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वञ्चेति युक्तम् तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया स्वतः सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात्। प्रमितावनपेक्षत्वेऽपि उत्पतौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेत् न उत्पादकाप्रतिद्वन्द्वि त्वात् इति प्रमाणान्तरोपजीव्यतया प्रत्यक्षस्य ज्येष्ठत्वे न कोऽपि विरोध

---

1. अत्र प्रमाणम् "प्राङ्नारायणूसरिणा विरचितं सन्मानमेयोदयम्" प्रमेयप्रकरणस्य मङ्गलाचरणश्लोकः। पृ सं. 149 "सोऽहं नारायणाख्यो व्यलिखमखिलम् उपसंहारश्लोकः पृ. सं 121

इत्युक्तग्रन्थसन्दर्भेण प्रत्यक्षस्यागमबाध्यत्वेऽनुपपत्तिः प्रकारान्तरेण समाहिता।

एवञ्च ज्येष्ठप्रमाणत्वात्प्रत्यक्षप्रमाणं प्रथमं विविच्यत इति ग्रन्थसङ्गतिर्युज्यते। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन प्रमाणस्यापि वस्तुत्वात् लक्षणप्रमाणाभ्यां तन्निरूपणं प्रसक्तम्। न च प्रमाणस्य प्रमाणान्तरेण सिद्धिः कथमिति वाच्यम्। प्रमाणस्वरूपे प्रमाणसङ्ख्याविषये विवाददर्शनात् प्रमाणेनैव तदपि साधनीयमिति युक्तम्।

प्रकृते मानमेयोदयग्रन्थे निरूपितं प्रत्यक्षलक्षणं विविच्यते इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति प्रत्यक्षलक्षणमुक्तम्। इन्द्रियसामान्यस्य लक्षणं प्रत्यक्षप्रमाकरणमिति नोक्तम् अन्योन्याश्रयप्रसङ्गात्, अपि तु पृथक् पृथक् षण्णामिन्द्रियाणां लक्षणान्युक्तानि। चक्षुर्नाम कनीनिकान्तर्गतं तेजोऽथ जिह्वाग्रगस्तोयांशो रसनं क्षितेरवयवो घ्राणञ्च घोणोदरे। सर्वाङ्गप्रसृताश्च मारुतलवास्त्वङ् नाम कर्णोदरव्योमैव श्रवणं मनस्तु विभु तद्देहे च कार्यावहम्। इति।

अनुमानोपमानयोर्विषयेऽनुमानम् अनुमितिः अनुमेयम्, एवमुप मानमुपमेयमुपमितिरिति शब्दत्रयं पृथक् पृथक् प्रमाणप्रमितिप्रमेयाणां बोधकं दृश्यते परन्तु प्रत्यक्षविषये एवं नास्ति। एक एव प्रत्यक्षशब्दः प्रत्यक्षप्रमाणे प्रत्यक्षप्रमितौ प्रत्यक्षविषये च प्रयुज्यते। अतः अत्र प्रत्यक्षप्रमाणमभिप्रेतमुत प्रत्यक्षप्रमितिरभिप्रेतेति विषये प्रत्यक्षप्रमितिरेवाभिप्रेता। पङ्कजादिष्विव योगरूढिस्वीकारेणानुमानादिषु प्रत्यक्षशब्दस्याप्रवृत्तेः इति ग्रन्थतः प्रत्यक्षशब्दः योगरूढ्या इन्द्रियसन्निकर्षजन्यसविकल्पनिर्विकल्पसाधारणज्ञानवाचक इति निश्चीयते। प्रत्यक्षज्ञानस्य करणं प्रत्यक्षप्रमाणमिति फलितम्। तच्च करणं विवक्षाभेदेनेन्द्रियं तत्सन्निकर्षः तज्ज्ञानं वा भवति। भट्टाचार्यैरप्युक्तम्–

**यद्वेन्द्रियं प्रमाणं स्यात् तस्य वार्थेन सङ्गतिः।**
**प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः॥**
**हानादिबुद्धिफलता प्रमाणं चेद्विशेष्यधीः॥ इति**

शास्त्रदीपिकायाम् सत्सम्प्रयोगे पुरुषेन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् इदं यथाश्रुतं प्रत्यक्षस्य न लक्षणम् आभासेऽपि तुल्यत्वादिति प्रत्यक्षसूत्रे

तत्सतोर्व्यत्ययेन ''यदाभासं विज्ञानं तेनेन्द्रियाणां सम्प्रयोगे यद्विज्ञानं तत्सत्प्रत्यक्षम्'' इति लक्षणं कृतम्। इन्द्रियसम्प्रयोगजं ज्ञानं प्रत्यक्षमिति चेत् प्रत्यक्षाभासेऽतिव्याप्तिः। न च शुक्तिकायां रजतज्ञानमिन्द्रियसंप्रयोगजं नास्ति। अपि तु इन्द्रियसम्प्रयोगात् शुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम् अनन्तरञ्च संस्कारोद्बोधाद्रजतं स्मृतम् ततः स्मृतरजतात्मना शुक्तिः व्यक्तिदोषवशाद् गृह्यते। अतो नेन्द्रियसम्प्रयोगजं रजतविज्ञानमिति नातिव्याप्तिः इति चेत् पीतशङ्खद्विचन्द्रादिज्ञानेष्वतिव्याप्तिः स्यात्। साक्षात् सम्प्रयोगजादित्युक्तम्। मानमेयोदयकारैस्तु इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमित्येव उक्तम्। इन्द्रियसन्निकर्षजन्यं निर्विकल्पसविकल्पसाधारणं ज्ञानं प्रत्यक्षमित्येव योगरूढ्या प्रत्यक्षशब्दार्थ उक्त इति प्रतीयते। अत्रेन्द्रियसन्निकर्षजं प्रमाणमर्थात् प्रमाणज्ञानं प्रत्यक्षमुक्तमेव। भ्रमेऽतिव्याप्ति-निरासो भवतीति प्रमा चाज्ञाततत्त्वावगम इति लक्षणं निर्दुष्टम्। अस्मिन् लक्षणे इन्द्रियम्, सन्निकर्षाः ज्ञानमिति पदत्रयं निहितम्। तेषां क्रमशः व्याख्यानं मानमयोदये कृतम्। रूपज्ञानस्य केनचित् कारणेन भवितव्यमिति सामान्येन सिद्धौ दीपादितेजस एव रूपज्ञानहेतुत्वदर्शनात् तैजसं चक्षुः कल्प्यते इत्यादिना चक्षुः तैजसं, रसनमाप्यम्, पार्थिवं घ्राणम्, वायवीयं त्वगिन्द्रियम् श्रोत्रस्याकाशात्मत्वम्। अयं विशेषः श्रोत्रस्याकाशात्मत्वमत्र प्रतिपादितम्। शास्त्रदीपिकायां दिशः श्रोत्रमिति श्रुत्या श्रवणेन्द्रियस्य दिग्भागत्वमुक्तम्।

सन्निकर्षः द्वेधा। संयोगः, संयुक्ततादात्म्यञ्चेति। द्रव्यग्रहणे संयोगः सन्निकर्षः। तत्र गुणादीनां ग्रहणं संयुक्ततादात्म्यसम्बन्धेन। रूपत्वादीनां ग्रहणमपि संयुक्ततादात्म्येनैव भवति। तत्रापि परम्परया तादात्म्यस्य सम्भवात् इत्युक्तम्। अथवा रूपत्वादीनां ग्रहणं संयुक्ततादात्म्येन भवतु इत्यपि पक्षः स्वीकृतः। ज्ञानञ्च इन्द्रियार्थसन्निकर्षजं निर्विकल्पकं सविकल्पकञ्च प्रथमं जायमानमालोचनाज्ञानं निर्विकल्पकम्। तच्च शब्दानुगमशून्यं सम्मुग्धज्ञानं ज्ञायते। तद्विशिष्टकल्पनाभावान्निर्विकल्पकमित्युच्यते तदनन्तरं शब्दस्मरण-सहकृतं जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं घटोऽयम् इत्यादिव्यक्तविज्ञानं सविकल्पकम्। अत्र सविकल्पकज्ञानस्य निर्विकल्पकजन्यत्वात् साक्षादक्ष-जन्यत्वाभावात् कथं सविकल्पकं प्रत्यक्षं भवति इति प्रश्नः अवतरति।

परम्परयाक्षजं प्रत्यक्षमिति उच्यते चेत् अनुमानादीनामपि प्रत्यक्षत्वप्रसङ्गः। अतः ग्रन्थकारैरुक्तं पङ्कजादिवत्प्रत्यक्षशब्दः योगरूढः इन्द्रियसम्प्रयोगजनिर्विकल्पसविकल्पज्ञानमेव प्रत्यक्षम्। तत्करणञ्चोक्तप्रकारेण इन्द्रियादिरेव। एवमत्र प्रतिपादितं प्रत्यक्षलक्षणं शास्त्रदीपिकादिग्रन्थेषु। अर्थतः प्रतिपादितमेवेति तल्लक्षणघटकीभूतपदानां पदकृत्यानि तत्तद्ग्रन्थेषु स्थितमेवेति विशेषाभावाल्लेखनव्यापारस्तत्र न प्रवर्तते।

सिद्धान्तरीतिषु मया भ्रमदूषितेन।
स्यादन्यथापि लिखितं यदि किञ्चिदत्र।।

संशोधने च विबुधा सदया भवन्तु
सच्छास्त्रतत्त्वपरिशीलननिर्विशङ्का।।
इति प्रार्थनया सह विरम्यते।

# भाट्टमते प्रत्यक्षप्रमाणस्वरूपम्

डॉ. रामानुज उपाध्यायः

"मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात्" इति सिद्धान्तमनुसृत्य स्वमनीषयाऽत्र समासशैल्या भाट्टाभिमतं प्रत्यक्षप्रमाणमुपस्थाप्यते।

तत्र प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम्। प्रमा च अज्ञाततत्त्वार्थज्ञानकरणमिति। करणं च व्यापारवदसाधारणकारणम्।

अत्र कैश्चिदुच्यते यद् अज्ञाततत्त्वार्थज्ञानं यदि प्रमा स्यात् तदा 'घटोऽयम्'' इति धारावाहिकज्ञानेषु द्वितीयादीनाम् अप्रमात्त्वं स्यात् तेषां ज्ञानार्थविषयकत्वात्। तेनात्र अयम् "अयम्" इति "उत्तरोत्तरेषां" कालांशानामज्ञातानामवगमात् उत्तरे क्षणे घटादिसद्भावस्य च पूर्वज्ञानेन अनधिगतत्वात् नाव्याप्तिदोषः। तत्त्वपदनिवेशेन भ्रमसंशयादीनामयथार्थज्ञानानां निरासो वेदितव्यः। तथा च अज्ञाततत्त्वावगमरूपायाः प्रमायाः करणत्वेन इन्द्रियसन्निकर्षादीनां प्रमाणत्वं सिद्धम्। तानि च प्रमाणानि भाट्टमते षड् सन्ति। तथा चोक्तम्–

**प्रत्यक्षमनुमानं च शब्दश्चोपमितिस्तथा।**
**अर्थापत्तिरभावश्च षट्प्रमाणानि मादृशाम्॥**

तत्र प्रत्यक्षप्रमाणस्य लक्षणमित्थमिह वर्णितम् "इन्द्रयसन्निकर्षजं प्रमाणं प्रत्यक्षं कानि पुनरिन्द्रियाणि? तत्रोच्यते चक्षूरसनघ्राणस्पर्शश्रोत्राणि मनश्चेति षडिन्द्रियाणि। एवमिह एभिरिन्द्रियैः तत्तत् विषयसन्निकर्षेण तत्तत्प्रत्यक्षात्मकज्ञानं समुत्पद्यते तत्तदिन्द्रियजन्यत्वात् षड्विधं वेदितव्यम्। चाक्षुष–रासन–घ्राणज–स्पार्शन–श्रौत्र–मानसश्चेति। इदानीमिन्द्रियेण सह अर्थस्य सन्निकर्षः व्यापाररूपो वेदितव्यः। स चात्र द्विविधः–संयोग संयुक्ततादात्म्यञ्चेति। तत्र पृथिव्यप्तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगाद्ग्रहणं (ज्ञानं) जायते।

वायोः त्वक्संयोगात् ग्रहो भवति। दिङ्नभस्तमसां दृक् संयोगात् ज्ञानं भवति। शब्दस्य श्रोत्रसंयोगात् ज्ञानं जायते आत्मनश्च मनसः संयोगाद् ग्रहो भवति। कालस्य तु सर्वैरपि इन्द्रियैः संयोगाद् ज्ञानं भवति।

यदा तु चक्षुरादिसंयुक्तेषु पूर्वोक्तेषु पृथिव्यादिषु तदात्मभूतानां जातिगुणकर्मणां ग्रहणं जायते तदा संयुक्ततादात्म्यसंन्निकर्षो बोध्यः। तथा चोक्तं

**रूपादीनां तु संयुक्तद्रव्यतादात्म्यमेव नः।**
**प्रतीतिकारणं तस्मान्न सम्बन्धान्तरस्पृहा।।**

यदा तु जातिगुणकर्मगतानां सत्तारूपत्वं कर्मत्वादीनां ग्रहणं तदा तेषामेव परम्परया तादात्म्यं विज्ञेयम्।

अतः एतेषां ग्रहे (ज्ञाने) संयुक्ततादात्म्यमेव सन्निकर्षो ग्राह्यः।

तदित्थम् उपर्युक्तद्विविधसन्निकर्षेण चक्षुरादि इन्द्रियमाध्यमेन तत्तदर्थे विषयिणी प्रमा जायते। एवमिह संक्षेपेण भाट्टमते प्रत्यक्षप्रमाणस्वरूपं विवेचितमिति।

# मीमांसाश्लोकवार्त्तिके प्रत्यक्षप्रमाणस्य स्वरूपम्

डॉ. गोपालप्रसादशर्मा

नेत्रश्रोत्रादीन्द्रियैः प्रत्यक्षज्ञानस्योत्पत्तिः भवति। इन्द्रियाणां घटपटाद्यर्थैः सह वर्तमाना तथा च दोषरहितव्यापारादिप्रयोगेण उत्पन्ना पुरुषस्य बुद्धिः प्रत्यक्षत्वेन लोकेऽभिधीयते। इदं प्रत्यक्षं वर्तमानस्य वस्तुनः प्रकाशकं भवति। यथा घटस्य चक्षुरिन्द्रियेण सह विद्यमानं तथा च दोषरहितेन प्रयोगेण उत्पन्नं ज्ञानं प्रत्यक्षप्रमाणत्वेन भवति।

इदं प्रत्यक्षं वर्तमानवस्तुनः प्रकाशकत्वाद् आगामिनिकाले सम्पत्स्यमानेषु धर्माधर्मेषु प्रमाणत्वेन न भवितुं शक्यते। अत एव औत्पत्तिकसूत्रे प्रयुक्तः सच्छब्दः सार्थको भवति। सच्छब्दो वर्तमानस्य बोधकः, अपि च सम्प्रयोगशब्दस्य अभिन्नत्वेन विशेषणभूतो येन वर्तमानेन्द्रियसम्प्रयोगरूपोऽर्थः प्रकटीभवति।

ननु यदि इन्द्रियाणि प्रमाणानि सन्ति तर्हि नेत्रे आच्छादिते सति इन्द्रिये विद्यमानेऽपि ज्ञानरूपं फलं कथं न भवति? अत्रोच्यते व्यापारस्याधारेणैव कुत्रापि प्रमाणत्वं भवति। अयं व्यापारोऽस्ति न वा? अस्य निश्चयः फलेन भवति। नेत्रे आच्छादिते सति ज्ञानरूपं फलं न भवति। अनेन च निश्चीयते यदत्र व्यापारो नास्ति। अतो नेत्रे आच्छादिते सति ज्ञानरूपं फलं न भविष्यति, व्यापाराभावात्।

ननु तैजसचक्षुरिन्द्रियस्य सम्बन्धः सर्वैः विषयैः सह अस्ति। अतश्चक्षुषा रसादीनां ग्रहणं कथं न भवति? अत्रोच्यते यदि केवलेन प्राप्तिमात्रेण सम्बन्धो भवेत् तर्हि त्वगिन्द्रियेण रूपस्य ग्रहणं भवितव्यं परं च त्वगिन्द्रियेण रूपस्य ग्रहणं न भवति। अतो योग्यताविशिष्टप्राप्तिः सम्बन्धः। इयं योग्यता कार्यदर्शनेनानुमेया। चक्षुरादीनां रसैः सह

योग्यताविशिष्टसम्बन्धो नास्ति। अतश्चक्षुषा रसैः सह सम्बन्धे सत्यपि ज्ञानस्य प्राप्तिर्न भविष्यति। यथा प्रमाणसिद्धौ योग्यतासहितप्राप्तिरपेक्षिता तथैव फलसिद्धावपि योग्यतासहितप्राप्तिः अपेक्षिता भवति।

## प्रत्यक्षादीनां धर्मे प्रमाणत्वम्

यदा चक्षुरादीन्द्रियैः शाब्दबोधो जायेत तर्हि श्रोत्रेन्द्रियस्य आवश्यकता कुतः? अतश्चक्षुरादीन्द्रियैः अज्ञातशब्दज्ञानार्थमेव श्रोत्रस्य मान्यता भवति। एवं प्रकारेण प्रत्यक्षादिभिः प्रमाणैः अज्ञातानां धर्मब्रह्मादीनां ज्ञानार्थं प्रत्यक्षानुमानप्रमाणाभ्यां भिन्नस्य शब्दप्रमाणस्यावश्यकता भवति। यदि तेषां धर्मादीनां ज्ञानं केनचिदन्यप्रमाणेन जायते तर्हि शब्दप्रमाणं व्यर्थमेव। अतः प्रत्यक्षादीनां धर्मे प्रामाण्यं नास्ति।

लौकिकवाक्यस्य विषयाणां गवाद्यर्थेषु चाक्षुषप्रत्यक्षादिप्रमाणैः सन्निकर्षः सम्भवति। चक्षुरादिप्रमाणैः गवाद्यर्थान् सम्प्राप्यावबुद्ध्यैव पुरुषस्तदर्थबोधकशब्दान् प्रयुङ्क्ते। अतो लौकिकवाक्यप्रयोगो नियमेनान्यप्रमाणैर्ज्ञातानर्थानवबोधयितुं भवति। अतो लौकिकशब्दैः अन्यप्रमाणैर्ज्ञाततदर्थेन पुरुषेणोच्चारणीयैर्भवितव्यमिति नियमः। वैदिक-वाक्येष्वेवं नास्ति। यतो हि वैदिकवाक्येषु येषां ज्योतिष्टोमस्वर्गप्रभृतीनामर्थाः प्रतिपादितास्तेषामर्थानां प्रत्यक्षादिप्रमाणैः ज्ञानं न सम्भवति। प्रयोगविषयीभूतशब्दस्यार्थेन प्रमाणान्तरैः ज्ञातव्यतया भाव्यमेवेत्ययं लौकिकवाक्यानां न्यायो वैदिकवाक्येषु न प्रभवति। तस्माल्लौकिकवाक्यवद् वैदिकवाक्येषु पौरुषेयत्वं न भवति। पौरुषेयत्वं नाम प्रमाणान्तरेणार्थमुपलभ्य निर्मितत्वम्। बुद्धाः परमेश्वरस्यैवावतारा इति सर्वैर्मन्यते। परं च वेदविरोधादास्तिकेषु तेषां सम्मानाभावो वर्तते। बहुधा पुरुषाणां प्रसन्नतैव ग्रन्थानां प्रामाण्ये मूलं जायते। अतः प्रामाण्यपरीक्षणार्थं वेदेषु पुरुषस्वातन्त्र्यस्य वारणं बहुप्रयत्नपूर्वकं क्रियते। मीमांसाश्लोकवार्तिकस्य शब्दनित्यत्वा-धिकरणस्य नवत्युत्तरद्विशततमे श्लोक उक्तं "यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रते'' ति। परमेश्वरोऽपि वेदानां निर्माणे स्वतन्त्रो नास्तीति वेदान्तिनः। तस्मान्मीमांसकैः प्रत्यक्षादीनां धर्मे प्रामाण्यं न स्वीकृतम्।

# मीमांसाशास्त्रदिशा प्रत्यक्षप्रमाणम्

डॉ. देवेन्द्रप्रसादमिश्रः

पूजार्थकमान्धातोः सन्प्रत्ययेऽभ्यासादिकार्ये कृते तदन्तात् स्त्रियां टाप्, मीमांसाशब्दस्य निष्पत्तिर्भवति। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। इन्द्रियाणि नेत्ररसनश्रोत्रघ्राणस्पर्शनमनांसि षड्विधानि। प्राचीनैतेषां स्थानानि परिगणितानि–

**चक्षुर्नाम कनीनिकान्तरगतं तेजोऽथजिह्वाग्रगः**
**तोयांशो रसनं क्षितेरवयवः घ्राणश्च घोणोदरे।**
**सर्वाङ्गप्रसृताश्च मारुतलवाः त्वङ्नामकर्णोदर–**
**व्योमैव श्रवणं मनस्तु विभु तद्देहे च कार्यावहम्।। इति।**

लोके च कार्यसामान्यस्य केनचित्कारणेन जन्यत्वस्य दृष्टत्वात् रूपज्ञानस्यापि कार्यस्य केनचित्करणेन भवितव्यमिति सामान्यतस्सिद्धौ प्रपञ्चे दीपादितेजः एव रूपज्ञानं प्रति कारणं इति दर्शनेन रूपज्ञानकारणं चक्षुरपि तैजसमिति सिद्ध्यति। एवं रसनमपि जलस्यैव। शुष्कवस्तुषु रसव्यञ्ज कत्वदर्शनात् तत् जलीयमिति बोध्यम्। तथा घ्राणमपि गन्धग्राहकं, पार्थिवतदनुलेपनस्य चन्दनगन्धाभिव्यञ्जकत्वदर्शनात् पार्थिवमिति विभावनीयम्। व्यजनपवनस्याङ्गसलिलगतशैत्यस्पर्शाभिव्यञ्जकत्वदर्शनात् स्पर्शोपलम्भकस्य त्वगिन्द्रियस्य वायवीयत्वम्। एवं च परिशेषात् शब्दग्राहकस्य श्रोत्रस्य आकाशात्मकत्वं सिद्ध्यति। न च पृथिव्यादिभूतचतुष्टयान्यतमात्मकत्वमेव श्रोत्रेन्द्रियस्य किं न स्यात् इति वाच्यम्। श्रोत्रमन्येन्द्रियारम्भकेण आरब्धं न भवति इन्द्रियत्वात् इत्यनुमानेन तद्बाधात्। मा भूत्तर्हिभूतात्मकत्वमेव श्रोत्रेन्द्रियस्य इति चेन्न श्रोत्रं भूतात्मकमेव बहिरिन्द्रियत्वात् चक्षुरादिवत् इत्यनुमानस्यैव तत्र प्रमाणत्वात्। तार्किकाश्च शब्दस्य आकाशगुणत्वात् तद् ग्राहकस्य श्रोत्रास्यापि आकाशत्वमिति वर्णयन्ति। मीमांसकमते शब्दः द्रव्यमेव। मनस्तु

सुखदुःखाद्यपरोक्षज्ञानकारणत्वेन परिकल्प्यमानं विभु इति च सिद्धान्तः।

इन्द्रियैः ज्ञानात्मके कार्ये जननीये व्यापारभूतसन्निकर्षस्तु द्विविधः संयोगः, संयुक्ततादात्म्यञ्चेति। अत्र पृथिव्यप्तेजसां नेत्रत्वगिन्द्रियाभ्यां संयोगेन ग्रहणम्। वायोः त्वक्संयोगात् दिङ्नभस्तमसां चक्षुःसंयोगात्। शब्दरूपद्रव्यस्य तु श्रोत्रसंयोगात्, आत्मनः मनस्संयोगात्, कालस्य तु सर्वैरपि इन्द्रियैः संयोगात्। चक्षुरादिसंयुक्तपृथिव्यादिगतानां जातिगुणकर्मणां ग्रहणं संयुक्ततादात्म्यात्। उक्तञ्चाकरे रूपादीनां तु संयुक्तद्रव्यतादात्म्यमेव नः प्रतीतिकारणम्। तस्मान्न सम्बन्धान्तरस्पृहा इति। न च द्रव्यगुणकर्मगतानां सत्तारूपत्वकर्मत्वादीनां ग्रहणाय अन्येऽपि सन्निकर्षाः स्वीकार्या एवेति वाच्यम्। तेषामपि साक्षात् तादात्म्यभावेऽपि परम्परया तादात्म्यसम्भवेन संयुक्ततादात्म्येनैव निर्वाहात्। अथ परम्परया निर्वाहे एकेनैव सन्निकर्षेणालमिति चेत्, अस्तु रूपत्वकर्मत्वदीनां ग्रहणाय परेषां संयुक्तसमवेतसमवायवत् अस्माकमपि संयुक्ततादात्म्यतादात्म्यं नाम तृतीयः सन्निकर्षः अतश्चः द्वेधा त्रेधा वा सन्निकर्षाः।

# कर्मकाण्डस्य प्रत्यक्षप्रामाण्यमीमांसा

डॉ. रामराजउपाध्यायः

**कर्मणः काण्डं कर्मकाण्डमित्यस्त्येका** सुप्रसिद्धा प्रक्रिया। भारतीयसंस्कृतौ कर्मकाण्डीयोपक्रमोऽतीव वैज्ञानिकोऽस्ति। किञ्च वैमतिकाः जनाः विवदन्ते। कर्मकाण्डस्य प्रत्यक्षप्रमाणमीमांसायाः स्वरूपप्रतिपादने किञ्चित् प्रयासो मया क्रियते।

[1]**वेदोऽखिलो धर्ममूलम्** इत्यनुसारेण धर्मस्य वेदमूलकता ख्यापितास्ति। धर्मकृत्यस्य व्यवहारः कर्मकाण्डे पूर्णतया दरीदृश्यते।[2] **मन्त्रब्राह्मणयोर्वेदनामधेयमिति** रीत्या संहिताब्राह्मणयोर्वेदसंज्ञा वर्तते। यज्ञेषु प्रयुक्तानां मन्त्राणां प्रयोगः संहितायां प्राप्यते। कर्मकाण्डे प्रयुक्तवेदमन्त्राणां स्वतः प्रामाण्यं वक्तुं शक्यते।[3] **श्रुतिस्तु वेदो विज्ञेयो** इत्यनुसारेण वेदस्यापरं नाम श्रुतिरस्ति। श्रुत्यां यत्किमप्युक्तं तत्प्रामाण्यं स्वीक्रियते। मीमांसकमनीषिभिरपि श्रुतेरपौरुषेयत्वं निर्णीय तस्यानेकप्रभेदभिन्नत्वं चोक्तम्। मूलतो मन्त्रब्राह्मणात्मकत्वेन द्विधा-सन्नपि स वेदो वाक्यविचारपरम्परायां मीमांसकैः विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पंचविध उक्तः। विषयविभाजने वेदस्तावत्काण्डद्वयात्मक इति पूर्वोत्तरकाण्डभेदात् मीमांसाग्रन्थेषूक्तमस्ति।

वीरमित्रोदयस्य परिभाषाप्रकाशे श्रुतेः षड्विभागाः विद्यन्ते। विधि-निषेधार्थवादमन्त्रनामधेयोपनिषद्भेदात्। तत्र विधेस्तावत्तत्तद्विषयप्रवर्तनाव-बोधकत्वेन धर्मस्य प्रामाण्यमस्ति। यथा "वायव्यं श्वेतमालभेत भूतिकामः[4]"

---

1. मनुस्मृतिः 2.6
2. आप. श्रौ. 24.1.31 बौ गृ. 2.62 कौ. सू. 1.3
3. मनु 2.10
4. तै. सं 2.1.1

इत्यादेर्द्रव्यदेवतासंयोगानुमितवायुदैवत्ययागप्रवर्त्तनावबोधकत्वेन। विधिर्विधेयस्तर्कश्च वेदः[5] इत्यत्र विधिर्नाम ब्राह्मणं, विधेयो नाम मन्त्रः, तर्को नामार्थवादः स्पष्टमस्ति।

## विधिः

[6]**अज्ञातार्थज्ञापको वेदभागो विधिः** इत्यनुसारेण **दर्शपूर्णमासाभ्यां यजेत अग्निहोत्रं जुहुयादित्यादिविधायकं** ब्राह्मणवाक्यम्। विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्मांगत्वेनेति विधेयो मन्त्रः इषेत्वादिः। तर्कशब्देनार्थवादो ज्ञायते। तर्क्यते ह्यनेन सन्दिग्धोऽर्थः। यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति घृतसंस्तत्वात् तर्क्यते घृताक्ता इति। तर्कः कल्पसूत्रमिति भर्तृयज्ञः। तर्को मीमांसेति कल्पतरुः। तत्र कस्यापि कर्मकाण्डस्य विधिर्वर्णनं ब्राह्मणग्रन्थेषु प्रतिपादितमस्ति। विधिहीन[7] कर्मकाण्डं स्वकीयोद्देश्यस्य प्राप्तिं कर्तुं न समर्थोऽस्ति यतो हि तस्मिन् फलाभावत्वं विद्यते। विधिसंयुक्तं कृत्यमेव पुण्यजनकत्वयुक्तमस्ति। तर्हि वैदिककर्मकाण्डे वेदविहितत्त्वं तत्र विधिसंयुक्तत्वं विद्यते। विधिपूर्वकं कृत्यं स्वयमेव प्रामाण्यसम्पृक्तमस्ति। यथा कस्यापि कर्मकाण्डे तस्य कृत्यं यद् वर्णितमस्ति तद्विधिरस्ति। तेनैव प्रकारेण तस्य सम्पादनं क्रियते। वेदशब्दव्यतिरिक्तैः प्रत्यक्षानुमानोपमानादिप्रमाणैरपरिज्ञातमर्थं यो वेदयति स विधिः। सामान्यरूपेण विधिः चतुर्धा विभज्यते। उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः प्रयोगविधिश्च।

## उत्पत्तिविधिः–

**कर्मस्वरुपमात्रावबोधको विधिरुत्पत्तिविधिः।** कर्मकाण्डे द्रव्यदेवता संबन्धमज्ञापितं तयोः ज्ञापनमुत्पत्तिरस्ति। मीमांसायां प्राप्यते येन वाक्येन इदं कर्म कर्त्तव्यमिति बोध्यते तत्कर्मोत्पत्तियुक्तं वाक्यमित्युक्तम्। सर्वाणि कर्मविधायकवाक्यानि उत्पत्तिविधेरुदाहरणानि सन्ति। यथा–अग्निहोत्रं जुहुयात् स्वर्गकामः।[7]

---

5. पारस्करगृह्यसूत्रम् 2.6.5
6. अर्थसंग्रहे विधिप्रकरणम्
7. विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते। श्रीमद्भगवद्गीतायां 17.13

**विनियोगविधिः**

**अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिर्भवति। यथा दध्ना होमं भावयेदिति।** विशिष्टरूपेण नियोगः विनियोगः। उक्तोदाहरणे दध्ना एव होमः करणीय इतिविधिर्विद्यते। मन्त्राणां प्रयोगावसरे कर्मकाण्डे विनियोगः प्राप्यते। तत्र हस्ते जलमादाय अस्य मन्त्रस्य अमुक ऋषिः, अमुकछन्दः, अमुकदेवता, अस्मिन् कर्मणि पाठे जपे हवने विनियोगः। अर्थाद् यत्र विनियोगस्य सम्यक् विधिविधानं प्राप्यते तत्र विनियोगविधिर्भवति। अस्माकं तु मतं विद्यते यस्य मन्त्रस्य विनियोगः यस्मिन् कर्मणि भवति तस्मिन् तत् साधकत्वमागच्छति।

**अधिकारविधिः**

**कर्मफलसंबन्धबोधको विधिरधिकारविधिः।** अर्थादत्र कर्तृविशेष-विधिरिति देवनाथठक्कुरः वदति। फलस्वाम्यावबोधकोविधि-रधिकारविधिरस्ति। कस्यापि कर्मणोपक्रमः फलोत्पादकं भवति। तस्य भोक्तृत्वं कर्तृत्वे व्याप्तमस्ति। कर्तैव फलभोक्तुकामा वर्तते। व्याजेनानेन कार्यस्य सम्पादनं करोति। कर्मणोत्पादितं फलं सुखकरं स्यादिति विचिन्त्य कर्त्ता कर्मण्यभिप्रवृत्तो भवति। एतावता सैवाधिकारी। यस्मिन् विधौ अधिकारनिरूपणं क्रियते तत्राधिकारविधिः प्रतिपाद्यते।

**प्रयोगविधिः–**

**प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः।** प्रयोगविधेः स्वरूपं कर्मकाण्डे दृश्यते। प्रधानविधेरितिकर्त्तव्यतायां यावत्क्रियाजातांगत्वेन तत्र संबद्धं तावत्क्रियाबोधकैः तैस्तैरंगविधिभिस्सह प्रधानविधेरेकवाक्यतया सर्वेषां वाक्यानां मिलित्वा यो महावाक्यार्थस्तादृशमहावाक्यार्थावगतो यो विधिः स प्रयोगविधिरित्यर्थः। यथा श्राद्धकाण्डे[8] उपदेशातिदेशसंकलतया सम्पन्नः पिण्डदानप्रयोग उच्यते। तत्र श्राद्धादिप्रयोगे पितृतीर्थेन पिण्डदानं जलदानञ्च कर्त्तव्यम्। तत्र पवित्रस्य प्रयोगः कथं क्रियते? मोटकादिनिर्माणं कृत्वा यथाविहितं प्रयोगं कर्त्तव्यमित्येतत्सर्वं प्रयोगविधौ दृश्यते। कर्मकाण्डः

8. स्मृतिचन्द्रिकायां श्राद्धकाण्डे पृ. 379

सर्वदा विधिसंयुक्तं भवत्येतावता अत्र कर्मकाण्डस्य प्रामाण्यं प्रसिद्ध्यति।

**निषेधः**

**निषेधस्य तु निवर्तनावबोधजनकत्वेन, यथा कलञ्जं न भक्षयेदित्यादिः।** कर्मकाण्डे सर्वत्रैवं प्राप्यते इदं न कर्त्तव्यम्। अत्र निषेधोऽवगम्यते। फलजनकतावबाधकत्वं निषेधत्वमस्ति। कर्मकाण्डस्य मुख्योद्देश्यमस्ति संकल्पितस्य कार्यस्य संसिद्धिः। संकल्पितं कार्यं तत्र भवितुं शक्यते यत्र यथाविधिः कर्मकाण्डः सम्यक् प्रतिपाद्यते। तत्र निषिद्धस्य निषेधः करणीयः सामान्यत इष्टप्राप्तिप्रतिबन्धकतया अनिष्टोत्पादकतया च यन्न ज्ञायते। यच्च शास्त्रैकमात्रं संवेद्यं निषेधविधिना पर्यवसीयते तन्निषिद्धं कर्म। आर्षेषु स्मार्तेषु च निबन्धेषु निषिद्धक्रियाणां बाहुल्यं वर्तते। तत्र केचन आश्रममूलकाः निषेधाः–

**[9]मधुमांसाञ्जनोच्छिष्टशूक्तस्त्रीप्राणिहिंसनम्।**
**भाष्करालोकनाश्लीलपरीवादांश्च वर्जयेत्।।**

कर्माङ्गनिषेधविधयोपि भवन्ति। जाबालिः–

**[10]ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम्।**
**रत्योषधपरान्नानि श्राद्धकर्त्ता विवर्जयेत्।।**

सर्ववर्णाश्रमसाधारण्येन सामान्यनिषेधविधयोऽपि बहवः। यथा–

**[11]नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्मधीः।**
**ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत्।।**

**संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव।**
**अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा।।**

भारतीयवैदिककर्मकाण्डे नित्य–नैमित्तिक–काम्य–निषिद्धरूपाणां कर्म विभागानां वर्णनं सुव्यस्थितं यथा दृश्यते तथा अन्यत्र न।

---

9. आ. स्मृ. 1.33. पृ. 94
10. नि. सि. 328 पृ.
11. मनु. स्मृ. 2.161–162

**अर्थवादः-**

**प्राशस्त्यनिन्दान्यतरलक्षणविधिशेषभूतं वाक्यमर्थवादः।** अर्थवादो द्विविधः प्रशंसार्थवादो निन्दार्थवादश्च। यस्मिन्नर्थवादे प्रशंसा श्रूयते तस्मिन् प्रशंसार्थवादः। अस्मिन् विधावापेक्षितप्राशस्त्यं समर्प्यते। यथा वायुर्वै क्षेपिष्ठा देवता[12] इत्यादि वायव्ययागादिप्रशंसार्थतया। द्वितीयः निन्दार्थवादः। यस्मिन् अर्थवादे निन्दा श्रूयते तत्र निन्दार्थवादः। निषेधापेक्षितनिन्दा समर्प्यते यत्र तत्र निन्दार्थवादः। यथा यदश्रु अशीर्यत् तद्रजतमभवदित्यादिस्तस्माद्बर्हिषि रजतं न देयम्।[13] इत्यादिनिषिद्धरजतदाननिन्दार्थतया।

**मन्त्रः**

**मननात् त्रायते इति मन्त्रः।** कर्मकाण्डे मन्त्रैः सर्वाणि कार्याणि सम्पाद्यन्ते। देवानामाह्वाता होता इति रीत्या होता नाम्नः ऋत्विक् देवानामावाहनं करोति। स कथं देवानामावाहनं करोति। मन्त्रानुच्चारणपुरस्सरं देवानामावाहनं करोति। देवानामावाहनं कुत्र स्यादित्यावाहनमन्त्राणां प्रयोगात् पूर्वं विचार्यते। तत्र प्रथमं स्थाननिर्धारणं क्रियते। वेदिस्थण्डिलोपरि देवस्थानं निर्माय देवानामावाहनं क्रियते। भद्रमण्डलादिकं निमार्णमेतदर्थं क्रियते। तस्मिन् मण्डलेऽपि देवानां स्थानं निर्धारितं भवति। आवाहनानन्तरमर्चनं क्रियते। कस्य पदार्थस्य समर्पणं केन मन्त्रेण क्रियते इति विज्ञाय मन्त्रोच्चारणपूर्वकं समर्प्यते। उद्गाता सामवेदस्य मन्त्राणामुच्चारणपूर्वकं देवान् प्रसीदयति। प्रसन्नो भूत्वा वरं प्राप्यते। तत्र विधीनां सम्पादने यत्र कुत्रापि त्रुटिर्भवति तत्र त्रुटीनां परिमार्जनाय ब्रह्मानाम्नः ऋत्विक् मन्त्राणां जपं करोति। तेनानुष्ठानं त्रुटिरहितं भूत्वा सिद्धिदायकं भवति। प्रकारेणानेन मन्त्राणां प्रयोगो भवति।

कर्मकाण्डस्य बहूनि विधानानि भवन्ति। यस्मिन् प्रत्यक्षप्रमाण मीमांसायाः दिग्दर्शनं भवति। परञ्चात्र पञ्चविधानानि ख्यातानि सन्ति- **श्रौतकर्मकाण्डम्, स्मार्त्तकर्मकाण्डम्, पौराणिककर्मकाण्डम्, तान्त्रिककर्मकाण्डम्, मिश्रकर्मकाण्डञ्च।**

---

12. तै. सं. 2.1.1
13. तै. सं 1.5.1.12

**श्रौतकर्मकाण्डम्**

**श्रुतौ यस्य कर्मकाण्डस्य विवरणं प्राप्यते तत् श्रौतकर्मकाण्डमस्ति।** यथा लिखितमस्ति श्रौतं नाम कर्मकाण्डम्, छन्दसां गायत्री, वेदेषु साम, सामसु बृहत्साम, सतीषु सीता, महाभारते गीता, मुनीनां व्यासः, वृष्णीनां वासुदेवः परमं प्राधान्यमावहति। सर्वेषां कर्मकाण्डानां मूलं श्रौतमस्ति। साक्षाच्छ्रुतिप्रतिपादितत्वात् सर्वकर्मकाण्डेषु मूर्धन्यमस्ति श्रौतकर्मकाण्डम्। अत्र दर्शपूर्णमासयागादिकर्मकाण्डम्, औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, श्रवणाकर्म, शूलगवः, अग्निहोत्रम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणियागादि कर्मकाण्डस्य स्वतः प्रामाण्यमस्ति श्रुतिः प्रामाण्यत्वात्।

**स्मार्त्तकर्मकाण्डम्**–चतुर्दशविद्यास्थानान्युक्तानि

**[14]पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशः॥**

उपर्युक्तसन्दर्भेषु **श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु स्मृतिरिति** धिया धर्मशास्त्रे यत्किमपि कर्मकाण्डं प्रतिपादितमस्ति तत्सर्वं स्मार्त्तकर्मकाण्डमस्ति। अस्य कर्मकाण्डस्य प्रामाण्यं स्मृतिग्रन्थास्सन्ति। यतो हि उच्यते–

**वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम्।**
**एतत्त्रयं यत्र भवेत् प्रमाणं तद्वाक्ययुक्तं कुरु तत् प्रमाणम्।**

तर्हि स्मृतिग्रन्थेषु यत्प्रतिपादितं तत्सर्वं प्रमाणरूपेण स्वीक्रियते। प्रमुखस्मृतिकाराणां नामान्येतादृशानि सन्ति–

**[15]मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽगिराः।**
**यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पतिः॥**

**पराशरव्यासशंखलिखितादक्षगौतमो।**
**शातापो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥**

---

14. याज्ञवल्यक्यस्मृतौ 1.3
15. याज्ञवल्क्यस्मृतिः 1.4-5

एतैः स्मृतिकारैः स्वकीये स्मृतिग्रन्थे यत्कर्मकाण्डं प्रतिपादितं तत् स्मार्त्तकर्मकाण्डमस्ति। स्मृतिशब्देन हि निबन्धेषु प्रतिपादितानां स्मृतिग्रन्थानां पद्यात्मकानि गद्यात्मकानि वचांसि गृह्यसूत्रधर्मसूत्रादिग्रन्था अन्तर्भूताः भवन्ति। स्मार्त्तकर्मकाण्डे, संस्काराः, आचाराः, दानम्, श्राद्धम्, शान्तिः, व्रतम्, प्रतिष्ठा, उत्सर्गादिविषयाः वर्णितास्सन्ति। मानजीवनस्य सम्यक्तया कुशलतासम्पादनाय संस्काराणां सम्पादनमतीवावश्यकमस्ति। तत्राचारादीनामनुपालनमप्यावश्यकमस्ति। अन्यत्सर्वं सुप्रसिद्धमस्ति।

### पौराणिकं कर्मकाण्डम्

**येषां कर्मणां पुराणग्रन्थेषु विधेरुल्लेखः तानि कर्माणि पौराणिकानि कथ्यन्ते।** पौराणिके कर्मणि देवतानां प्रतिमासु आवाहनपूर्वकं पूजनादि भवति। अत्र विविधोपचारैः देवाः प्रपूज्यन्ते। पञ्चोपचाराः, दशोपचाराः षोडशोपचाराः, त्रिंशदुपचाराः, षष्ट्युपचाराः, राजोपचाराः, शतोपचाराः इत्यादय उपचाराः भवन्ति। कर्मकाण्डेऽस्मिन् यथासामर्थ्यं स्यात् तदनुसारेण भावपूर्वकं उपचारैः पूजनं कर्त्तव्यम्।

### तान्त्रिकं कर्मकाण्डम्

**[16]सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः।**
**इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः सम्प्रचक्षते।।**

तन्त्रतया प्रसिद्धो यो ग्रन्थराशिः वर्तते तस्मिन् प्रोक्तानि यानि कर्माणि तानि तान्त्रिककर्माणि सन्ति। भट्टोजिदीक्षितलिखित-डामररुद्रयामलवचनानां स्वातन्त्र्ये प्रामाण्यभावेऽपि उदाहृतपुराणवचनोपबृंहिततया प्रमाणं सङ्गच्छते।[17] धर्मशास्त्रनिबन्धकृतां पुरुषार्थचिन्तामणिकारादीनां निर्णयात् तन्त्राणां तत्कर्मणां च सदाचारसमनुगृहीततया प्रामाण्यं वर्तते। तान्त्रिककर्मकाण्डे आचारादीनानुवर्णनम्, शिष्टाचाराः, सदाचाराश्च सम्पाद्यन्ते। लोकगर्हा देशिकाचारादयोऽप्यत्र विविच्यन्ते। तन्त्रभेदा इत्थं प्रतिपादिताः–

---

16. विष्णुसंहितायाम् 7 पृ.
17. पु. वि. पृ 80

[18]आचारस्त्रिविधः प्रोक्तः साधकानां मनीषिभिः।
दिव्यदक्षिणवामाश्चाधिकाराः सप्तकीर्तिताः।
सप्ताधिकारा विदुषः साधकस्य मता इमे।
दीक्षा ततो महादीक्षा पुरश्चरणमेव च।
ततो महापुरश्चर्याभिषेकस्तदनन्तरम्।
षष्ठो महाभिषेकश्च तद्भावोऽन्तिम ईरितः।
साधको येन लभते मोक्षं नास्तीह संशयः।
एषां सप्ताधिकाराणां नामानि विविधानि वै।

## मिश्रं कर्मकाण्डम्

[19]**वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः** इति भगवता मखत्वेनाभिप्रेतस्य कर्मकाण्डस्य मिश्रभेदेन त्रैविध्यमाख्यातम्। यद्यपि सामान्यतया श्रौतस्मार्तपौराणिककर्मकाण्डं त्रिविधं विद्यते।

परञ्च श्रौतस्मार्तपौराणिकतान्त्रिककर्मसु यथायथमितरकर्मकाण्ड-विधानानामनुष्ठानं यदा भवति तदा मिश्रं तत्कर्मकाण्डमिति कथ्यते। वर्तमाने स्मार्तादिकर्मणां विवाहादिसंस्काराणां पौराणिकैः सहापि संमिश्रणं बहुधोपलक्ष्यते।

18. धर्मकल्पद्रुमे 2.316
19. श्रीमद्भागवतमहापुराणे 11.27.7

# वात्स्यायनसम्मत-प्रत्यक्षप्रमाणविमर्शः

**प्रो. पीयूषकान्तदीक्षितः**

आन्वीक्षिकीति नाम्ना प्रथितं न्यायशास्त्रं सर्वविद्यानां प्रदीप-स्थानीयमिति विदितमेव विदुषाम्। विद्योद्देशप्रकरणे कौटिल्येनापि मुक्तकण्ठेन प्रोक्तम्–

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां सेयमान्वीक्षिकी मता।।** इति।

यथा प्रदीपः परितः स्थितं सम्बद्धं सर्वमेवार्थजातं प्रकाशयति तथैव न्यायशास्त्रम् अनुपदम् अन्वीक्षया प्रवर्तमानं यस्मिन् कस्मिन्नपि शास्त्रे स्थानमाविष्करोति चेत् तत्र विद्यमानं शास्त्रीयं तत्त्वं सरहस्यं प्रकाशयत्येव। या चान्वीक्षिकी विद्या सर्वविद्यानां प्रकाशिका सा आन्वीक्षिक्यां विद्यमानानां तत्त्वानां प्रकाशिका तावदाञ्जस्येन स्वतः भवत्येवेति नातिरोहितं सुधियाम्।

आन्वीक्षिक्यां महर्षिणा गौतमेन प्रमाणादीनि निग्रहस्थानान्तानि षोडशतत्त्वानि परमपुरुषार्थसाधकत्वेन स्वीकृतानि। **''प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः''** इत्यस्मिन् प्रथमे सूत्रे परमकारुणिको मुनिः गौतमः प्रमाणस्य सर्वप्रथममुद्देशं कथं करोति? आत्मादिद्वादशप्रमेयाणां तत्त्वज्ञानस्यैव निःश्रेयसाधिगमप्रयोजकत्वादिति तु नैवाशङ्कनीयम्। प्रमाणस्य प्रमेयादिसकलपदार्थव्यवस्थापकत्वेन प्राधान्यात् सूत्रे प्राथम्येनोद्देशस्य निराकुलत्वात्।

नव्यन्यायप्रवर्तकाः गङ्गेशोपाध्याया अपि चिन्तामणिनामके महानिबन्धे प्रामाण्यवादप्रकरणे **'अथ जगदेव दुःखपङ्कनिमग्न-**

**मुद्दिधिर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।** इति ग्रन्थेन सर्वेषां प्रमेयादिपदार्थानां मोक्षोपयोगिनां व्यवस्थितिः प्रमाणायत्तैवेति निरूपयन्तः प्रमाणतत्त्वनिरूपणस्य प्राथम्ये औचित्यमेव प्रदर्शयन्ति।

'यद्यपि प्रमाणादयः पदार्थाः' इत्येवं विधेन वाक्येन, प्रथमसूत्रात्मकेन वाक्येन वा प्रमाणादीनां तत्त्वज्ञानं तु भवत्येव परं प्रमाणत्व-प्रमेयत्वादिसामान्यधर्मेण प्रमाणादीनां ज्ञानमेव तत्त्वज्ञानत्वेन नात्राभिमतं महर्षेः गौतमस्य, प्रत्युत प्रमाण-प्रमेयादितत्त्वानाम् उद्देश-लक्षण-परीक्षामुखेन यद्विशिष्य ज्ञानं तदेवात्र वस्तुतः तत्त्वज्ञानत्वेनाऽनुमतमिति विशेषतो विभावनीयम्।

न्यायदर्शने प्रथमसूत्रे प्रथमं समुद्दिष्टस्य प्रमाणतत्त्वस्य **'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि,** इत्येवं चतुर्धा विभजनं विधाय चतुर्धा विभक्तेषु प्रमाणेषु प्रथमोपात्तस्य प्रत्यक्षस्य लक्षणम् **'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'** इत्येवं न्यायसूत्रे गौतमः प्रस्तौति। यद्यपि प्रमायाः करणस्वरूपस्य प्रमाणस्य विभागानन्तरं प्रत्यक्षप्रमाणस्यैव लक्षणं समुपयुक्तमित्यापाततः प्रतिभाति परं लक्षणतः प्रत्यक्षप्रमाणप्रत्ययं विना प्रत्यक्षप्रमाकरणरूपस्य प्रत्यक्षप्रमालक्षणस्यापि परिज्ञानम् असम्भवीति प्रत्यक्षप्रमाया एव सर्वतः प्रथमं यल्लक्षणं निर्दिष्टं तत् सूपपद्यत इति विज्ञेयम्। लक्षणमहिम्ना ज्ञातायाञ्च प्रत्यक्षप्रमायां प्रत्यक्षप्रमाकरणत्वरूपं प्रत्यक्षप्रमाणलक्षणन्तु आञ्जस्येन विज्ञातं भवत्येवेति सर्वमवदातम्।

प्रत्यक्षलक्षणं व्याकुर्वन् मुनिः वात्स्यायनः **'इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं, तत् प्रत्यक्षम्'** इत्येवं स्वहृद्यं द्योतयति। अत्रायं प्रश्नः समवतरति यत् यथा प्रत्यक्षं जनयितुं इन्द्रियस्यार्थेन सन्निकर्षः आवश्यकः तथैव इन्द्रियार्थसन्निकर्षात् पूर्वं तावदात्मनः मनसा संयोगः मनसश्चेन्द्रियेण योगोऽपि नितरामावश्यकः। एवं सति प्रत्यक्षलक्षणे महर्षिणा गौतमेन कथन्नात्म-मनस्संयोगस्य मन इन्द्रियसंयोगस्य च समुल्लेखो प्रत्यक्षजनकत्वेन विहित इति। प्रश्नमिमं समादधता वात्स्यायनेन मुनिना

प्रोच्यते यत् प्रत्यक्षप्रमालक्षणसूत्रे 'एतावत् प्रत्यक्षे कारणम्' इति गौतमस्य नैव प्रतिपिपादयिषितं प्रत्युत प्रत्यक्षप्रमायाः यद्विशिष्टमनितरसाधारणं करणं तदेव विशेषतो विवक्षितमिति, सूत्रेऽस्मिन् प्रत्यक्षप्रमायाः विशिष्टं यत् कारणं तस्यैव निर्देशात्। एतावता आत्ममनस्संयोगस्य मन इन्द्रियसंयोगस्य च प्रत्यक्ष-प्रमाकारणत्वं तावत् कथमपि प्रतिषिद्धं न भवति।

यथा इन्द्रियस्यार्थेन सन्निकर्षात् केवलं प्रत्यक्षप्रमा जन्यते न तथा आत्मनः मनसा संयोगेन केवलं प्रत्यक्षप्रमोपजायते प्रत्युत अनुमितौ, उपमितौ शाब्दे चापि आत्मनः मनसा योगः कारणं भवतीति सर्वापरोक्षम्।

एवं सति मनसः इन्द्रियेण संयोगस्तु प्रत्यक्ष-प्रमाजनने एवोपयुज्यते, अस्य च मन इन्द्रिसंयोगस्य अनुमित्युपमितिशाब्दप्रमायामनुपयोगात् कथं न प्रत्यक्षलक्षणे समुल्लेखो विहित इति जिज्ञासाऽव्याहतैव तिष्ठति।

जिज्ञासायाः अस्याः समाधानं प्रस्तावयता वात्स्यायनेन मन इन्द्रियसंयोगस्य प्रत्यक्षप्रमाऽसाधारणकारणत्वं घ्राणज-रासन-चाक्षुष-त्वाच-श्रावणभेदेन विभिन्नेऽपि प्रत्यक्षे समानरूपेण कारणत्वान्निरस्तम्।

इन्द्रियस्य, अर्थेन गन्ध-रस-रूप-स्पर्श-शब्देन परस्परं भिन्नेन सन्निकर्षस्तु नितरां भिन्न एव फलतः इन्द्रियार्थसन्निकर्षरूपस्य प्रत्यक्ष-प्रमाकारणस्य घ्राणजादिप्रभेदभिन्नेष्वपि प्रत्यक्षेषु समानरूपेण कारणत्वं नास्तीति इन्दियार्थसन्निकर्षस्यैव प्रत्यक्षप्रमाविशिष्टकारणत्वेनासाधारणकारणत्वेन वा प्रत्यक्षसूत्रे समुल्लेखः समुचित इति सुनिश्चीयते।

एवम् **'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं'** प्रत्यक्षम् इति प्रत्यक्षप्रमालक्षणम् सूपपन्नं भवति। अत्र प्रत्यक्षप्रमालक्षणे यदि विशेष्यवाचकं ज्ञानपदं न दीयते चेत् **'इन्द्रियार्थसन्निकर्षोत्पन्नम्'** प्रत्यक्षमिति पर्यवसितं प्रत्यक्षलक्षणम् मनो स्वरूपस्य इन्द्रियस्य आत्मस्वरूपेण अर्थेन सन्निकर्षे सति उत्पन्ने सुख-दुःखादौ अतिव्याप्तं भवति। अस्याः अतिव्याप्तेः निवारणार्थं प्रत्यक्षप्रमालक्षणे ज्ञानपदसन्निवेशोऽनिवार्यः। निविष्टे च ज्ञानपदे, सुख-दुःखादौ **'मन आत्मसन्निकर्षोत्पन्नत्वस्य'** सत्त्वेऽपि ज्ञानत्वस्याभावादति-व्याप्तिः सुदूरपराहतेति ध्येयम्।

प्रत्यक्षलक्षणे ज्ञानपदसन्निवेशेन अनुपदमेवोपात्ता सुखदुःखादावतिव्याप्तिः भवतु तावन्निरस्ता परं प्रत्यक्षप्रमाभिन्नस्य सर्वस्यापि ज्ञानस्य अनुमित्युपमिति– शाब्दात्मकस्य, मनो रूपेन्द्रियस्य आत्मस्वरूपार्थेन सन्निकर्षे सत्येव जायमानत्वात् इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वरूपस्य प्रत्यक्षप्रमालक्षणस्य अनुमित्यादिज्ञानेऽतिव्याप्तिः वज्रलेपायमाना तिष्ठति, किञ्च प्रत्यक्षलक्षणमिदं नित्ये परमेश्वरप्रत्यक्षे अव्याप्तमपि भवति परमेश्वरप्रत्यक्षस्याजन्यत्वादिति तु नाशङ्कनीयम्, प्रत्यक्षप्रमालक्षणे ज्ञानपदेन साक्षात्करोमीत्यनुव्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्नस्यैवावबोधात्। एवञ्चानुमित्युपमितिशाब्दप्रमायां ईदृशसाक्षात्त्वजातेः अविद्यमानत्वाद् लक्षणसमन्वयाभावान्नातिव्याप्तिः। परमेवं परिष्कृतस्यापि प्रत्यक्षप्रमालक्षणस्याव्याप्तिस्तु परमेश्वरप्रत्यक्षे तदवस्थैव तिष्ठतीति ज्ञेयम्।

ईश्वरप्रत्यक्षे जातायाः अव्याप्तेः निवारणार्थं तु **'इन्द्रियार्थसन्निकर्षोत्पन्नमिति'** सावधारणमभ्युपेत्य इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्नं ज्ञानं प्रत्यक्षम्' इत्येवं परिष्कृतं प्रत्यक्षप्रमालक्षणमभ्युपगन्तव्यम्। एवं प्रत्यक्षलक्षणपरिष्कारे सति ईश्वरप्रत्यक्षस्य केनाप्यनुत्पन्नत्वात् इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्नत्वं ज्ञानत्वञ्च निराबाधमेवेति तत्र लक्षणसमन्वयान्नातिव्याप्तिः।

एवं परिष्कृतस्यास्य प्रत्यक्षप्रमालक्षणस्य अनुमित्युपमितिशाब्दप्रमायां समन्वयाभावात् अतिव्याप्तिरपि पूर्वदर्शिता निरस्ता भवति अनुमित्यादिप्रमायां इन्द्रियार्थसन्निकर्षातिरिक्तेन (मन आत्मसंयोगातिरिक्तेन) परामर्श–सादृश्यज्ञान–पदज्ञानेन समुत्पन्नत्वस्यैव सिद्धत्वेन **'इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्न–ज्ञानत्वरूपप्रत्यक्ष**–प्रमालक्षणस्य समन्वयासम्भवादिति विशेषतोऽवधेयम्। वस्तुतः लक्षणस्यास्य एवं परिष्कृतस्य **'ज्ञानाकरणकं ज्ञानम्'** इति प्रसिद्धे प्रत्यक्षप्रमालक्षणे एव तात्पर्यमुन्येयम्।

प्रत्यक्षलक्षणेऽस्मिन् **'अव्यपदेश्य'** पदं शाब्दे प्रत्यक्षलक्षणातिव्याप्तिनिवारणार्थमिति ध्येयम्। वात्स्यायनभाष्यानुसारं यावदर्थं वै नामधेयशब्दाः नामधेयशब्दैश्चार्थसम्प्रत्ययो आविद्वदङ्गनागोपालं जायते। अर्थात् जगतीतले यावन्तः अर्थाः पदार्थाः वा सन्ति तावन्तः नामधेया अपि प्रसिद्धाः सन्ति अथ च एभिः नामधेयात्मकैः शब्दैस्तावदर्थविज्ञानं सर्वेषां भवति। शब्देन च

अर्थविज्ञाने जाते संसारे व्यवहारोऽपि आञ्जस्येन सिद्ध्यति। वात्स्यायनदिशा इन्द्रियस्यार्थेन सन्निकर्षात् समुत्पन्नम् अर्थज्ञानं **'रूपमिति' 'रस'** इत्येवं वा विविच्यते। प्रसिद्धाः रूपरसशब्दाश्च अर्थस्य ज्ञानविषयस्य वा नामधेयम्। रूपशब्देन च **'रूपमिति जानीते'** इति ज्ञानस्य **'रस इति जानीते'** इत्याकारकज्ञानस्य च व्यपदेशो भवति। रूपरसादिशब्देन व्यपदिश्यमानस्य ज्ञानस्याकारः वात्स्यायनमुनिदिशा **'रूपमिति जानीते' 'रस इति जानीते'** इत्याद्याकारको स्वीक्रियते। अस्य विवरणं **'रूपमिति ज्ञानवान्' 'रस इति ज्ञानवान्'** इत्येवं सम्भवति। इदं ज्ञानं व्यपदिश्यमानं सत् शाब्दं प्रसज्यते इत्यस्ति वात्स्यायनस्य समुद्घोषः। यतः इदं शाब्दं इन्द्रियार्थसन्निकर्षोत्पन्नेन 'रूपमिति' 'रस इति' वा साक्षात्कारेण सम्बद्धमस्ति अतः इदमपि इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वेन सङ्ग्रहीतं भवतीति नामधेयव्यपदेश्येऽस्मिन् शाब्दज्ञानेऽतिव्याप्तिः प्रत्यक्षलक्षणस्य सुस्फीतैव, अस्याः वारणं लक्षणे अव्यपदेश्यपदप्रवेशे सारल्येन भवतीति सर्वापरोक्षम्। वात्स्यायनमहर्षिः अथापि इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यमाने ज्ञाने ज्ञानविषयनामधेयैः व्यपदिश्यमाने शाब्दे ज्ञाने विभेदं विवेचयत् निर्दिशति यत् **'अनुपयुक्ते शब्दार्थसम्बन्धे यदिदमर्थज्ञानं 'रूपमिति' 'रस इति' स्वरूपकं तत् नामधेयशब्देन नैव व्यपदिश्यते, स्यान्नाम शब्दार्थयोः मध्ये विद्यमानः वृत्तिस्वरूपः सम्बन्धः कस्यचिद्विज्ञातः अविज्ञातो वा। यदा चोपयुक्ते शब्दार्थसम्बन्धे अस्यार्थस्य अयं शब्दो नामधेयम्'** इति ज्ञानपुरस्सरम् अर्थः रूपाद्यात्मकः गृह्यते तदा यदिदमर्थज्ञानं तत् चक्षुषा जायमानेनार्थज्ञानेन न विशिष्यते अनयोः वात्स्यायनदिशा कश्चन अन्यः समाख्याशब्दो नास्ति। येन प्रतीयमानो व्यवहारः सिद्ध्येत् अप्रतीयमानेन च न व्यवहारः अतः तस्याज्ञेयस्यार्थस्य वात्स्यायनेन इतिकरणयुक्तेन संज्ञाशब्देन 'रूपमिति ज्ञानं' 'रस इति ज्ञानं' इत्येवं निर्देशः कृतः। एतावता अर्थज्ञानकाले समाख्याशब्दः न व्याप्रियते, व्यवहारकाले तु व्याप्रियत इति सुसिद्ध्यति वात्स्यायनाकूतम्।

प्रत्यक्षप्रमालक्षणे अव्यभिचारीति पदोपादानं भ्रमे दोषापाकरणार्थम्। ग्रीष्मर्तौ सूर्यरश्मयः भूमिसम्बद्धेनोष्मणा संसृष्टाः स्पन्दमाना यदा दूरस्थस्य पुरुषस्य चक्षुषा सन्निकृष्यन्ते तदा चक्षुरिन्द्रियस्यार्थेन स्पन्दमानेन रश्मिणा

सन्निकर्षे सति **'उदकम्'** इति भ्रमात्मकं ज्ञानमुत्पद्यते अत्र भ्रमात्मके ज्ञाने प्रत्यक्षप्रमालक्षणस्य समन्वयादतिव्याप्तिः स्पष्टैव। यत् अतस्मिन् तदिति तद्व्यभिचारि ज्ञानम् अर्थात् तदभाववति तत्प्रकारकं ज्ञानं व्यभिचारि भवति। एवं यत् ज्ञानं तस्मिन् तदिति तत् अव्यभिचारि भवति, अर्थात् तद्वति तत् प्रकारकं ज्ञानम् अव्यभिचारि प्रोच्यते। अथ च वात्स्यायनदिशा प्रत्यक्षम् अव्यभिचारि ज्ञानमेवानुमतम्।

प्रत्यक्षप्रमालक्षणे **'व्यवसायात्मकत्वम्'** न निवेश्यते चेत् अनवधारणात्मकस्य ज्ञानस्य संशयात्मना प्रसिद्धस्य प्रत्यक्षप्रमालक्षणाक्रान्तत्वात् अतिव्याप्तिः प्रसज्येत यस्याः निवारणार्थं प्रत्यक्षप्रमालक्षणे **'व्यवसायात्मकेति'** पदं प्रविष्टम्। यदा दूरस्थः कश्चन पुरुषः अर्थविशेषं पश्यन् **'धूम इति वा' 'रेणुरिति वा'** अवधारयितुं क्षमो न भवति तदा इन्द्रियस्य अर्थेन सन्निकर्षात् अनवधारणज्ञानं सिद्ध्यति। इदमनवधारणात्मकं ज्ञानं तावदात्मनः संयोगादेव जायते इन्द्रियार्थसंयोगस्यात्र नास्त्युपादेयता इति तु नाऽभ्युपेयम्। यतः यदा कश्चन पुरुषः चक्षुषार्थविशेषं पश्यन् अवधारयितुं समर्थो न भवति एवञ्च इन्द्रियेणोपलब्धमर्थविशेषं मनसा नोपलभते तदा इन्द्रियेण अर्थविशेषम् अनवधारयन् मनसापि नावधारयितुं क्षमो भवति। एतत् यत् इन्द्रियेण अर्थविशेषानवधारणपूर्वकं मनसार्थविशेषानवधारणं तत् विशेषापेक्षं विमर्शमात्रं संशयः भवति अयं संशयः इन्द्रियार्थसन्निकर्षजन्यस्तु विद्यते परं अनवधारणात्मकं इदं ज्ञानं प्रत्यक्षमिति नाभ्युपगम्यते। सर्वत्र नियमेन प्रत्यक्षविषयो यो भवति तस्य इन्द्रियेण प्रमातुः प्रथमं व्यवसायः अनन्तरं पुनः मनसा व्यवसायस्य व्यवसायः अर्थात् अनुव्यवसायः जायते। एतादृश-नियमवशादेव येषां पुरुषाणाम् इन्द्रियम् उपहतं भवति तेषां तेन इन्द्रियेण ज्ञानाभावात् मनसा अनुव्यवसायोऽपि नानुभवसिद्धः।

न्यायदर्शने मनः अपि इन्द्रियं परम् अस्य पृथगुपदेशः मनोगतधर्म-भेदात् अभ्युपेयः। भूतेभ्यः समुत्पन्नानि घ्राण-रसन-चक्षुस्त्वक्श्रोत्राणि बहिरिन्द्रियाणि गन्ध-रस-रूप-स्पर्श-शब्दरूपेषु विषयेषु यथाक्रमं नियतानि भवन्ति अथ चेमानि इन्द्रियाण्यपि सगुणानि परं मनस्तु न भौतिकं नापि सगुणमिति अत्र मनसि विशेषः स्मरणीयः। आत्मनः, आत्मनि विद्यमानस्य

सुखस्य च मानसं प्रत्यक्षं स्वीक्रियते, यद्यपि न्यायदर्शने मनसः इन्द्रियत्वं नोक्तं परं तन्त्रान्तरेषु मनसः इन्द्रियत्वमभ्युपगतं न्यायदर्शने न प्रतिषिद्धमिति अनुमतमेव भवतीति सिद्धान्तात् आत्मज्ञानस्य सुखज्ञानस्यापि मनो रूपस्य इन्द्रिस्य आत्मरूपेण सुखस्वरूपेण वा अर्थेन यः संयोगः संयुक्तसमवायश्च यथाक्रमं सर्वानुभवसिद्धः तेनैव जन्यत्वात् प्रत्यक्षत्वं सूपपद्यत इति सर्वं चतुरस्रम्।

# तर्कभाषाभिमतप्रत्यक्षप्रमाणविमर्शः

प्रो. हरेरामत्रिपाठी

तर्क्यन्ते तर्केण तर्कोपकृतप्रमाणेन विषयीक्रियन्ते तत्त्वतो निर्णीयन्ते इति तर्काः। तर्कविषयाणां षोडशपदार्थानां कथनं लक्षणं यत्र विद्यते सा तर्कभाषा। अस्य ग्रन्थस्य प्रणेता श्रीकेशवमिश्रो वर्तत इति। तर्कभाषा-भिमतप्रत्यक्षप्रमाणविमर्शो मम विषयो विद्यते। प्रमायाः[1] करणत्वमिति प्रमाणस्य लक्षणम्। प्र-उपसर्गस्यार्थः प्रकृष्टः 'मा'इत्यस्यार्थः ज्ञानं यद्वा यथार्थज्ञानं प्रमावाच्यार्थ इति। यथार्थानुभवत्वं[2] प्रमायाः लक्षणमिति केशवमिश्रैरुच्यते। इदमेव लक्षणं तत्त्वचिन्तामणिकारोऽपि स्वीकरोति। तेनोक्तम्– यत्र यदस्ति तत्र तस्यानुभवः प्रमा,[3] तद्वति तत्प्रकारकानुभवो वा।[4] यत्र यदस्ति इत्यत्र अस्तित्वं सम्बन्धित्वमात्रं न तु आधेयत्वमिति। अस्तित्वस्य अधिकरणत्वरूपत्वे आधेयत्वस्य वृत्त्यनियामकसम्बन्धतया तत्सम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्ध्या "गगने शब्दः" इति ज्ञानस्य प्रमात्वानुपपत्तिः। अतः अस्तित्वं न आधेयत्वमपि तु सम्बन्धित्वमात्रम्। तत्र इति निरूपितत्वं सप्तम्यर्थः तस्यान्वयः षष्ठ्यर्थविषयतायाम्। तथाच तत्सम्बन्धिनिरूपिततन्निष्ठविषयता प्रतियोग्यनुभवत्वं तत्र तत्प्रमात्वम्। घटे घटत्वं विद्यते अतः घटनिष्ठसम्बन्धितानिरूपिता या घटत्वनिष्ठा सम्बन्धिता विषयता च प्रमात्वनियामकसम्बन्धेन ग्राह्या। तथा च पर्वतो वह्निमान् इत्यत्र संयोगसम्बन्धेन वह्न्यधिकरणे पर्वतादौ समवायसम्बन्धेन वह्न्यादिभ्रमे नातिव्याप्तिः। न वा इत्यनेन चिन्तामणिकारैः तद्वति तत्प्रकारकानुभवत्वमिति लक्षणं प्रतिपादितम्।

यत्र यदस्ति तत्र तत्प्रकारकानुभवत्वं प्रमात्वमित्यस्मात् वाक्यात्

---

1. तर्कभाषा पृ. 6
2. तदेव पृ. 7
3. तत्त्वचिन्तामणिः प्रत्यक्षखण्डः प्रथमभागः पृ. 401
   प्रकारता तादृशप्रकारताश्रयत्वं प्रमात्वम् आश्रयता च निरूपकतासम्बन्धेन आधेयत्वसम्बन्धावच्छिन्नगगनत्वावच्छिन्नप्रतियोगिताकाभाववान्

प्रथमघटपदेन धर्मीभूतः घटः गृह्यते द्वितीयेन यत् पदेन प्रकारीभूतो धर्मः घटत्वं गृह्यते अग्रे च प्रथमतत्पदेन घटस्य ग्रहणं द्वितीयतत्पदेन घटत्वस्य ग्रहणं भवति तथा च यतः घटे घटत्वं विद्यते अतः घटनिष्ठविशेष्यता निरूपितघटत्वनिष्ठप्रकारताशाली-अनुभवत्वमेव प्रमात्वम्, तदनन्तरं प्रमात्वस्य द्वितीयं लक्षणं प्रदर्शितम्, तस्योद्भावने बीजं प्रदर्शितम् मथुरानाथवागीशेन-

"नन्वेवं तद्विशेष्यकज्ञानस्यापि तत्प्रमात्वापत्तिः। न चेष्टापत्तिः, तत्प्रकारकज्ञान एव तत्प्रमाव्यवहारादित्यस्वरसात् लक्षणान्तरमाह"[1] तद्-वति अत्र विशेष्यित्वं सप्तम्यर्थः। विशेष्यित्वस्य सप्तम्यर्थस्य अवच्छिन्नता-सम्बन्धेन तत्प्रकारतायामन्वयः। एवञ्च तद्विशेष्यकत्वावच्छिन्नतत्प्रकारता-शाल्यनुभवत्वं तत्प्रमायाः लक्षणम्। अर्थात् विशेष्यितासम्बन्धेन तदवच्छिन्ना या तत्प्रकारिता तच्छाल्यनुभवत्वं तत्प्रमायाः लक्षणम्। प्रमा चतुर्विधा प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। प्रमाणमपि चतुर्विधं प्रत्यक्षानुमानोपमान-शब्दभेदाच्च। प्रत्यक्षस्य स्वरूपं निरूपयन्नाह केशवमिश्रः "साक्षात्कारि-प्रमाकरणं प्रत्यक्षम्। साक्षात्कारिणी च प्रमा, सा एवोच्यते या इन्द्रियजा।"[3] गङ्गेशोपाध्यायस्यानुवादमात्रं तेनोक्तं तत्त्वचिन्तामणिग्रन्थे प्रत्यक्षस्य साक्षात्कारित्वं लक्षणं चाक्षुषादिज्ञाने साक्षात्करोमीत्यनुगतबुद्धेर्बाधकं विना जातिविषयत्वात्।"[4]

यद्यपि साक्षात्करोमि इत्यनुव्यवसायस्य विषयताविशेष एव विषयोऽस्तु किं जात्या? अनुव्यवसायसिद्धं साक्षात्कारत्वं लाघवात् जातिरूपमेव न तु विषयताविशेषः। प्रत्यक्षशब्दस्य प्रयोगः इन्द्रियजन्यप्रमायां, प्रत्यक्षप्रमाकरणे, प्रमाविषयीभूतपदार्थे च भवति। प्रति विषयं प्रतिगतमक्षमिन्द्रियं यस्मै प्रयोजनाय तत्प्रत्यक्षमनया व्युत्पत्त्या प्रत्यक्षशब्दार्थः प्रत्यक्षप्रमा। अक्षमक्षं प्रति इति प्रत्यक्षमत्र अक्षशब्दः ज्ञानेन्द्रियपरः, यद्वा प्रतिगतमक्षम् वा प्रतिगतं विषयं प्रति गतम्=विषयसन्निकृष्टमक्षम् अनया व्युत्पत्त्या प्रत्यक्ष-वाच्यार्थः प्रत्यक्षप्रमाकरणम् इन्द्रियमिति।[1] प्रति=यं विषयं प्रति गतमक्षं तत्

---

1. तत्त्वचिन्तामणिप्रत्यक्षखण्डप्रथमभागः पृ. 403
2. तदेव पृ. 3
3. तर्कभाषा पृ. 59 हिन्दी अनु. सहित श्री बदरीनाथशुक्ल मोति. लाल बनारसीदास
4. तत्त्वचिन्तामणिप्रत्यक्षखण्डप्रथमभागः पृ. 543

प्रत्यक्षम् अनया व्युत्पत्त्या प्रत्यक्षप्रमाविषयीभूतपदार्थपरं प्रत्यक्षम्। प्रत्यक्षप्रमा द्विविधा सविकल्पकनिर्विकल्पकभेदात्। विकल्प्यते विशिष्यते वस्तु येन स विकल्पः=विशेषणम्, तेन सहितं सविकल्पं, सविकल्पमेव सविकल्पकम्[2] अथवा विकल्पयति विशिनष्टि वस्तु यत् तद् विकल्पकं विशेषणम्, तेन सहितं सविकल्पकं सविशेषणम् इति व्युत्पत्त्या सविकल्पकवाच्यं विशेषणयुक्तपदार्थावगाही ज्ञानम्। यस्य ज्ञानस्य तज्ज्ञानस्य विषयभूतार्थस्य बोधकशब्देन कथनं भवति तज्ज्ञानं सविकल्पकं शब्दोऽयं विशेषणयुक्त-पदार्थावगाही प्रत्यक्षात्मकज्ञाने योगरूढो वर्तते। नामजात्यादियोजनात्मकं सविकल्पकमिति केशवमिश्रैरुक्तम्। अभिलापसंसर्गयोग्यप्रतिभासं सविकल्पकमित्यपि केचित् वदन्ति। यथा अयं गौः, गौः शुक्लः, गौः गच्छति, गौर्न महिषः इति। अखिलव्यवहारस्य मूल[3] सविकल्पकमित्यपि वदन्ति दार्शनिकाः।

विकल्पेभ्यो विशेषणेभ्यो निर्मुक्तं निर्विकल्पं निर्विकल्पकमेव निर्विकल्पकमथवा विकल्पेभ्यो विशेषणेभ्यो निर्मुक्तं निर्विकल्पकम्। तर्कभाषाकारैः उच्यते "नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि[4] किञ्चिदिदं ज्ञानं।" बालमूकादिज्ञानसदृशं निर्विकल्पकमित्यपि केचित् वदन्ति।

यदि निर्विकल्पकज्ञानमनभिलाप्यमप्रवर्तकं विशिष्टवस्तूनामग्राहकं भवति तर्हि तत्र प्रमाणं किम्? सविकल्पकं प्रत्यक्षं मानसप्रत्यक्षसिद्धं वर्तते तदेवानुमापकं निर्विकल्पकज्ञाने। यथा गामहं पश्यामि इति मानसप्रत्यक्षं भवति। अत्र गोत्वविशिष्टस्य गोः सविकल्पकं ज्ञानं जायते। विशिष्टबुद्धौ विशेषणज्ञानं कारणमिति नियमात् ततः पूर्वं गोत्वस्य ज्ञानमावश्यकमिति अतः सविकल्पकज्ञानात् पूर्वं निर्विकल्पकज्ञानं अवश्यमभ्युपेयम्। अत्र श्रद्धेयैः बदरीनाथशुक्लमहोदयैः उक्तम्[1]-निर्विकल्पकप्रत्यक्षे पदार्थस्य विशेषणरूपेण, विशेष्यरूपेण, वा संसर्गरूपेण भानं न जायते। अतः

1. तर्कभाषा हिन्दी अनु. सहित श्री बदरीनाथशुक्ल पृ. 6
2. तदेव पृ. 62
3. तदेव पृ. 62
4. तदेव पृ. 70

विशेषणता विशेष्यता वा संसर्गताख्यविषयता निर्विकल्पकज्ञाने नास्ति। परन्तु तुरीया विषयता निर्विकल्पकज्ञाने विद्यते। अतः विशेषणताशून्यं ज्ञानं वा विशेष्यताशून्यं ज्ञानं, वा संसर्गताशून्यं ज्ञानं वा विलक्षणविषयताशालिज्ञानं निर्विकल्पकमित्यपि वक्तुं शक्यते। प्रत्यक्षप्रमायाः करणं त्रिविधं भवति। यदा निर्विकल्पकं ज्ञानं फलं तदा इन्द्रियार्थसन्निकर्षः अवान्तरव्यापारः इन्द्रियं[2] करणं भवति। यदा सविकल्पकं ज्ञानं फलं तदा निर्विकल्पकं ज्ञानमवान्तरव्यापारः, इन्द्रियार्थसन्निकर्षः[3] करणम्। यदा हानोपादानोपेक्षाबुद्धयः फलं तदा सविकल्पकं ज्ञानमवान्तरव्यापारः निर्विकल्पकं ज्ञानं[4] करणं च भवति। केचन विद्वांसः त्रिविधां प्रत्यक्षप्रमां मन्वाना अपि न तस्य त्रिविधकरणत्वं मन्वते अपि तु सर्वत्र इन्द्रियमेव करणं भवति।[5] यदा निर्विकल्पकं ज्ञानं फलं तदा इन्द्रियार्थसन्निकर्ष एव करणम्, यदा सविकल्पकं ज्ञानं फलं तदा इन्द्रियार्थसन्निकर्षः, निर्विकल्पके ज्ञाने द्वे अवान्तर-

व्यापारे भवतः। यदा हानोपादानोपेक्षाबुद्धयः फलं तदा इन्द्रियार्थ-सन्निकर्षः, निर्विकल्पकं, सविकल्पकञ्च ज्ञानम् एतानि त्रीणि अवान्तर-व्यापाराणि भवन्ति सर्वत्र इन्द्रियमेव करणमित्यपि केचिद् वदन्ति।

इन्द्रियार्थयोः सन्निकर्षत्वे सति साक्षात्कारिप्रमाहेतुत्वं[6] सन्निकर्षस्य लक्षणं। स च षड्विधो भवति लौकिकसन्निकर्ष इति। संयोगः, संयुक्त-समवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्य-विशेषणभावश्चेति। यदा इन्द्रियेण द्रव्यस्य प्रत्यक्षं क्रियते तदा संयोग-सन्निकर्षः इन्द्रियद्रव्ययोरयुतसिद्धसम्बन्धाभावात्। यदा चक्षुरिन्द्रियेण घटरूपं गृह्यते तदा चक्षुषा घट-संयोगे, घटे च रूपस्य समवायात् संयुक्तसमवाय-

1. तर्कभाषा हि. टी. पृ. 65
2. तर्कभाषा पृ. 70
3. तदेव पृ. 71
4. तदेव पृ. 71
5. तर्कभाषा - अत्र कश्चिदाह- सविकल्पकादीनामपीन्द्रियमेव करणम्। यावन्ति आन्तरालिकानि सन्निकर्षादीनि तानि सर्वाणि अवान्तरव्यापारः इति। पृ. 77।
6. तर्कभाषा पृ. 73

सन्निकर्षो भवति। यदा घटरूपनिष्ठं रूपत्वं गृह्यते तदा चक्षुसंयुक्ते घटे समवेतं रूपं तत्र रूपत्वस्य समवायात् संयुक्तसमवेतसमवायसन्निकर्षो भवति। यत्र चेन्द्रियग्राह्यो विषयः प्रथमत एव स्वाश्रये समवेतो भवति तत्र प्रथममेव समवायसम्बन्धो भवति यथा श्रोत्रेन्द्रियेण शब्दस्य प्रत्यक्षे समवायसन्निकर्ष इति। यदा श्रोत्रेन्द्रियेण शब्दत्वजातेः ग्रहणं भवति तदा समवेतसमवायसन्निकर्षो[1] भवति।

चक्षुषा घटाभावादिग्रहे विशेष्यता वा विशेषणता सन्निकर्षो भवति। यथा घटाभाववद् भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावो विशेषणं तत्र विशेषणतासन्निकर्षो वर्तते।

यदा भूतले घटाभावः इत्युच्यते तदा चक्षुःसंयुक्ते भूतले घटाभावः विशेष्यः तर्हि विशेष्यता घटाभावे विद्यते। संख्यात्वादौ रूपाभावः इत्यत्र स्वसंयुक्तसमवेतसमवेतविशेष्यता सन्निकर्षो भवति। यद्यपि अलौकिक-सन्निकर्षस्य स्वरूपं तर्कभाषायां नोपलभ्यते।

अलौकिकसन्निकर्षस्य भेदं प्रतिपादयन्नाह विश्वनाथः

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा।।**[2]

सामान्यं जातिः घटादिव्यक्तिश्च तदेव लक्षणं स्वरूपम् आत्मा यस्य इति व्युत्पत्या जात्यात्मकः व्यक्त्यात्मकश्च सन्निकर्षः एकः। ज्ञानमेव लक्षणं स्वरूपं यस्य सः ज्ञानात्मकः सन्निकर्षः द्वितीयः। चित्तवृत्तिनिरोधस्तज्जन्यः संयमः धारणाध्यानसमाध्यात्मकः सन्निकर्षः तृतीयो भवति। इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं धूमत्वं प्रत्यासत्तिः। यत्र इन्द्रियसंयुक्तो धूमादिः तद् विशेष्यकं धूमः इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः, धूमत्वेन सन्निकर्षेण धूमाः इत्येवं रूपं सकलधूमविषयकं ज्ञानं जायते।

"विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः" सामान्यलक्षणा

---

1. तर्कभाषा पृ. 76
2. इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यज्ञानमेव प्रत्यासत्तिः

प्रत्यासत्तिः तदाश्रयज्ञानं जनयति। ज्ञानलक्षणासन्निकर्षस्तु यद्विषयकं ज्ञानं भवति तस्यैव सन्निकर्षः यथा सुरभिचन्दनमित्यत्र सौरभस्य भानं ज्ञानलक्षणा-प्रत्यासत्या भवति। सौरभत्वस्य भानं तु ज्ञानलक्षणया एव।

**योगजो द्विविधः प्रोक्तः युक्तयुञ्जानभेदतः।**
**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः॥**

इत्यनेन अलौकिकस्य सन्निकर्षस्य तृतीयः यः भेदः योगज सन्निकर्षो वर्तते तस्य स्वरूपं विश्वनाथपञ्चाननभट्टाचार्येण प्रतिपादितमिति।

व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः तत्करणमनुमास्य लक्षणम्। हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः वा साध्याभावव-दवृत्तित्वमिति। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। संज्ञासंज्ञिसम्बन्ध ज्ञानत्वमुपमितिः तत्करणत्वमुपमानस्य लक्षणम्। पदजन्यपदार्थोपस्थितिजन्यत्वे सति ज्ञानत्वं शाब्दबोधस्य लक्षणं तत्करणत्वं शब्दप्रमाणस्य लक्षणमिति।

# न्यायवार्त्तिकसम्मतप्रत्यक्षप्रमाणविमर्शः

डॉ. विष्णुपदमहापात्रः

शास्त्रं हि शिष्याकांक्षाक्रमेण प्रवर्तते। निःश्रेयसं कुतोऽधिगम्यते इत्याकांक्षायां प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगमः इत्यभिहितम्। ततः कथमधिगम्यते इति जिज्ञासायां "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तराऽपाये तदनन्तरापायादपवर्गः"[1] द्वितीयसूत्रं प्रवृत्तम्। ततः प्रमाणादयः के, कति, किं लक्षणम् इति, ततः कथमिति च जिज्ञासा जायते। अतः प्रमाणादीनां स्वरूपं तेषां विभागः लक्षणं च निरूप्यन्ते। ततः तद्विषयिणी परीक्षा च क्रियते शास्त्रे। यदाहुः भाष्यकाराः "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति"[2] इति। प्रथमसूत्र एव षोडशपदार्थाः प्रमाणादयः नाम्ना संकीर्त्तिताः। तत्रोद्देशक्रमानुसारेण प्रमाणस्य प्रभेदः लक्षणञ्च तैः निरूपितम्। तत्र प्रमीयते अनेनेति व्युत्पत्त्या प्रामाणशब्देनैव प्रमाकरणं प्रमाणमिति प्रमाणलक्षणं सर्वैरवगमितम्। प्रमाणं चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्। इन्द्रियस्यार्थेन सम्बन्धादुत्पद्यमानमर्थाव्यभिचारि ज्ञानं प्रत्यक्षं प्रमा। तच्च द्विविधं सविकल्पकनिर्विकल्पकभेदात्। ईदृशं प्रत्यक्षज्ञानं यस्मात्करणाज्जायते तत् प्रत्यक्षप्रमाणमिति सूत्रकाराणामाशयः।

तत्र प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"[3] इति प्रमाणचतुष्टयस्य संकीर्तनेनापि तदतिरिक्तं किमपि प्रमाणान्तरमस्ति न वा इत्याकारक-संशयस्योत्पत्तिर्भवत्येव। सजातीयविजातीयाभ्यां व्यावर्त्तमानात्मकलक्षणस्य सप्रयोजनत्वेऽपि प्रमाणसंख्यायाः निर्णयः नैव सम्भवति इत्यतः सूत्रकारेण महर्षिणा गौतमेन आदौ विभागमुखेनैव तृतीयसूत्रस्य निर्वचनं कृतम्। सूत्रकाराभिमतं स्पष्टयति उद्योतकरः "तस्मात् संशयनिर्वृत्यर्थं युक्तो विभागोद्देश

1. न्या. सू. 1/1/2
2. न्या. भा. पृ 17
3. न्या. सू. 1/1/3

इति''।[4] सामान्यज्ञानमन्तरा विशेषजिज्ञासानुदयाद् आदौ प्रमाणसामान्यलक्षणं वक्तव्यमासीत् सूत्रकारैः तथा नोक्तमिति सूत्रकारस्य न्यूनता इति ये खलु वदन्ति, तेषां मतनिराकरणार्थं तात्पर्यटीकाकाराः उक्तसूत्रस्य विभागवचनपरत्वेऽपि चरमतः ''प्रमाणम्'' इति शब्देन प्रमाणसामान्यलक्षणं पर्य्यवस्यति। सूत्राणां वह्वर्थसूचनात्। निगदितञ्च शांकरभाष्यस्य भामतीव्याख्यायां सूत्रञ्च वह्वर्थसूचनाद्भवति। यथाहुः–

**लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः।।[5]**

मिश्रमतमभ्युपेत्य जयन्तभट्टः कथयति–

**एकेनानेन सूत्रेण द्वयञ्चाह महामुनिः।**
**प्रमाणेषु चतुःसंख्यां तथा सामान्यलक्षणम्।।[6]**

अर्थात् प्र + माधातुना करणार्थे ल्युट्प्रत्ययकृते सति निष्पन्नोऽयं प्रमाणशब्दः प्रमाकरणार्थकः, तदेव प्रमाणसामान्यलक्षणम्। प्रमाणशब्दस्य करणार्थकत्वमभ्युपगम्यं उपलब्धिसाधनानि प्रमाणानीति'' प्रामाणसामान्यलक्षणं भाष्यकारैः अभिहितम्। तादृशं सन्दर्भं गृहीत्वा "उपलब्धिहेतुः प्रमाणम्, उपलब्धिहेतुत्वं प्रमाणत्व"[7] मिति प्रमाणसामान्यलक्षणं वार्त्तिककारैरुद्घोषितम्। प्रमाणसामान्यलक्षणनिर्वचनानन्तरं प्रमाणचतुष्टये प्रत्यक्षस्य सर्ववादिसम्मतत्वात्। अर्थविशेषप्राबल्यात्''[8] "पूर्वप्राधान्यात् सर्वप्रमाणानां प्रत्यक्षपूर्वकत्वात्"[9] च आदौ प्रत्यक्षसूत्रं प्रतिपादयति अक्षपादगौतमः ''इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्''[10] इति। अर्थाद् इन्द्रियेण सह अर्थस्य सन्निकर्षाद् यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षम्। सूत्रकाराभिमतं स्पष्टयति उद्योतकरः "इन्द्रियेणार्थस्य सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षम् इति"[11]।।

4. न्यायवार्त्तिकम् पृ. 28
5. भामती ब्रह्मविचारप्रकरणम् पृ. 25
6. न्यायमञ्जरी प्रमाणप्रकरणम् पृ. 25
7. न्यायवार्त्तिकम् पृ. सं 05
8. न्या. सू. 2/1/29
9. न्यायवार्त्तिकम् पृ. 30
10. न्या. सू. 1/1/4

**प्रत्यक्षशब्दस्य व्युत्पत्तिपक्षः–**

लोके तावत् प्रत्यक्षं ज्ञानं, प्रत्यक्षा क्रिया, प्रत्यक्षो घटः इति प्रत्यक्षपदस्य ज्ञानपरतया विषयपरतया साधनपरतया च बहुधा प्रयोगाः समुपलभ्यन्ते तर्हि कथं प्रत्यक्षशब्दोऽस्माभिर्व्युत्पादनीयः? यतो हि अत्र अव्ययीभावसमासः पक्षः गतिसमासपक्षश्चेति पक्षद्वयमुपलभ्यते। तत्र यद्यपि प्रथमतः वार्त्तिककारटीकाकाराभ्यां अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति[12] भाष्यव्याख्यानावसरे अव्ययीभावसमास एवोक्तः। तद्यथा ''अयं च सूत्रविवक्षायां अव्ययीभावः समासः[13] ''अक्षमक्षं प्रति वर्तत इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियावरोधो भवति।"[14] तथापि पश्चात् ताभ्यामपि गतिसमासपक्षः वार्त्तिककारैः तात्पर्यटीकाकारैश्च समर्थितः। प्रतिपादितञ्च "कः पुनरत्र समासः? प्रादिसमासोऽयं द्रष्टव्यः प्रतिगतमक्षं प्रत्यक्षमिति। यथोपगतो गोभिरुपगुरिति"[15] "प्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधादभिधेय-लिङ्गोपादानात् प्रत्यक्षोऽर्थः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गता सिद्धा भवति"[16] टीकाकारस्तु प्रादिसमासपक्षं यद्यपि समाश्रितवान् तथापि अक्षं अक्षं प्रति वर्तते'' इत्याकारकविग्रहवाक्यं स्वीकृत्य प्रत्यक्षप्रमाणार्थे अव्ययीभावसमासपक्षं अङ्गीकृतवान् इदमेव टीकाकाराणां वैशिष्ट्यं यतः ''अक्षस्य अक्षस्य'' इति भाष्यकारैः यद् भाषितं तत्र विग्रहवाक्यार्थस्य बोधः न तु विग्रहवाक्यस्य यतः तस्य विग्रहवाक्यत्वे षष्ठीविभक्तेः प्रयोगः न स्यात्। प्रतियोगे द्वितीयायाः विधानात्। एवञ्च निरुक्तविग्रहवाक्यान्तर्गतं वर्तते इति क्रियापदात् "वृत्ति" अर्थः बोध्यते। अतः भाष्यकारैः वृत्तिशब्दस्य प्रयोगः कृतः। "वृत्तिस्तु सन्निकर्षो ज्ञानं वा"[17] अर्थाद् वृत्तिपदेन सन्निकर्षस्य ज्ञानस्य वा ग्रहणमिति भाष्यकारै उररीकृतम्। उद्योतकरैस्तु समुच्चयार्थे वृत्तिशब्दस्य प्रयोग इति अङ्गीकृतः। "सन्निकर्षो ज्ञानञ्चेति"[18]।। समुच्चयार्थे

11. न्यायवार्त्तिकम् पृ. 17
12. न्यायभाष्यम् पृ. 17
13. न्यायवार्त्तिकम् पृ. 28
14. न्यायवार्त्तिकतात्पर्यटीका. प्रत्यक्षसूत्रव्याख्या।
15. न्यायवार्त्तिकम् पृ. 28
16. न्यायवार्त्तिकतात्पर्यटीका प्रत्यक्षप्रकरणम्।
17. न्यायभाष्यम् पृ. 17
18. न्यायवार्त्तिकम् प्रत्यक्षसूत्रव्याख्याप्रकरणम्।

कथमिति जिज्ञासायां प्रमाणं प्रदर्शयितुं शक्यते यत् प्रत्यक्षप्रमाण-व्याख्यानावसरेऽस्मिन् "अथवा" इत्यादि सन्दर्भेण यथार्थप्रत्यक्षज्ञानमपि प्रत्यक्षप्रमाणमिति प्रशस्तपादाचार्यैरुक्तम्। प्रशस्तपादाचार्यसम्मतार्थमभ्युपगत्य किरणावलीकारः उदयनाचार्यः भणति- "अथवेति वा शब्दः समुच्चये न विकल्पे। हेयादिज्ञानोत्पत्तावपि द्रव्यादिज्ञानं प्रमाणमिति वाक्यार्थः"[19]। अक्षस्य इन्द्रियार्थकत्वाद् वृत्तिशब्दस्य समुच्चयार्थकत्वाच्च तर्कभाषाकाराभिमतम् इन्द्रियं, इन्द्रियार्थसन्निकर्षः ज्ञानञ्चेति करणत्रैविध्यं प्रसिद्ध्यति। मिश्रास्तु वृत्तिरिति हि व्यापारः इति प्रतिपादितवन्तः। इन्द्रियजन्यप्रत्यक्षज्ञानस्य व्यापारभूता इयमिन्द्रियवृत्तिः। व्यापारार्थस्तु प्रत्यक्षशब्दव्युत्पत्तिमात्रलभ्योऽर्थः। न तु प्रत्यक्षप्रमाणस्य लक्षणम्।

**सन्निकर्षः**

प्रत्यक्षं प्रति इन्द्रियं करणम्, इन्द्रियार्थसन्निकर्षः व्यापारः, अर्थाद् विषयेण सह इन्द्रियस्य सम्बन्ध एव व्यापारः सन्निकर्ष उच्यते। स च सन्निकर्षः संयोगादिभेदेन षड्विधः। उक्तं च आदौ वार्त्तिककारेण "सन्निकर्षः पुनः षोढा भिद्यते। संयोगः संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायो, विशेषणविशेष्यभाव श्चेति। तत्र इन्द्रियं चक्षुः, रूपवद्द्रव्यप्रत्यक्षे संयोगसन्निकर्षः, द्रव्यगतरूपप्रत्यक्षे संयुक्तसमवायः, द्रव्यगतरूपगतरूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः। यद्यपि वैशेषिकनये समवायः अनुमानगम्यो भवति "तत्र प्रमाणं तु गुणक्रियादिविशिष्ट-बुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवद्। तथापि विशेषणविशेष्यभाव सन्निकर्षेण समवायस्य अभावस्य च प्रत्यक्षं भवति इति वार्त्तिककाराः निगदन्ति। तथाहि "समवाये चाभावे च विशेषणविशेष्यभावादिति, सोऽयं सन्निकर्षशब्दः संयोगसमवायविशेषण-विशेष्यभावव्यापकत्वादुपात्त इति।"[23] एतादृशः सन्निकर्षः प्रत्यक्षस्य मुख्यं

19. किरणावली, गुणप्रकरणम्।
20. तात्पर्यटीका प्रत्यक्षप्रकरणम्।
21. न्यायवार्त्तिकम् पृ. 31
22. न्यायसिद्धान्तमुक्तावली, समवायप्रकरणम्।
23. न्यायवार्त्तिकम् पृ. 31

कारणं भवतीत्यत तस्य सन्निकर्षस्य लक्षणत्वेनोपादानम्। "सोऽयं सन्निकर्षः प्रत्यक्षस्य कारणं भवतीति लक्षणत्वेनोच्यते।"[24]

## प्रत्यक्षकारणत्वव्यवस्थापनम्

यदि प्रत्यक्षं प्रति इन्द्रियार्थसन्निकर्षमात्रस्य कारणत्वमुच्यते तर्हि आत्ममनः संयोगस्य, इन्द्रियमनः संयोगस्य, विषयप्रकाशसंयोगस्य, विषय-स्थरूपस्य, विषयसंयोगिस्थमहत्त्वस्य च कारणसमुदायस्य सूत्रभाष्यादौ अनुल्लेखात् प्रत्यक्षलक्षणस्य न्यूनता स्यात्। एतत्प्रसंगे भणतिवार्त्तिककारः "यदीन्द्रियार्थसन्निकर्षः प्रत्यक्षस्य कारणत्वादुपदिश्यते अत्यल्पमिदमुच्यते अन्यान्यपि बहूनि तान्यपि वक्तव्यानि।"[35] तथा नोक्तमिति नैव भाति। यतः प्रत्यक्षस्य यद्विशिष्टं कारणं तदेवात्र उच्यते। अर्थाद् आत्ममनः संयोगस्य ज्ञानमात्रावच्छिन्नं प्रति कारणत्वात्तस्य कारणत्वस्वीकारे अनुमितावतिव्याप्तिस्तदपाकरणाय इन्द्रियार्थसन्निकर्ष इति पदमुपात्तं सूत्रकारैः। अत एव प्रत्यक्षस्य यदसाधारणकारणं भवति तदेवात्र उच्यते न तु साधारणकारणम्। उक्तं च "यत्प्रत्यक्षस्यासाधारणं कारणं तदभिधीयते न पुनः साधारणं कारणं निवर्त्यत।"[26] अर्थाद् इन्द्रियमनः संयोगस्य यत्कारणत्वं तदपि असाधारणकारणं, तस्य इन्द्रियार्थसंयोगवाक्यात् लाभः सम्भवतीत्यतः पृथगुपन्यासः न विहितः, न वा तस्य आभ्यन्तरप्रत्यक्षमात्रस्य कारणत्वं न वा सूत्रकारीयं लक्षणं बाह्यप्रत्यक्षमात्रस्य। प्रतिपादितं वार्त्तिककारेण "इन्द्रियमनः संयोगस्तर्ह्यसाधारणत्वादुपसंख्येयः न ह्ययमनुमानादिज्ञानानां कारणं भवति। न; अनेनैव तस्योक्तत्वात्। इन्द्रियार्थसन्निकर्षग्रहणेनेन्द्रियमनः संयोग उक्तो वेदितव्यः। किं कारणम्? उभयोरसाधारणत्वात्। न च यावदसाधारणं कारणं तावत्सर्वमभिधातव्यमित्यर्थ"[22] इन्द्रियमनः संयोगस्य यत् कारणत्वं तद्वक्तव्यमितिजिज्ञासायां भाष्यकारैः प्रोक्तं "भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यते इति समानत्वान्नोक्त इति।"[28] भाष्यकारोक्तभिद्यमानपदमालोक्य वार्त्तिककारः प्रवदति "अपि त्वन्यतरेणापि भिद्यत इति अन्यतरोपादानम्।"

---

24. न्यावार्त्तिकम् पृ. 30
25. न्यावार्त्तिकम् पृ. 32
26. न्या. वा. पृ. 32
27. न्या. वा पृ. 32
28. न्या. भा. पृ. 26

एवञ्च टीकाकाराः निगदन्ति प्रत्यक्षज्ञानस्य रूपज्ञानस्य रूपज्ञानमिति वा चक्षुर्विज्ञानमिति वा व्यपदेशेन भिद्यमानस्य आत्मनः संयोग इवायमिन्द्रियमनः संयोगो 'न भिद्यते' एवं हि स भिद्यते यदि स्वसम्बन्धिवाचकेन व्यपदेशेन स्वमन्यतो व्यावर्त्यते।"[29]

तत्रेदमवधातव्यं प्राचीनाचार्यैः अर्थविशेषे ''भिद्यते'' इति शब्दस्य प्रयोगः कृतः इति भाष्याज्ज्ञायते। परन्तु नव्याचार्यैस्तु "पृथिवी इतरेभ्यो भिद्यते" इत्याकारकप्रयोगः कृतः। गदाधरस्तु अस्य विचारप्रसंगे इत्थं प्रतिपादयति ''भिद्यते'' इति कर्मवाच्ये प्रयोगः। भिन्नत्वज्ञापनमेव भिद्धातोरर्थः, तथा हि "कर्त्तरि यगात्मनेपदासम्भवात्।"[30] अतो भिन्नत्वेन ज्ञापनं भिद्धातोरर्थः इति।

एतेन सिद्धं भवति यत् प्रत्यक्षस्य विशिष्टं कारणं इन्द्रियार्थसंयोगो भवति। तस्यैवोच्चार्यमाणत्वात् तनैव इन्द्रियमनः संयोगस्यापि चरितार्थत्वात् न कश्चन दोषः। एवञ्च असाधारणकारणं व्यपदेश्यमिति वार्त्तिककारैः यत्प्रतिपादितं तत्साधु संगतं भाति। दृष्टान्तं प्रतिपादयति वार्त्तिककारः यदात्वात्ममनः संयोगान्मानस्यो बुद्धयः प्रवर्तन्ते तदात्मना व्यपदिश्यन्ते मनसा च। यच्चासाधारणं तद्व्यपदेशभाग् भवति। तथाहि ऋत्वादिकारण-सन्निधानात् प्रादुर्भवन्नङ्कुरो र्नत्वादिभिर्व्यपदिश्यते, अपि त्वसाधारणेन बीजेन व्यपदिश्यते यवाङ्कुर इति तथेहापीत्यदोषः। इन्द्रियमनः संयोगस्य वाऽग्रहणं भेदेऽभेदात्। यस्मात् प्रत्यक्षज्ञानभेदे इन्द्रियमनः संयोगो न भिद्यते। एवञ्च भाष्यकारैः समानत्वान्नोक्त इति यत् प्रतिपादितं तत्कथं संगच्छते इत्यभिप्रायेण वार्त्तिककारः प्रकारत्रयं भणति अतीन्द्रियाधारता वा सामान्यम्, यथाऽऽत्ममनः संयोगोऽतीन्द्रियाधार एवमिन्द्रियमनः संयोगोऽपीति। विषयावृत्तित्वं वा-यथाऽऽत्ममनः संयोगो विषयावृत्तिः तथेन्द्रियमनः संयोगोऽपीति। मनोवृत्तित्वं वा यथाऽऽत्ममनः संयोगो मनोवृत्तिरेवमिन्द्रियमनः संयोगोऽपीति, तस्मादिन्द्रियमनः संयोगस्याऽऽत्ममनः संयोगेन सामान्यादन्यतराभिधानेन वा चरितार्थात्वादनभिधानमिति।[31]

---

29. तात्पर्यटीका प्रत्यक्षसूत्रव्याख्याप्रकरणम्।
30. व्युत्पत्तिवादः पञ्चमीप्रकरणम्।
31. न्या. वा. पृ. 33

## इन्द्रियाणां प्राप्यकारित्वप्रतिपादनम्

प्रत्यक्षं प्रति इन्द्रियाणि करणानि भवन्ति। तानि कानीति जिज्ञासायां सूत्रकारैः सूत्रितं यत् ''घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः।[32] एतेषां पञ्चानामिन्द्रियावाच्यत्वेऽपि मनसश्चापि इन्द्रियत्वं विद्यत एव। यतः स्मृतिर्हि आत्मन आन्तरज्ञानलक्षणा क्रिया सा चेन्द्रियलक्षणं करणमन्तरा नैव सम्भवति, तस्मात् स्मृतेर्यदान्तरमिन्द्रियं करणं तदेव मनः। अतः प्रशस्तपादाचार्यैः प्रोक्तं "अक्षाणीन्द्रियाणि, घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षट्[33] इति। अक्षपादनये इन्द्रियं प्राप्यकारित्वमर्थात् इन्द्रियाणि ग्राह्यविषयं सम्प्राप्य प्रत्यक्षमुत्पादयन्ति। तेषामिन्द्रियाणां प्राप्यकारित्वसाधनाय तृतीयाध्याये प्रतिपादयन्ति प्रदीपवत् चक्षुः तैजसम्। अर्थात् चक्षुरश्मेः पदार्थेन सह संयोगविशेषात् महदणुग्रहणं सम्भवति। रश्म्यर्थसंयोगश्चेन्द्रियाणां भौतिकत्वेऽपि सम्भवति यथा भौतिकस्य प्रदीपस्य रश्मेः पदार्थेन सह संयोगो भवत्येव, रश्म्यर्थ संयोगं विना प्रकाशकत्वे व्यवहितस्यापि प्रकाशकत्वं नैव सम्भवति। रश्मेश्च संकोचविकासशालित्वात् महदणुव्यापकत्वं नानुपपन्नम् तथा च सूत्रम् "रश्म्यर्थसन्निकर्षविशेषात् तद् ग्रहणम्" इति। एवञ्च यथा चक्षुरिन्द्रियस्य प्राप्यकारित्वं तथैव श्रवणेन्द्रियमपि ग्राह्यविषयेण सह संयुज्य शब्दप्रत्यक्षं जनयतीति तस्य प्राप्यकारित्वम्। वेदान्तिनस्तु शब्दोत्पत्तिस्थानविशेषे श्रवणेन्द्रियस्य गतिमभ्युपगत्य शब्देन सह तस्य सम्बन्ध इति स्वीकुर्वन्ति। न्यायनये च आकाशात्मकस्य श्रवणेन्द्रियस्य निष्क्रियत्वात् तत्र गतिः कथं सम्भवतीत्याशंकायामुच्यते—जलतरंगन्यायात्, तेनैव श्रवणेन्द्रिये उत्पन्नशब्देन सह समवायसन्निकर्षात् शब्दस्य प्रत्यक्षं सम्भवति।

तत्र इन्द्रियाणां प्राप्यकारित्वं यत्सूत्रकारैरभिहितं तत्कथं संगच्छते इत्यभिप्रायवान् वार्त्तिककारः बौद्धमतमवलम्ब्य भणति "इन्द्रियार्थसन्निकर्षोत्प न्नमित्ययुक्तम् इन्द्रियस्याप्राप्यकारित्वात्। अप्राप्यकारिणी चक्षुश्रौत्रे इत्येके।"[35] अर्थाद् बौद्धाः वदन्ति चक्षुरिन्द्रियस्य श्रवणेन्द्रियस्य च प्राप्यकारित्वं नैव

---

32. न्या. सू. 1/1/12
33. प्रशस्तपादभाष्यम्।
34. न्या. सू. 3/1/32
35. न्या. वा. पृ. 33

सम्भवति ग्राह्यविषयेण सह इन्द्रियसन्निकर्षाभावात् यतः जीवदेहस्य यत्स्थानमिन्द्रियाधिष्ठानं तदेव इन्द्रियं तदतिरिक्तं किमपि इन्द्रियं नास्ति। यतः कृष्णसारः चक्षुः कर्णगोलं श्रोत्रम्। नेत्ररोगस्य कर्णरोगस्य जाते सति तत्स्थानविशेषस्य चिकित्सा भवति, अतः यदा चक्षुरिन्द्रियेण सान्तरग्रहणं अर्थाद् दूरस्थविषयाणां ग्रहणं पृथुतरग्रहणं अर्थात् चक्षुरिन्द्रियात् बृहद्द्रव्यस्य ग्रहणं भवति तदा तद्विषयेण सह इन्द्रियाणां संयोगो नैव भवतीत्यतः विषयेण सह अप्राप्यकारित्वं भूत्वा इन्द्रियाणि प्रत्यक्षमुत्पादयन्ति इति इन्द्रियाणामप्राप्यकारित्वं समीचीनम्। तथाह वार्त्तिककारः "अप्राप्यकारिचक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्चेति। सान्तरस्यार्थस्य विप्रकृष्टदेशावस्थितस्य ग्रहणं दृष्टम्। तस्मात् सान्तर ग्रहणादप्राप्यकारीति।''[36]

**प्रमाणसमुच्चये यथा**

> **सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च।**
> **अधिष्ठानाद्बहिर्नाक्षं तच्चिकित्सादियोगतः।।**
>
> **सत्यपि च बहिर्भावे न शक्तिर्विषयेक्षणे।**
> **यदि च स्यात्तदा पश्येदप्युन्मील्य निमीलनात्।।**[37]

इन्द्रियाणामप्राप्यकारित्वमिति बौद्धैः यद्भाषितं तन्न युक्तं यतः यद्यप्राप्यकिारिचक्षुर्भवति न कुड्यकटादेरावरणस्य सामर्थ्यमस्तीति आवरणस्यानुपपत्तिर्नास्ति। व्यवहितार्थस्य साक्षात्कारित्वाभावाद् इन्द्रियाणामप्राप्यकारित्वं नास्ति। एवञ्च दूरान्तिकानुविधानं चानुपलब्ध्युपलब्ध्योर्न स्यात्, अप्राप्य चक्षुरर्थं गृह्णातीति यदिदमस्य दूरे अग्रहणमन्तिके च ग्रहणमुभयमेतन्न स्यात्। दृश्यते खलु इत्यत इन्द्रियाणामप्राप्यकारित्वं नैव सम्भवति। चक्षुषः प्राप्यकारित्वे प्रमाणमपि प्रदर्शयति वार्त्तिककारः "इन्द्रियत्वमेव। प्राप्यकारिचक्षुरिन्द्रियत्वात् घ्राणादिवत्। घ्राणादीन्द्रियं प्राप्यकारिदृष्टं तथा च चक्षुस्त स्मात् प्राप्यकारीति। अथ पुनर्न किञ्चिदिन्द्रियं प्राप्यकारि प्रतिपद्यते तदा सर्वाणि पक्षीकृत्य करणत्वादिति वाच्यम्। करणं वास्यादिप्राप्यकारिदृष्टं तथा चेन्द्रियाणि तस्मात् प्राप्यकारीणिति।[38] कुमारिलभट्टपादैरपि बौद्धाभि-

36. न्या.वा. पृ. 34
37. प्रमाणसमुच्चयः प्रमाणप्रकरणम्।
38. न्या. वा. पृ 36

मतेन्द्रियाणामप्राप्यकारित्वनिराकरणावसरे प्रोक्तं यत्

**''ततश्चाप्राप्यकारित्वाद् यद्बौद्धैः श्रोत्रचक्षुषोः . . . .।**

**चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते।**
**सोऽपि तस्यैव संस्कार आधेयस्योपकारकः॥[39]**

अत एव महर्षिणा इन्द्रियाणां प्राप्यकारित्वं प्रसाध्य अभ्युपगम्य च इन्द्रियार्थसन्निकर्षोत्पन्नमिति पदं प्रत्यक्षसूत्रे उपात्तम्।

**तत्रेदमवधार्यम्**—इन्द्रियग्राह्यविषयेण सह इन्द्रियाणां यादृशः सन्निकर्षः प्रत्यक्षजनको भवति स एव इन्द्रियार्थसन्निकर्षः। ''पश्यत्यचक्षुः सशृणोत्यकर्णः'' इत्यादिश्रुतिवाक्यदर्शनाद् ईश्वरप्रत्यक्षे इन्द्रियजन्यत्वस्याभावात् तत्राव्याप्तिवारणाय तत्त्वचिन्तामणिकारैः उभयसाधारणं ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणं प्रतिपादितम्। एतेषामिन्द्रियाणामेव कारणत्वं न तु ज्ञानस्य, अत तर्कभाषाकारैः यद् इन्द्रियम् इन्द्रियार्थसन्निकर्षः ज्ञानञ्चेति त्रिविधं करणमुपपादितं तन्न युक्तमिति मणिकारस्याशयः। एवञ्च सूत्रकारनये ईश्वरप्रत्यक्षस्य लक्ष्यत्वमेव नास्तीति विश्वनाथः प्रवदति।

वस्तुतः प्रत्यक्षप्रमाणलक्षणमित्युक्ते प्रमाणस्य फलं जन्यप्रत्यक्षं तस्य लक्षणमिति सूत्रस्याभिप्रायः। प्रमाणशब्दात् कर्त्तरि यदि ल्युट्प्रत्ययक्रियते तर्हि तस्यार्थो भवति सर्वदा सर्वविषयकप्रमावान् अर्थाद् ईश्वरे कदापि सर्वविषयकयथार्थप्रत्यक्षात्मकसर्वज्ञातायाः अभावो एव नास्ति। उक्त नित्यसर्वज्ञता हि ईश्वरस्य प्रामाण्यमिति गौतमः। गौतममतप्रतिपादनाय आचार्यः कथयति-''तदयोगव्यवच्छेदः प्रामाण्यम् गौतमे मते।।''[40]

तत्रैव स गदति ''इन्द्रियार्थसन्निकर्षोत्पन्नत्वस्य च लौकिकमात्रविषयत्वात्।'' एतेन ज्ञायते यत् प्राचीनानां ज्ञानाकरणकत्वप्रत्यक्षलक्षणे सम्मतिरेव नास्ति। यतः प्रत्यक्षज्ञानमपि हानादिबुद्ध्यात्मकस्य प्रत्यक्षस्य करणं भवति।

---

39. श्लोकवार्तिकम् प्र. सू. 40-45
40. न्यायकुसुमाञ्जलिः का. 4/5

**प्रत्यक्षसूत्रान्तर्गतपदप्रयोजनप्रतिपादनम्-**

पञ्चपदविशिष्टं सूत्रकारस्य प्रत्यक्षसूत्रं भवति। तत्र अनुमितावति-व्याप्तिवारणाय इन्द्रियार्थसन्निकर्षोत्पन्नेति पदस्य सार्थक्यम्। ज्ञानमिति द्वितीयपदानुपादानेन सुखादीनां इन्द्रियार्थसन्निकर्षजन्यत्वात्तत्रातिव्याप्तिवारणाय ज्ञानपदस्योपादानम्। उक्तं च वार्त्तिककारेण-''अथ ज्ञानग्रहणं किमर्थं? सुखादिव्यवच्छेदार्थम्। इन्द्रियार्थसन्निकर्षात् सुखदु:खे अपि भवतः तद्व्युदासार्थमाह ज्ञानमिति।[41]

एवञ्च ''यावदर्थं वै नामधेयशब्दाः'' इति भाष्यान्तर्गत यावदर्थ-पदस्य ''यावन्तोऽर्थाः'' यावदर्थमिति अव्ययीभावसमासः। वैशब्दः अवधारणार्थकः ''यावदर्थं वै'' यावदर्थमेव। अर्थात् जगति यावन्तो पदार्थाः विद्यन्ते समेषां पदार्थानां वाचकाः शब्दा अपि विद्यन्ते, तादृशसंज्ञाशब्देन तस्यार्थस्य प्रतीतिबलाद् व्यवहारः प्रचलति। रूपादिविषयेण सह इन्द्रियसन्निकर्षजन्यं यद्रूपादिज्ञानं भवति तदपि तेनैव नामधेयशब्देनैव व्यपदिष्टो भवति। तत्र रूपादिज्ञानानां शब्दविषयकत्वात्तत्रातिव्याप्तिवारणाय शाब्दभिन्नमिति अव्यपदेश्यमितिपदमुपात्तम्। प्रशस्तपादाचार्योऽपि न्यायभाष्यानु-मतमव्यपदेश्यपदप्रयोजनमुररीकृतवान्। न्यायकन्दलीकारस्तु स्वीयव्याख्याना-वसरे इत्थं प्रवदति ''अव्यपदेश्यं नाम शब्दाजन्यम्। व्यपदेशे भवं व्यपदेश्यं, न व्यपदेश्यमव्यपदेश्यं शब्दाजन्यमिति।[42] वार्त्तिककारोऽपि भाष्यकारमतं पोषयति ''तच्चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयनामधेयेनाभिधीयते इति भाष्यम्। तत्प्रतिषेधार्थमाह-अव्यपदेश्यम्''[43] इति।

जयन्तभट्टस्तु भाष्याभिमतं नानुकरोति। तथाह-''तस्मात् प्रत्यक्षस्य लक्ष्यस्यासद्भावात् कस्येदं लक्षणमुपक्रान्तमित्यसम्भवदोषमाशंक्याह सूत्रकारः ''अव्यपदेश्य'' मिति।।[44]तेषामयामाशयः-समेषां ज्ञानानां शाब्दत्वे लक्ष्यात्मकस्य प्रत्यक्षज्ञानस्य उच्छेदत्वापत्तिः स्यात् अतः तस्य प्रत्यक्षस्य लक्षणमेव नैव करणीयम्। तादृशलक्षणस्य लक्ष्यत्वसाधनाय असम्भवदोषवारणाय च

41. न्या. वा. पृ0. 36
42. न्यायकन्दली, प्रत्यक्षप्रकरणम्।
43. न्या. वा. पृ. 36
44. न्यायमञ्जरी प्रत्यक्षपरिच्छेदः।

प्रत्यक्षमशाब्दं भवतीति सूचनाय च अव्यपदेश्यमिति पदमुपात्तम्। रूपादि-विषयकप्रत्यक्षे कदापि रूपादयः शब्दविषयाः न भवन्ति। कारणभेदप्रयुक्तत्वात् प्रत्यक्षशाब्दयोः वैचित्र्यं भिन्नं सिद्ध्यति। एवञ्च कस्यापि विषयस्य प्रत्यक्षात्प्राक् तस्याः संज्ञायाः स्मरणेऽपि सा संज्ञा न प्रत्यक्षबाधिका, यतः सा संज्ञा तस्याः संज्ञायाः स्वरूपं आच्छादयितुं नैव समर्था, अर्थात् प्रत्यक्षसामग्रीसमवधाने प्रत्यक्षस्यैवोत्पत्तिः। तत्र कस्यापि न बाधकत्वं सम्भवति। उक्तं च–

**संज्ञाहि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते।**
**संज्ञिनः सा तटस्थाहि न रूपाच्छादनक्षमा।।**[45]

मन्ये अन्येषामाचार्याणां मतमभ्युपगत्य जयन्तभट्टेण इत्थं प्रतिपादितम्। तथाहि–

**इत्याचार्यमतानीह दर्शितानि यथाऽऽगमम्।**
**यदेभ्यः सत्यमाभाति सभ्यास्तदवलम्ब्यताम्।।**[46]

टीकाकारस्तु अव्यपदेश्यपदेन निर्विकल्पकं व्यवसायात्मकपदेन च सविकल्पकप्रत्यक्षं स्वीकृतवान्। विश्वनाथोऽपि तन्मतमवलम्ब्य प्रतिपादितवान्। "तस्य विभागः, अव्यपदेश्यं व्यवसायात्मकमिति, निर्विकल्पकं सविकल्पकञ्चेति द्विविधं प्रत्यक्षमित्यर्थः।[47]

मन्ये वस्तुतः बौद्धमतापाकरणाय त्रिलोचनगुरोः उपदेशवशात् टीकाकारैः अव्यपदेश्यं व्यवसायात्मकमिति पदद्वयस्य इत्थं व्याख्यानं कृतम् इति हेमचन्द्रग्रन्थादवलोक्यते–"अत्र च पूर्वाचार्यकृतव्याख्या वैमुख्येन संख्यावद्भिस्त्रिलोचनगुरुवाचस्पतिप्रमुखैरयमर्थः समर्थितो यथा इन्द्रियार्थसन्नि-कर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षमित्येवं प्रत्यक्षलक्षणं, "यतः" शब्दाध्याहारेण च इत्यादि। उद्योतकरस्तु तथानाङ्गीकरोति अपि च भाष्यानुमतं निगदति–"पञ्चपदपरिग्रहणप्रत्यक्षलणमुक्तं, यत्रान्यतरपदपरिग्रहो नास्ति तत्प्रत्यक्षाभा-समिति।

---

45. न्यायम. प्र. परि
46. न्या. म. प्र. परि
47. न्य. सू. वृत्तिः प्र. सू व्याख्या।

शाब्दभिन्नत्वविशिष्टं प्रत्यक्षलक्षणमभ्युपेयते चेत्तर्हि भ्रमविषयेऽतिव्याप्तिः, यतः ग्रीष्मऋतौ चक्षुः सन्निकृष्टेषु मरुमरीचिषु जायमानस्य उदकमिति ज्ञानस्य भ्रमात्मकस्य प्रत्यक्षत्वव्यवच्छेदाय अव्यभिचारीतिं पदं सूत्रकारेण विशेषितम्। तथा च शाब्दभिन्नत्वे सति भ्रमभिन्नत्वे सति इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति। तथासति संशयेऽतिव्याप्तिः, यतः चक्षुरिन्द्रियेण सन्निकृष्टमप्यर्थं पश्यन् दूरस्थपुरुषःनावधारयति धूमो वाऽयं रेणुरिति यत्संशयात्मकं ज्ञानं तस्य च शाब्दभिन्नत्वाद् भ्रमभिन्नत्वाद् इन्द्रियार्थसन्निकर्षत्वाच्च तत्र संशये प्रत्यक्षलक्षणस्यातिव्याप्तिः। तद्व्यवच्छेदार्थं तल्लक्षणे व्यवसायात्मकमिति पदं विशेषणीयम्। तथा च इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति प्रत्यक्षलक्षणं फलितं भवति। इत्यलमतिविस्तरेण।

---

48. प्रमाणमीमांसा पृ. 36
49. न्या. वा. पृ. 37

# न्यायशास्त्रदिशा प्रत्यक्षलक्षणम्

डॉ. सुधांशुभूषणपण्डाः

तत्र प्रेक्षावतां विवेचकानां प्रवृत्तये "लक्षणप्रमाणाभ्यां वस्तुनिर्णयाः" इति प्राचीनन्यायोक्तिं हृदि निधाय प्रमाणाधीना समेषां पदार्थानां व्यवस्थितिरित्यतः प्रमाणप्रमेयादिषोडशपदार्थान्तर्गतेषु प्रमाणपदार्थस्य प्रधानत्वाद् भगवता अक्षपादगौतमेन "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यस्मिन् सूत्रे प्रमाणानां चतुष्टयत्वं प्रतिपादितम्। परन्तु न्यायसारकारस्य भासर्वज्ञस्य मते उपमानस्य शब्देऽन्तर्गतत्वात् त्रिविधमेव प्रमाणमिति सूचितमस्ति। उक्तं च- त्रिविधं प्रमाणम्। प्रत्यक्षानुमानमागमश्चेति।।[2] उपमितिं प्रति सादृश्यज्ञानस्य करणत्वाद् अतिदेशवाक्यार्थस्मरणस्य च व्यापारत्वाद् उपमितिप्रमा प्रत्यक्षाद्यतिरिक्ता। तत्करणस्यापि प्रमाणान्तरत्वं सिद्ध्यति। अतः सूत्रकारस्य मतं समीचीनं प्रतिभाति। न्यायशास्त्रे प्रमाणशब्दः प्रमीयते इति भावव्युत्पत्त्या प्रमापरत्वेन, प्रमीयते अनेन इति करणव्युत्पत्त्या प्रमाणपरत्वेन चोपलभ्यते। अनधिगतार्थगन्तृत्वं प्रमाणमिति प्रमाणलक्षणे प्रमाणशब्दः प्रमापरतया प्रदर्शितः। न्यायसूत्रे प्रदर्शितं प्रमाणपदं प्रमाकरणत्वार्थकम्। तस्य लक्षणं प्रतिपादयति तर्कभाषाकारः केशवमिश्रः "प्रमाकरणं प्रमाणमिति।[3] सम्यगनुभवसाधनं प्रमाणम्"[4] इति भासर्वज्ञः। सम्यक् चासावनुभवश्चेति सम्यगनुभवः। तस्य साधनं करणं प्रमाणम्। प्रमीयते येन तत् प्रमाणमिति करणव्युत्पत्तेरिह विवक्षितत्वात् करणभूतस्य प्रमाणस्य लक्षणाभिधानमिति[5] पदपञ्चिकाकारः सूरिवासुदेवः प्रवदति। न्यायसारकारोक्तप्रमाणलक्षणे संशयविपर्ययादिज्ञानवारणाय सम्यग्

---

1. न्या. सू. 1//1/3
2. न्या. सा. पृ. से 79
3. त. भा. पृ. स. 16
4. न्या. भूषणं. पृ. सं. 11
5. पद. पंचि. पृ. स. 3

पदम्। "सम्यग्ग्रहणं संशयविपर्ययापपोहार्थम्।"[6] स्मरणज्ञानव्यवच्छेदाय अनुभवपदं प्रमाणलक्षणमुपात्तम्। "स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणम्"[7] सम्यगनुभवः प्रमाणमित्युक्ते फलभूतस्यानुभवस्य प्रमाणत्वापत्तिः तथापि सम्यगनुभवहेतुरिति सिद्धेः साधनमिति गुरुकरणे प्रमातृप्रमेयव्यवच्छेदाय साधनपदमुपात्तं न्यायसारकारेण भासर्वज्ञेन। "प्रमातृप्रमेयव्यवच्छेदार्थं फलाद् भेदज्ञानज्ञापनार्थं च साधनग्रहणम्।"[8]

प्रत्यक्षानुमानोपमानशब्दात्मकप्रमाणचतुष्टये प्रत्यक्षप्रमाणस्य वरिष्ठत्वात् सर्ववादिसम्मतत्वाच्च आदौ प्रत्यक्षसामान्यलक्षणं वक्तव्यम् अस्ति।

सामान्यज्ञानमन्तरा विशेषजिज्ञासानुदयाद् आदौ प्रत्यक्षसामान्यलक्षणं वक्तव्यमित्याकाङ्क्षायां सूत्रकारेण महर्षिणा गौतमेन सूत्रितं यत् "इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्। प्रत्यक्षसूत्रे अव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकमिति पदत्रयं व्यभिचारवारकत्वेन विशेषणम्। लक्षणं तावत् इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वमर्थाद् इन्द्रियस्यार्थेन सह सन्निकर्षाद् यज्ज्ञानुमुत्पद्यते तत्प्रत्यक्षमिति सिद्धान्तः। चक्षुःश्रोत्रत्वगादिबाह्यपञ्चेन्द्रियगोचरैः पदार्थैः सह तत्तदिन्द्रियसन्निकर्षाज्जायमानं तत्तदर्थविषयकज्ञानं प्रत्यक्षं भवति।

यदि इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणमभ्युपेयते चेत्तर्हि आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेन साकं संयुज्य प्रत्यक्षं प्रसज्यते इत्येषा या न्यायशास्त्रसम्मता प्रक्रिया तस्याः अपलापो भविष्यतीति वक्तुं न शक्यते। यतः सूत्रकारेण यदिदं प्रत्यक्षलक्षणमुक्तं तदिन्द्रियार्थसन्निकर्ष एव प्रत्यक्षस्य कारणम्, तन्न इतरकारणानां व्यवच्छेदकम्। अर्थात् इदमेव न कारणमेतदतिरिक्तमपि कारणमस्तीत्यवधारणमेव, येन इन्द्रियार्थसन्निकर्षातिरिक्ताऽऽत्ममनःसंयोगादौ प्रत्यक्षव्यवच्छेदः स्यात् किन्तु प्रत्यक्षस्य यद्विशिष्टं कारणं इन्द्रियार्थसन्निकर्षः स एव अत्रोच्यते न तु ज्ञानमात्रसामान्यस्य। आत्ममनःसंयोगादीनामनुमानादिज्ञानसाधारणतया च

6. न्या. भू. पृ. सं 11
7. न्या. भूष. पृ. सं. 43
8. न्या. भूष. पृ. सं. 46

नानुमानादिस्थले अनुमेयादौ इन्द्रियसंयोगः सम्भवति, अपि च प्रत्यक्षमात्रे इन्द्रियसंयोगस्य कारणत्वमवश्यम्भवतीति प्रत्यक्षमात्रावच्छिन्नं प्रति इन्द्रियार्थसन्निकर्षस्य विशिष्टकारणत्वं सुवचम्। न्यायशास्त्रे चत्वारि प्रमाणानि स्वीकृतानि। यथोक्तं न्यायसूत्रे-''प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'' (न्यायसूत्रम् 1/1/3) तत्र 'साक्षात्कारिप्रमाणं प्रत्यक्षमित्यभिधीयते। तद्विग्रहस्तु अक्षमक्षं प्रति इति प्रत्यक्षम्। अक्षशब्दोऽत्र ज्ञानेन्द्रियपरः। अतः तत्तज्ज्ञानेन्द्रियं प्रति नियतं तत्तत् प्रत्यक्षं भवति। ततश्च चाक्षुषत्वादिभेदेन अनेकविधम्। साक्षात्कारश्च इन्द्रियार्थसंयोगः। तत एव प्रमोत्पद्यते। ततश्च पदार्थः प्रमीयते इति। प्रत्यक्षमपि द्विविधं भवति। एकं सविकल्पकम्, अपरं निर्विकल्पकमिति। तस्याः साक्षात्कारिण्याः प्रमायाः करणं त्रिविधं भवति। कदाचिदिन्द्रियम् कदाचिदिन्द्रियार्थसम्बन्धः कदाचिच्च ज्ञानम्।

अत्रोक्ते भेदत्रये यदा निर्विकल्पकं ज्ञानं फलं तदेन्द्रियमेव केवलं करणं भवति। ज्ञानस्यायमस्ति नियमः। प्रत्यक्षेच्छया प्रथममात्मा मनसा युज्यते, मनस्तदिन्द्रियेण, इन्द्रियं च पदार्थेन, ततश्च प्रथमं निर्विकल्पकं ज्ञानं जन्यते। तच्चेदं किञ्चिदित्याकारकं नामजात्यादियोजनारहितं भवति। तस्य निर्विकल्पकस्य ज्ञानस्येन्द्रियमेव करणं भवति।

पूर्वमुक्तमादाविन्द्रियेण पदार्थग्रहे निर्विकल्पकम् अर्थात् विशेषणविशेष्याद्यनवगाहि इदं किञ्चिद् इत्याकारकमेव ज्ञानं जायते। तदा केवलमिन्द्रियमेव करणं भवति, इत्यपि प्रागुक्तम्। अनन्तरं च यदा विशिष्य ज्ञातुमुपक्रमते तदा इन्द्रियस्यार्थेन विशेषसम्बन्धे सति विशेषणविशेष्यादिरूपं यज्ज्ञानमुत्पद्यते 'अयं घटोऽयं पटः 'इत्याकारकम्, तदेन्द्रियार्थसन्निकर्षः करणं भवति इन्द्रियेणार्थसम्बन्धे पूर्वमुक्तं निर्विकल्पज्ञानमिन्द्रियव्यापाररूपतामावहति, तच्च सविकल्पकज्ञानस्य अवान्तरव्यापाररूपम्। अर्थादाभ्यन्तरव्यापाररूपमस्ति, सविकल्पकज्ञानं तस्य फलं भवति।

इन्द्रियमिन्द्रियार्थसन्निकर्षश्च करणमुक्तम्। ज्ञानस्यार्थाद् निर्विकल्पकज्ञानस्य करणत्वमुच्यते। तथा हि इन्द्रियार्थसन्निकर्षजन्यपदार्थबोधे तात्त्विकविचार उत्पद्यते। अर्थाद् इन्द्रियगोचरे पदार्थे किं वास्तविकं

किमवास्तविकमिति। यद्वास्तविकं तदेवात्र ग्राह्यम्। यच्चावास्तविकं तदुपेक्षणीयं त्याज्यं वेत्यादिरूपेण पूर्वज्ञातपदार्थेन हानोपादानादिबुद्धयो जायन्ते, तदा ज्ञानमेव करणं भवति। तत्र च सविकल्पकज्ञानमवान्तरव्यापारो भवति। सविकल्पकज्ञानस्य च फलं तदा हानादिबुद्धय एव भवन्ति।

अवान्तरव्यापारस्य लक्षणम् ''तज्जन्यस्तज्जन्यजनकोऽवान्तरव्यापारः' इति। यथा कुठारदारुसंयोगः कुठारजन्यो भवति। अर्थात् कुठारः प्रथमं दारुणा सह संयुनक्ति ततश्च छिदा जायते अर्थात् दारुभेदनं भवति। यच्च कुठारदारुसंयोगस्य फलम्। तस्मिन् फले प्राथमिककुठारदारु संयोगादिरवान्तरव्यापारो भवति। स चावान्तरव्यापारजन्यः (कुठारजन्यः) तेन जन्या या छिदा तस्या जनको भवति।

अस्मिन्विषये मतभेदोऽप्याचार्याणां दृश्यते, यथा तर्कभाषाया अस्मिन् वाक्ये लक्ष्यते ''सविकल्पकादीनामपीन्द्रियमेव करणम्। अथ च-''यावन्ति त्वान्तरालिकानि सन्निकर्षादीनि तानि सर्वाणि, अवान्तरव्यापार इति''। अर्थात् वस्तुसाक्षात्काराय प्रसृतमिन्द्रियं यावत्पूर्ववस्तु साक्षात्कारं यद्यदनुभवति यद्यत्करोति, यद्यद्ज्ञानमुपपादयति तत्तत्सर्वमेवावान्तरव्यापारपदेन व्यपदेष्टुं शक्यते इति। अत एतेन सिद्ध्यति यत् प्रत्यक्षविषये द्विविधं मतं प्रचलितमासीत्। आद्यं प्रत्यक्षं त्रिविधकारणान्वितम्। द्वितीयम् एकविधमेव। संक्षेपेण त्रिविधकरणव्यापारादीनां वक्ष्यमाणं स्वरूपम्–

| करणम् | अवान्तव्यापारः | फलम् |
|---|---|---|
| (क) इन्द्रियम् | इन्द्रियार्थसन्निकर्षः | निर्विकल्पकप्रमा |
| (ख) इन्द्रियार्थसन्निकर्षः | निर्विकल्पकज्ञानम् | सविकल्पकप्रमा |
| (ग) निर्विकल्पकज्ञानम् | सविकल्पकज्ञानम् | हानोपादानोपेक्षाबुद्धिः |

# तात्पर्यटीकाभितप्रत्यक्षप्रमाणविमर्शः

डॉ. महानन्दझा

सुविदितमेवेदं तत्र भवताम्, यदिदं भारतवर्षं सुचिरात् प्रशस्तमायतनं विविधविद्यानाम्। यासां किल–

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चर्तुदश॥**

तत्र न्यायविस्तरपदेन गोतमीयन्यायवैशेषिकन्यायादिवैदिकतन्त्राण्येव गृहीतानि भवन्ति। तत्र वेदसाहचर्येण वैदिकानामेव तन्त्राणां परिग्रहस्य सर्वथौचित्यात्। ताः सर्वा अपि विद्याः वेदमनुवर्तमानाः साक्षात् परम्परया वा परमपुरुषार्थं मोक्षमेव समुपलक्ष्य प्रवर्तन्त। गौतमीयन्यायदर्शने प्रमाणादि–षोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति महता संरम्भेण महर्षिणा उपपादितम्। तच्च प्रमाणं तत्तद्दार्शनिकाभिमतमेकमनेकं वेति भिन्ना वार्ता। तत्र प्रत्यक्षप्रमाणं पुरस्कृत्य किञ्चिद् वच्मि।

सर्वप्रमाणोपजीव्यत्वात् सर्वसिद्धान्तसम्मतत्वाच्च प्रत्यक्षप्रमाण–मङ्गीकृतं सर्वैरपि दार्शनिकैः। आस्तिकनास्तिकोभयसम्मतं च प्रत्यक्षप्रमाणम्। तत्र चार्वाकोऽपि व्यतिरिक्तान् प्रमाभेदानस्वीकृत्य सर्ववादिप्रतिवादिनां मध्ये मतैक्यमादधाति, तस्य प्रत्यक्षैकप्रस्तावत्वात्। प्रत्यक्षमेकं हि चार्वाकमिति तस्याभिमतमुपस्थापयन्ति दार्शनिकाः। बौद्धदर्शने कल्पनापोढ़मभ्रान्तं प्रत्यक्षमिति स्वीक्रियते।[4] आर्हताः प्रत्यक्षपरोक्षभेदेन प्रत्यक्षमपरोक्षकोटौ संस्थाप्य विशदः प्रत्यक्षमिति[5] तल्लक्षयन्ति। सांख्यदर्शने प्रतिविषयाध्यवसायो दृष्टमिति

---

1. स्मृतिः
2. न्यायसूत्रम् 1.1.1।
3. सर्वदर्शनसंग्रहः।
4. न्यायबिन्दुः पृ. 8
5. प्रमाणमीमांसा पृ. 24।

तल्लक्षणम्[6], इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषत्वधारणप्रधाना वृत्तिः प्रत्यक्षमिति योगभाष्यकर्तुर्मतम्।[7] इन्द्रियसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि-व्यवसायात्मकं प्रत्यक्षम् इति नैयायिकानामभिमतम्। परवर्तिनैयायिकाः वैशेषिकाश्च ईश्वरजीवप्रत्यक्षसाधारणं तथा अनुमानादिषु चातिव्याप्तिवारणाय ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति[8] प्रत्यक्षलक्षणं प्राहुः अनुमित्यादिषु ज्ञानाकरणकज्ञानविरहात्।

साक्षात्प्रतीतिः प्रत्यक्षमिति प्राभाकरमीमांसकानां मतम्[9]। पार्थसारथिमिश्रस्तु प्रत्यक्षमिन्द्रियसम्प्रयोगजन्यत्वेनैव स्वीकरोति[10]। कुमारिलमतमनुसृत्य मानमेयोदये इन्द्रियसन्निकर्षजं प्रत्यक्षं ग्रन्थकारो मन्यते।[11] वैयाकरणानां मतेऽपि अपरोक्षे च इत्यादिना प्रत्यक्षं सूत्रितम्।[12] अद्वैतवेदान्तिनां यत्साक्षादपरोक्षाद् ब्रह्म इति श्रुतेः चैतन्यमेव प्रत्यक्षप्रमा[13] विशिष्टाद्वैतिनः साक्षात्प्रतीतिरेव प्रत्यक्षप्रमाणमितिवदन्ति।[14] लक्षणभेदेऽपि सर्वतन्त्रसम्मतं हि प्रत्यक्षप्रमाणम्।

''इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेशमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति हि न्यायसम्मतं प्रत्यक्षलक्षणम्।[15] अत्र प्रस्तूयते आचार्यवाचस्पति मिश्रविरचितं टीकाभिमतं व्याख्यानम् (सन्निकर्षः संयोगसमवायादिभेदेन षड्विधः)। अत्र सूत्रस्य एकदेशः ज्ञानपदम्, तज्ज्ञानपदं किमर्थमिति वार्तिककाराणां श्रीमतामुद्योतकराणां प्रश्नः तत्रैव समाधानवाक्यमपि सुखादिव्युदासार्थमिति प्रोक्तम् यतोऽहि इन्द्रियार्थसन्निकर्षात् सुखदुःखे अपि

6. सांख्यतत्त्वकौमुदी क्षरिक्ष 5, पृ. 102।
7. योगदर्शनम् तत्त्ववैशारदी व्यासभाष्य 1.1.7।
8. न्यायसिद्धान्तमुक्तावली पृ. 2.7
9. प्रकरणपञ्चिका पृ 146
10. शास्त्रदीपिका पृ. 54
11. मानमेयोदयः पृ. 11।
12. पाणिनिसूत्रम् 3.2.119।
13. वैदान्तपरिभाषा पृ. 20।
14. न्यायपरिशुद्धिः पृ. 68
15. न्यायसूत्रम् 1.1.4।

भवतः तद्व्युदासार्थमाह ज्ञानमिति। अत्र टीकाकाराः तदेव हि लक्षणवाक्यमुच्यते यस्य लक्ष्यानपेक्षोऽतिव्याप्त्यव्याप्तिव्युदासो लक्षणपदेभ्य एव प्रतीयते। सुखादीनां विज्ञानाभिन्नहेतुजत्वेन विज्ञानत्वादशक्यं व्यावर्तनमिति चेन्न अभिन्नहेतुजत्वासिद्धेः। ''नखलु या चन्दनस्पर्शज्ञानस्योत्पत्तौ सामग्री सैव सुखस्यापि। अस्ति हि चन्दनेन्द्रिसंयोगात् शीतस्पर्शज्ञानं तद्वदेव अस्य सुखमपि भवेत्। अवान्तरसामग्रीभेदेपीन्द्रियार्थमनस्कारजत्वात् ज्ञानजातीयत्वमिति चेत् न; किञ्चित् कारणाभेदेऽपि कार्यभेदस्याकस्मिकत्वोप- पत्तेः। तदर्थत्वाच्च कारणभेदानुसरणप्रयासः। न च उपादानाभेदादभेद इति युक्तम्, भिन्नानामपि ज्ञानानामेकसमनन्तरप्रत्ययोपादानत्वस्य अभ्युपगतत्वात् अपि च उपादानाभेदश्च कुतश्चित् कारणभेदात् कार्यभेदः इत्यत्र को विरोधः? अत एव उपादानस्य पिठरस्य अभेदे पूर्वरूपादिप्रध्वंसानां कारणानां भेदात् भिन्नजातीया जायन्ते गन्धरूपरसस्पर्शाः इत्यस्माकं सिद्धान्तः। तस्मादर्थप्रवणेभ्यो ज्ञानेभ्यः तदप्रवणतया भिन्नजातीयाः सुखादयो यथास्वमनुकूलवेदनीयत्वादिभिर्लक्षणैः मानसप्रत्यक्षवेदनीयाः।

एवञ्च असत्यपीन्द्रियार्थसन्निकर्षे ज्ञानमात्रादेव सुखदुःखयोः स्वप्नान्तिके दर्शनात् यत्रापीन्द्रियार्थसन्निकर्षस्तत्रापि ज्ञानमस्तीति तदेव सुखदुःखयोः कारणम्। इन्द्रियार्थसन्निकर्षस्य तु ज्ञानमात्रोपयोगादन्यथा- सिद्धौ भावाभावौ इति तदयुक्तम्, स्वप्नान्तिके सुखदुःखोत्पादस्यासिद्धेः तज्ज्ञानस्य अर्थज्ञानस्येव मिथ्यात्वात्। तस्मात् इन्द्रियार्थसन्निकर्षोऽपि सुखदुःखोत्पादहेतुः स्वीकर्तव्यः। स च सत्यप्यर्थसाक्षात्कारे नास्ति सिद्धानामिति न तेषां सुखदुःखोत्पादः। अपि च चरमभाविकारणं गृहीत्वा पूर्वभाविनामकारणत्वापादने तन्तूनामपि पटं प्रत्यकारणत्वप्रसङ्गः। संयोगभेदादेव तादृशपटोत्पत्तेः तन्तूनां च संयोगभेद एवोपयोगात्। तत्सहितस्य तु तत्कारणत्वं सन्निकर्षस्याप्यालोचनसहितस्येति समानम्। यथाहुराचार्याः प्रशस्तपादभाष्ये स्रगाद्यप्रेतविषयसान्निध्ये सतीष्टोपलब्धि इन्द्रियार्थसन्निकर्षधर्माधर्माद्य- पेक्षादात्ममनसोः संयोगात् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम् इति। तस्मात् साधूक्तं सुखादिनिवृत्यर्थं ज्ञानग्रहणमिति।

इदानीं प्रत्यक्षे प्रयोजकं किमिति जिज्ञासायाम् इन्द्रियमेव प्रत्यक्षे प्रयोजकमिति न्यायसिद्धान्तः, तस्य प्राप्यकारित्वनियमात्। प्रत्यक्षप्रमास्थले

आत्मा मनसा युज्यते, मनः इन्द्रियेण इन्द्रियं विषयेण एतावता प्रत्यक्षोत्पत्तिः[16]। आत्ममनसः सन्निकर्षस्तु असाधारणं कारणम्। न्यायभाष्यकारेणापि मन इन्द्रियार्थसन्निकर्षः विशिष्टकारणत्वेन गृहीतम्[17]। मनः सम्बन्धापेक्षा तु सर्वप्रमासाधारणम् इन्द्रियमनःसंयोगस्तु प्रत्यक्षमात्रं प्रति असाधारणम् किन्तु, इन्द्रियार्थसन्निकर्षस्तु असाधारणरूपेण प्रत्यक्षप्रमायामेव सम्भवति।

ईश्वरप्रत्यक्षे लक्षणसंगतिं विधातुं ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति ईश्वरप्रमासाधारणलक्षणं नैयायिकाः वैशेषिकाश्च मन्यन्ते। नैयायिकमते चक्षुरादीन्द्रियाणि शरीरसंयुक्तानि न तु तदवयवानि। तेषां मते इन्द्रियाणि षडेव। तत्र चक्षुस्तेजोरूपम्, श्रोत्रमाकाशरूपम्, घ्राणेन्द्रियं पार्थिवम्, रसनेन्द्रियं जलरूपम्, त्वगिन्द्रियं स्पर्शरूपं चेति मन्यन्ते। तत्र चक्षुषैव रूपज्ञानम् स्पर्शेनैव स्पर्शज्ञानम्, घ्राणेनैव गन्धज्ञानम्, रसनेनैव रसज्ञानम् मनसैव सुखादिज्ञानमिति न्यायाचार्यभासर्वज्ञस्यापि सम्मतिः[18] अत्रोपस्थातुं शक्यते। तथा च चक्षुस्थितं मध्यकृष्णश्वेतपिण्डात्मकं न नेत्रेन्द्रियम् अपितु तस्मादेव निर्गत्य विषयदेशसन्निकृष्टरश्मय एव हि तत् चक्षुषस्तत्रैव प्राप्यकारित्व नियमात्। दूरस्थितान् विषयानपि वेगातिशयादेव रश्मयो व्याप्नुवन्ति तदैव प्रत्यक्षं भवति।[19]

न्यायमञ्जरीकारः श्रीजयन्तभट्टः सर्वेन्द्रियाणां प्राप्यकारित्वं समर्थितवान् तथैव न्यायमतेऽपि। महर्षिगौतमेनापि दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः[20] इत्यस्मिन् सूत्रे प्राप्यकारित्वं स्पष्टमुक्तम्। भाष्यकारेणापि प्रमाणस्य तत्त्वविषयादितिग्रन्थे "व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः, व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति भाष्ये चक्षुषः प्राप्यकारित्वं निःसन्देहं मतम्[21]। वैशेषिकदर्शनेऽपि इन्द्रियाणां प्राप्यकारित्वं साधितम्। चक्षुरिन्द्रियस्यैव अर्थदेशगमनम्, अन्येन्द्रियाणां

---

16. तर्कसंग्रहदीपिका पृ. 119।
17. न्यायभाष्यम् पृ 27
18. न्यायभाष्यम् पृ. 12
19. न्यायभाष्यम् पृ 14।
20. मानमेयोदयः पृ. 14
21. न्यायभाष्यम् पृ. 51

तु स्वदेश एव विषयग्रहणसामर्थ्यम्। तत्र घ्राणस्य स्वदेशस्थस्यैव भवति सन्निकर्षः, रसनेन्द्रिये रसस्य भवति सन्निकर्षः, स्पर्शनमपि त्वगिन्द्रिय-देशप्राप्यम्। श्रावणप्रत्यक्षे कदम्बमुकुलन्यायेन, वीचीतरङ्गन्यायेन वा शब्दधारा जायते इति श्रावण प्रत्यक्षप्रकारः[22]। सुखदुःखादिप्रत्यक्षे तु आत्मनः सन्निकर्ष एव, मनसापि इन्द्रियत्वात् प्रत्यक्षज्ञानं जायते। लौकिकालौकिकभेदेन सन्निकर्षः द्विविधः। तत्र संयोगसंयुक्तसमवायादिभेदेन लौकिकसन्निकर्षः षड्विधः न्यायशास्त्रे प्रसिद्धः[23]। सामान्यलक्षणज्ञानलक्षणयोगजभदेन अलौकिकसन्निकर्षः त्रिविधः[24]। पुनरपि सर्वे सविकल्पकनिर्विकल्पभेदेन अन्तर्भूता इति मन्यन्ते। इन्द्रियार्थसन्निकर्षातिरिक्तमपि आलोकमुद्भूतरूपत्वञ्च प्रत्यक्षे कारणम्।

प्रत्यक्षोत्पत्तौ कः क्रमः इति जिज्ञासायां श्रीजयन्तभट्टः चतुष्टयत्रयद्वय-सन्निकर्षानभिवदति। तत्र बाह्ये रूपादिप्रत्यक्षे प्रथमक्षणे आत्ममनः सन्निकर्ष ततः मनः इन्द्रियसन्निकर्षः ततश्च इन्द्रियार्थसन्निकर्षः चतुर्थक्षणे ज्ञानोत्पत्तिः। सुखादिप्रत्यक्षे त्रिसन्निकर्षापेक्षा, तत्र चक्षुरादिव्यापाराभावात्। आत्मनि तु योगिनो द्वयोरात्ममनसोरेव संयोगाज्ज्ञानमुपजायते।[25]

नैयायिकानां मते मनः परमाणुरूपं नित्यद्रव्यञ्चाभितम्। तस्मादेव अस्मिन् मते प्रत्यक्षात्मिकावृत्तिर्परिणामो वा नाङ्गीक्रियते। मनसो विषयाकार-परिणामाभावात्[26] एवमेव बुद्धिपरिणामोऽपि नाभिमन्यते तस्य ज्ञानरूपगुणत्वात्।[27] न्यायमते इन्द्रियं हि प्रत्यक्षाय असाधारणं कारणं तस्मादेव इन्द्रियषट्कजन्यं ज्ञानं प्रत्यक्षं, तत्करणमिन्द्रियं तस्मादिन्द्रियमेव प्रत्यक्षप्रमाणमिति सिद्धम्।[28]

---

22. न्यायकन्दली पृ. 23।
23. संग्रहदीपिका पृ. 119।
24. तर्कभाषा पृ. 73
25. कारिकावली कारिका सं 63।
26. न्यायमञ्जरी पृ. 70।
27. तर्कसंग्रहः प्रत्यक्षखण्डः।

# न्यायसिद्धान्तमुक्तावलीसम्मतप्रत्यक्षप्रमाणविमर्शः

डॉ. रामचन्द्रशर्मा

प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति सिद्धान्तः[1]। तत्र प्रमाणाधीना सर्वेषां व्यवस्थितिः[2]। अतः प्रमाणतत्त्वं विशेषतो विज्ञेयमेव। तत्र ''प्रमाकरणं प्रमाणम्''—इति प्रमाणसामान्यलक्षणम्। प्रमा चात्र यथार्थज्ञानमेव। यथोक्तम्—

**भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा।**
**अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम्, तत्प्रमा।।**[4] इति

न च स्मृतेरपि भ्रमभिन्नज्ञानत्वेन तत्करणस्यापि प्रमाणत्वं स्यादिति चेन्न, यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षित्वात्। अत एव आचार्येण यथार्थानुभवस्यैव प्रमात्वं विज्ञापितम्। तद्यथा—

**यथार्थानुभवो मानमनपेक्षतयेष्यते**[5]। इति

यद्यपि यथार्थानुभवजन्यस्मृतेरपि सफलप्रवृत्तिजनकत्वेन अर्थवत्त्वं विद्यते तथापि तस्याः जनकानुभवसमानविषकतया तत्प्रामाण्याधीन-प्रामाण्यकतया सापेक्षत्वात् तत्र न प्रमात्वव्यवहारस्तान्त्रिकाणामिति बोध्यम्।[6]

स च यथार्थानुभवश्चतुर्विधः। तद्यथा—

**स्यादनुभूतिश्चतुर्विधा। प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।**[7] इति

1. न्यायसूत्रम् 1/1/1
2. प्रामाण्यवादः प्रारभ पृ. 7
3. न्यायभाष्यम् पृ. 3
4. कारिकावली का. 134-35
5. न्याकुसुमाञ्जलिः 4/1
6. न्या.कु. हरिदासी पृ. 156
7. कारिकावली 51-52

तत्करणान्यपि चत्वारि-"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि[8] इति गौतमसूत्रोक्तानि वेदितव्यानि। करणञ्च व्यापारवदसाधारणं कारणम्। इत्थञ्च सन्निकर्षादिव्यापारमाध्यमेन प्रत्यक्षादीनां प्रमाकरणत्वं बोध्यम्। एष्वपि प्रत्यक्षस्य सर्वोपजीव्यत्वात्प्राधान्यमिति तस्य स्वरूपं विशेषेण विज्ञेयम्।

तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्। इन्द्रियार्थसन्निकर्षजं ज्ञानं प्रत्यक्षम्। ईश्वरप्रत्यक्षन्तु न लक्ष्यम्।" इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्य-मव्यभिचारि व्यवसायात्मकं प्रत्यक्षमि[9]तिगौतमसूत्रे तथैवोक्तत्वात्। अथवा "ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्[10] इति प्रत्यक्षलक्षणमङ्गीकरणीयम्। ज्ञानं नास्ति करणं यत्र तज्ज्ञानाकरणकं, तादृशं ज्ञानं प्रत्यक्षमिति तात्पर्यम्। अनुमितौ व्याप्तिज्ञानस्य, उपमितौ सादृश्यज्ञानस्य, शाब्दबोधे पदज्ञानस्य, स्मृतावनुभवस्य करणत्वात्तेषु नातिप्रसङ्गः। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्, तस्य नित्यत्वेनाकरणकत्वात्तत्संग्रहः। अस्मत्प्रत्यक्षे च व्याप्तिज्ञानादीनामकरणत्वात्तत्र लक्षणसमन्वयः। जन्यप्रत्यक्षस्य व्यापारवदसाधारणकारणानि घ्राण-रसन-चक्षुस्त्वक्-श्रोत्र-मनोरूपाणि इन्द्रियाणि इति तान्येव प्रत्यक्षप्रमाणत्वेनाङ्गीकरणीयानि। तच्च प्रत्यक्षं पूर्वोक्तषड्विधेन्द्रियजन्यत्वात् षड्विधम्। तद्यथोक्तम्-

**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम्।[12] इति**

तथा च-"घ्राणजं, रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसञ्चेति षड्विधं प्रत्यक्षं वेदितव्यम्। न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वमिति वाच्यम्। जन्यप्रत्यक्षस्यैव विभजनात् पूर्वाक्तसूत्रानुसारात्। अत्र तत्तदिन्द्रियाणां विषयं ग्राहयन्नाह ग्रन्थकारः-

**घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।**
**तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥**

---

8. न्यायसूत्रम् 1/1/3
9. न्यायसूत्रम् 1/1/4
10. न्यासिद्धान्तमुक्तावली पृ. 183
11. कारिकावली 51
12. कारिकावली53.56

**उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।**
**विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्।**

**क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः।**
**गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः॥**

**उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।**
**रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्॥** द्रव्याध्यक्षे[13]

तथा च गन्धत्वादिसहिताः गन्धादयो गुणा उद्भूताः तत्तदिन्द्रियग्राह्याः। उद्भूतत्वञ्च प्रत्यक्षप्रयोजकसन्निकर्षयोग्यत्वम्। एवमुद्भूतरूपं रूपत्वादिसहितं, उद्भूतरूपवन्ति द्रव्याणि, एवं प्रत्यक्षविषयेऽधिकरणे विद्यमानाः पृथक्त्वादयः, तादृशः समवायः एतान् सर्वान् चक्षुः आलोकसंयोगोद्भूतरूपसम्बन्धाद् गृह्णाति। तथा चालोकसंयोग उद्भूतरूपञ्च चाक्षुषप्रत्यक्षे कारणमिति बोध्यम्। तत्र द्रव्यचाक्षुषं प्रति तयोः "समवायसम्बन्धेन" द्रव्यसमवेतरूपादिप्रत्यक्षे ‘‘स्वाश्रयसमवायसम्बन्धेन", द्रव्यसमवेतसमवेतरूपत्वादिप्रत्यक्षे "स्वाश्रयसमवेतसमवायसम्बन्धेन" च कारणत्वं बोध्यम्। एवमेव उद्भूतस्पर्शवद्द्रव्यं, स्पर्शत्वादिसहितः तादृशस्पर्शः त्वचो ग्राह्यः। अत्रेदं बोध्यं यद् रूपभिन्नं रूपत्वादिभिन्नं यत् चक्षुषः प्रत्यक्षविषयं तत् त्वगिन्द्रियस्यापि ग्राह्यं भवति। तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणाः योग्यवृत्तयश्च क्रियाजातयस्ते त्वचोऽपि ग्राह्या भवन्ति। अत्र त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेऽपि रूपं समवायेन कारणं भवति इति प्राचीनमतं, तन्मते वायुर्न प्रत्यक्षः किन्त्वनुमेय एव, तथा च पृथिव्यप्तेजांसि त्रीण्येव प्रत्यक्षविषयाणि। तथा बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमिति मन्तव्यम्। नवीनास्तु बिहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं न ञा स्पर्शः कारणं प्रमाणाभावात्, किन्तु चाक्षुषप्रत्यक्षे रूपं, स्पार्शनप्रत्यक्षे स्पर्शः कारणम्, अन्वयव्यतिरेकात्। बहिरिन्द्रजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्, न किञ्चित्! अत्र शंका समुदेति यत्-कार्याभावे कारणाभावस्य प्रयोजकतया गगनादौ बहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः प्रयोजकत्वकल्पने गौरवात् तादृशप्रत्यक्षे रूपत्वेन हेतुतां कल्पयित्वा तदवच्छिन्नाभावत्वेनैव

13. न्यायसिद्धान्तमु. 190

तादृशप्रत्यक्षाभावे प्रयोजकत्वमङ्गीकरणीयमिति। अत्र ग्रन्थकारेण समाहितं यत्–"आत्माऽवृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु[15] इति। अस्येदन्तात्पर्यं यत्–आत्मन्यवृत्तयः शब्दभिन्ना ये रूपादयो विशेषगुणाः तद्वत्त्वं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे प्रयोजकत्वेनाङ्गीकरणीयम्। तद्वत्त्वस्य पृथिव्यादिचतुर्षु सत्त्वात् तेषां प्रत्यक्षं समुपपन्नम्, गगनादौ चाभावान्न तत्प्रत्यक्षमिति। रूपस्य कारणत्वे लाघवमिति चेन्न, वायोस्त्वगिन्द्रियेणाग्रहण-प्रसङ्गात्। अत्रेष्टापत्तिरेव, वायोर्न प्रत्यक्षत्वमपित्वनुमेयत्वमेवेत्यत्र ग्रन्थकारेण प्रतिबन्द्युत्तरेण समाहितं यत्–उद्भूतस्पर्श एव लाघवात् कारणमस्तु, प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किन्न स्यात्! तस्मात् "प्रभां पश्यामि" इतिवत् वायुं स्पृशामि" इति प्रत्ययस्य सम्भवाद् वायोरपि प्रत्यक्षं सम्भवत्येव[15]। अतः बहिरिन्द्रियजन्यद्रव्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम्। वायु-प्रभयोरेकत्वं गृह्यत एव। तथा च "अयमेकः पौरस्त्यो वायुः" "इयमेका सौरी प्रभा"– इत्यादिप्रत्ययेन तद्गतसंख्याप्रत्यक्षे प्रभाचाक्षुषवत् वायोरपि त्वाचप्रत्यक्षं सम्भवत्येव। अत्रेदं विशेषेण बोध्यं यत्–त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणम्। तद्यथोक्तम्–

**'त्वचो योगो मनसा ज्ञानकारणम्।[16]**

**अत्र किम्प्रमाणमिति जिज्ञायामुक्तम्–**

"सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम्"[18] इति। अत्रेदं बोध्यम् गाढनिद्रानाड्यवच्छिन्नात्ममनोयोगो सुषुप्तिः, गाढनिद्रानाडी पुरीतत्। अत्रश्रुतिः–"**हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततम- भिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेत्य** (बृहदारण्यक॰ 5/1/21) इति। तथा च कारणाभावो कार्याभावप्रयोजकः, ज्ञानाभावं प्रति त्वङ्मनः संयोगाभावस्य प्रयोजकत्वे युक्तितः सिद्धे सति ज्ञानसामान्यं प्रति त्वङ्मनोयोगस्य प्रति कारणत्वं सिद्धम्। यदि त्वङ्मनोयोगो

14. तत्रैव
15. कारिकावली का 57
16. न्या. सि. मु. पृ 181
17. कारिकावली का. 57
18. कारिकावली का 50/4

ज्ञानत्वावच्छिन्नं प्रति कारणं न भवेत् तदा सुषुप्त्यवस्थायामपि ज्ञानं भवेत्, न तु तदा किमपि ज्ञानं भवति तस्मात् सुषुप्तौ ज्ञानानुत्पत्तिरेव त्वङ्मनोयोगस्य ज्ञानसमान्यकारणत्वे प्रमाणमिति भावः। न च ज्ञानसामान्यकारणसामग्यभावादेव सुषुप्तौ न किमपि ज्ञानम्, न तु त्वङ्मनोयोगाभावादिति वाच्यम्, सुषुप्तिप्राक्कालोत्पन्नस्य "अहं सुखी" इत्यादिज्ञानस्य विशेषगुणस्य विशेषणतया आत्मनः प्रत्यक्षे कारणीभूतस्य सुषुप्तिप्रथमक्षणे वर्तमानस्य बलाद् आत्मनः प्रत्यक्षापत्तिः स्यात्! त्वङ्मनोयोगस्य ज्ञानसामान्यकारणत्वे तु स्वप्नान्तिमक्षणपर्यन्तमात्रस्थायिनस्तस्य सुषुप्तिप्रथमक्षणे नाशात् सामान्यकरणाभावान्नात्मविषयकप्रत्यक्षापत्तिरिति बोध्यम्। अत्र शंका सञ्जायते यत् त्वङ्मनःसंयोगस्य यदि ज्ञानमात्रे कारणत्वं तदा रासनचाक्षुषादिकाले त्वाचप्रत्यक्षं स्यात् विषयत्वक्संयोगस्य त्वङ्मनसंयोगस्य च सत्त्वात्, परस्परप्रतिबन्धादेकमपि न स्यादिति। अत्र कैश्चित्समाधीयते यत् पूर्वोक्तयुक्त्या त्वङमनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसाम्ग्रयाः स्पार्शनादिप्रतिबन्धकत्वम् अनुभवानुरोधात्कल्प्यते इति। मनोमात्रजन्यमानसप्रत्यक्षस्थले तद्विषयं दर्शयन्नाह ग्रन्थकारः–

**'मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः[23]। इति**

आत्मा "मनोमात्रस्य गोचरः"[22] सुखादिविशेषगुणसम्बन्धात्तस्य प्रत्यक्षत्वम्, सुखादीनाञ्च। इत्थं षड्विधेऽपि प्रत्यक्षे भावविषायाणां स्वरूपस्थितिर्बोध्या। अभावोऽपि विशेषणताविशेषसम्बन्धेन प्रत्यक्षविषय एवेति बोध्यम्।

तच्च प्रत्यक्षं सविकल्पक-निर्विकल्पकभेदेन द्विविधम्। तत्र सप्रकारकं ज्ञानं सविकल्पकं यथा घटोऽयं "पटोऽयम्" इत्यादि घटत्वपटत्व-प्रकारतावगाहिज्ञानं, तच्च व्यवसायात्मकम् अनुव्यवसायेन" घटमहञ्जानामि" इत्याकारकेण गृह्यते। "निष्प्रकारकं ज्ञानं निर्विकल्पकं "यथा" किञ्चिदिदम्"

---

19. कारिकावली का 58
20. तत्रैव
21. न्या. सि. मु. प्रत्यक्षखण्डः
22. तत्रैव पृ. 197

इति। तच्च सविकल्पककारणं, तथाहि चक्षुसंयोगाद्यनन्तरं "घट" इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति, पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् तथा च प्रथमतः घटघटत्वयो-र्वैशिष्ट्यानवगाह्येव ज्ञानं जायते, तच्च न प्रत्यक्षं, तथा हि वैशिष्ट्यानवगाहि ज्ञानस्य प्रत्यक्षं न भवति, "घटमहं जानामि" इति ज्ञानप्रत्यक्षस्य स्वरूपाव-गाहनात्। तत्रात्मनि समवायेन ज्ञानं प्रकारीभूय भासते, ज्ञाने विषयितया घटः, घटे समवायेन घटत्वं, यः प्रकारः स एव विशेषणमित्युच्यते, विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणं निर्विकल्पके च घटत्वादिकं न प्रकारः तेन घटत्वादिविशिष्ट-घटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति। घटत्वाद्य-प्रकारकञ्च घटादिविशिष्टज्ञानं न सम्भवति, जात्यखण्डोपाध्यति-रिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात्। अत एवोक्तम्-

**"ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।"।[3] इति**

षड्विधेऽपि प्रत्यक्षे महत्त्वं कारणमस्ति। यथोक्तम्-"महत्त्वं षड्विधे हेतुः" इति। तच्च महत्परिमाणमेव, तस्य च द्रव्यप्रत्यक्षे "समवायेन" द्रव्यसमवेतगुणकर्मसामान्यप्रत्यक्षे "स्वाश्रयसमवायेन," द्रव्यसमवेतसमवेत गुणत्वकर्मत्वादीनां प्रत्यक्षे 'स्वाश्रयसमवेतसमवायेन कारणत्वं बोध्यम्।

षड्विधेऽपि प्रत्यक्षे इन्द्रियं कारणमिति पूर्वोक्तम्। इन्द्रियत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यात्। "परस्परात्यन्ताभावसमानाधिकरणयो-र्धर्मयोरेकत्रसमावेशः साङ्कर्यम्", तच्चजातिबाधकम्। यथोक्तम्-

**"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।[1]**
**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः।। इति**

तथा च-"इन्द्रियत्वं" विहाय "पृथिवीत्वं" घटादौ "पृथिवीत्वं विहाय "इन्द्रियत्वं" जलीयादीन्द्रिये उभयोरेकत्रसमावेशः पार्थिवघ्राणेन्द्रिये। अत इन्द्रियत्वस्य जातित्वमङ्गीकृत्य तल्लक्षणं न सम्भवति। तर्हि किन्नामेन्द्रियत्वमित्यत्रोक्तम्-

23. कारिकावली का. 59-62
24. कारिकावली का 63-65, 66

"शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम्।[2] शब्देतरोद्भूतविशेषगुणा ये रूपादयः तदनाश्रयत्वं चक्षुरादीन्द्रियेष्वस्ति, एवं ज्ञानकारणमनःसंयोगाश्रयत्वमप्यस्ति इति लक्षणसमन्वयो ज्ञेयः। कारणत्वञ्च "व्यापारवदसाधारणकारणत्वम्।" तत्र को व्यापारः इति चेत्, सन्निकर्ष एव, स च षड्विधः। तद्यथा–

**विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।**
**द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः।।**
**द्रव्येषु समवेतानां तथा तत्समवायतः।**
**तत्रापि समवेतानां शब्दस्य समवायतः।।**

**तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।**
**विशेषणतया तद्वदभावानां ग्रहो भवेत्।।**

**यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते।**
**प्रत्यक्षं समवायस्य विशेषणतया भवेत्।।**[3]

तथा च द्रव्यप्रत्यक्षम् इन्द्रियसंयोगजन्यम्। द्रव्यसमवेतगुणादि-प्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम्। द्रव्यसमवेतसमवेतगुणत्वादिप्रत्यक्ष-मिन्द्रियसंयुक्तसमवेतसमवायजन्यमिति बोध्यम्। अत्रेयं शंका समुदेति यत्-द्रव्यप्रत्यक्षे यदि इन्द्रियसंयोगो हेतुस्तदा त्वक्प्रभासंयोगाच्चाक्षुषं स्यात्! इति, अतः ग्रन्थकारेण विशिष्यैव कार्यकारणभावो निरूपितः। तद्यथा-"वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम्, द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं, द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्त-समवेतसमवायः कारणमिति। एवमन्यत्रापि विशिष्यैव कार्यकारणभावो बोध्यः।

अत्रेदं बोध्यं यत्-पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ "पृथिवीत्वं चक्षुषा कथन्न गृह्यते? तत्र परम्पराया स्वाश्रयसमवेतसमवेतत्व-समबन्धेन उद्भूतरूपसम्बन्धो विद्यते। तथाहि-नीले नीलत्वजातिरेकैव घटनीले परमाणुनीले च, तथा च महत्त्वसम्बन्धो घटनीलमादाय, एवमुद्भूतरूप-सम्बन्धस्तूभयमादाय वर्तते। एवमेव पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो बोध्यः। इत्येवं सामग्र्यां सत्यां कार्येणावश्यं भाव्यम्, न च भवति। अतः "उद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसयुक्तसमवायस्य द्रव्यसमवेतचाक्षु-

षप्रत्यक्षे'', तादृशचक्षुःसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे'' कारणत्वं वाच्यम्। इत्त्थञ्च परमाणुनीले न नीलत्वादिचाक्षुषं, तत्र चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात्। एवमेव वायौ न सत्तादिचाक्षुषं तत्र सन्निकर्षस्य रूपावच्छिन्नत्वाभावादिति ध्येयम्।

एवमेव यत्र घटस्य पृष्ठावच्छेदेन आलोकसंयोगः चक्षुःसंयोगस्तु अग्रावच्छेदेन तत्र घटप्रत्यक्षाभावात् ''आलोकसंयोगावच्छिन्नत्वं'' चक्षुःसंयोगे विशेषणं देयम्। इत्त्थञ्च उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगादीनां तत्र-तत्र सन्निकर्षत्वं बोध्यम्। एवमन्यत्रापि। आत्ममानसप्रत्यक्षे मनःसंयोगः, आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः सन्निकर्षो बोध्यः। अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसम्बद्धविशेषणता सन्निकर्षत्वेन ग्राह्या। तथाहि'' घटाभाववद्भूतलम्''-इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्। विशेषणतेत्युपलक्षणं ''भूतले घटाभावः'' इत्यत्र प्रतीतिवैलक्षण्येन प्रथमान्तार्थस्य मुख्यविशेष्यत्वात् चक्षुःसंयुक्तविशेष्यतापि सन्निकर्षत्वेन ग्राह्या। अत एव ''अभावप्रत्यक्षे विशेषणविशेष्यभावसन्निकर्षः इत्यपि व्याख्यानमस्ति। एवमेव'' इह तन्तुषु पटसमवायः इति प्रतीत्या चक्षुःसंयुक्तविशेषणतादिना समवायस्य प्रत्यक्षता बोध्या, वैशेषिके तु समवायो न प्रत्यक्षः किन्त्वनुमेय एव। सा च विशेषणता नानाविधा, तत्तत्सन्निकर्षग्राह्यतत्तत्पदार्थाधिकरणकाभावप्रत्यक्षे तत्तत्सन्निकर्षसंश्लिष्टविशेषणतायाः सन्निकर्षत्वं बोध्यम्। तथा च द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्तविशेषणता, गुणाधिकारणकाभावप्रत्यक्षे संयुक्तसमवेतविशेषणता, गुणत्वाद्यधिकारणकाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता, अभावाधिकरणकाभावप्रत्यक्षे तादृशविशेषणविशेषणता सन्निकर्षत्वेन ग्राह्या।

अत्र अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्। तथाहि भूतलादौ घटादिग्रहे जाते घटाभावादिग्रहो न जायते, तेन अभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र योग्यतापि अपेक्षिता, साच-''प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा, तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या

प्रसञ्जित उपलम्भरूपप्रतियोगी यस्य स उपलम्भाभावः अभावप्रत्यक्षे हेतुः। इत्त्थञ्च यत्र आलोकसंयोगादिकमस्ति, तत्र "यदि अत्र घटः स्यात् तर्हि उपलभ्येत, नोपलभ्यते अतो नास्ति" इत्यापादनपूर्वकं घटाभावादेः प्रत्यक्षं भवति। अन्धकारे तु नापादयितुं शक्यते, तेन न तत्राभावचाक्षुष-प्रत्यक्षं, स्पार्शनन्तु भवति, तथापादयितुं शक्यत्वात्। अत्रेदं बोध्यं यत्-संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता अपेक्षिता, अन्योन्याभावप्रत्यक्षे तु अधिकरणयोग्यता, अतः स्तम्भादौ पिशाचादिभेदो चक्षुषा गृह्यत एव। इत्थं लोकानुभवसिद्धलौकिकसन्निकर्षैरिदं लौकिकप्रत्यक्षस्वरूपं बोध्यम्।

अलौकिकसन्निकर्षैरलौकिकप्रत्यक्षमपि जायते। अलौकिकसन्निकर्षश्च त्रिधा भवति। तद्यथा-

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥**

**आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते।**
**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते।**
**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।**
**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।**
**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः॥**

अयं भावः-समानानां भावः सामान्यं, तदेव लक्षणं विषयः य स सामान्यलक्षणः सामान्यविषयकं ज्ञानं, तदेव प्रत्यासत्तित्वेन गृह्यते। तथाहि-"अयं घट" इति एकघटप्रत्यक्षानन्तरम् इन्द्रियसम्बद्धविशेष्यकज्ञान-प्रकारीभूतघटत्वसामान्यस्य ज्ञाने जाते, तस्यैव सन्निकर्षत्वं परिगृह्य उत्तरकालं "घटाः" इत्याकारकं घटत्वाश्रयसकलघटविषयकम् अलौकिकप्रत्यक्षात्मकं ज्ञानं जायते। अत्र न यथाकथञ्चित् सामान्यज्ञानस्य प्रत्यासत्तित्वमपितु एकत्र तदिन्द्रियजतद्धर्मबोधसामग्री अपेक्षिता भवति। सा च चक्षुः-संयोगालोकसंयोगादिकं तेन अन्धकारादौ न तादृशप्रत्यक्षम्।

द्वितीयसन्निकर्षः ज्ञानलक्षणः। ज्ञानमेव लक्षणं स्वरूपं यस्य सः ज्ञानलक्षणः अर्थात् यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः। यथा यत्र प्रथमदिने

सौरभयुक्तस्य चन्दनखण्डनस्य चाक्षुषप्रत्यक्षं तद्गतसौरभस्य च घ्राणजप्रत्यक्षं जातं, तत्रापरदिने दूरतोऽपि चन्दनखण्डं दृष्ट्वा "सुरभिचन्दनम्" इति सौरभ-विषयकमलौकिकप्रत्यक्षं जायते। तत्र सौरभविषयकं पूर्वगृहीतं ज्ञानमेव सन्निकर्षतया ग्राह्यम्। अत एवोक्तम्-"विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षण"- इति।

तृतीयः सन्तिकर्षः योगजः, योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृति-पुराणादिप्रतिपादितः। स च युक्तयुञ्जानरूपयोगिद्वैविध्याद् द्विविधः, युक्तः योगारूढः, युञ्जानः योगारुरुक्षुः। तत्र युक्तस्य तावद्योगजधर्मसाहाय्येन ध्यानाद्यभावेपि आकाशपरमााण्वादिसकलपदार्थविषयकज्ञानं सर्वदैव भवितु-मर्हति। यथोक्तम्-"ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवा-विशन्ति। (मु. 3 ख. 2 मं. 5) इति। युञ्जानस्य साधकस्य चित्तैकाग्र्यपूर्वकतद्विषयकध्यानविशेषोऽपि सहकारिकारणतया अपेक्षितो भवति।

इत्थं न्यायसिद्धान्तमुक्तावलीसम्मतं प्रत्यक्षप्रमाणस्वरूपं विज्ञेयमिति शम्।

# न्यायशास्त्रे प्रत्यक्षप्रमाणसौन्दर्यम्

डॉ. वेङ्कटेशशर्मा

यमाश्रित्य समस्तप्राणीनां व्यवहारो जायते तादृशव्यवहारस्यासाधारणं कारणं ज्ञानम्। तदेव ज्ञानं बुद्धिपदवाच्यम्। मानवो यत्किमपि कार्यं करोति तत्र ज्ञानमपेक्षितम्। मन्दमतयो जनाः किमपि ज्ञात्वैव तत्तत्कार्ये प्रवर्तन्ते। यतो हीष्टसाधनताज्ञानं प्रवृत्तिसामान्ये एवमनिष्टसाधनताज्ञानं निवृत्तौ कारणं भवति। अतः समस्तप्रवृत्तिनिवृत्तौ ज्ञानस्यैव कारणता सर्वजनानुभवसिद्धा, अतः ज्ञानस्य समस्तव्यवहाराऽसाधारणकारणत्वं सर्वमतसिद्धम्।[1] इयञ्च बुद्धिरात्मनो विशेषगुणरूपा गुणान्तरवर्तिनी। केचन-बुद्ध्यते अनया इति बुद्धिरिति व्युत्पत्या अन्तःकरणस्यैव बुद्धिपदवाच्यत्वं प्रतिपादयन्ति, परन्तु मतमिदं न हि समीचीनं विद्यते। अन्तःकरणस्य द्रव्यरूपतया गुणात्मकबुद्धि-स्वरूपता भवितुं नार्हति। तार्किकमते प्रथमं वस्तुविषयकं ज्ञानं भवति तदनन्तरं तद्विषयिणीच्छा जायते, तदनन्तरमात्मनि प्रयत्नो जायते। तेन च प्रयत्नेन शरीरे चेष्टा जायतेऽतः इच्छा प्रयत्नो ज्ञानञ्च आत्मन एव गुणाः। एतेषां ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यात्। ज्ञानवत एव इच्छा जायते इच्छावत एव प्रयत्नो जायते। इत्थं प्रकारेण ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं सिद्ध्यति। अतो ज्ञानमात्मगुण एव। केचन आत्मनो गुणत्वं नाभ्युपगच्छन्ति किन्तु अन्तःकरणधर्म एव ज्ञानम्, किन्तु एवमपि प्रतिपादयितुं न शक्यते। यतः घटमहं जानामीत्याकारिका प्रतीतिर्भवति, एवं घटमहं न जाना-मीत्याकारिकापि प्रतीतिः सर्वेषां जनानां जायते। अतोऽहंपदबोध्ये आत्मन्येव ज्ञानं तिष्ठति न तु अन्तःकरणे, यतो हि मदीयमन्तकरणमित्याकारिका प्रतीतिः सर्वजनानुभवसिद्धा। अतोऽन्तःकरणधर्मः न ज्ञानमपितु आत्मन

1. सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्-तर्कसंग्रहः।

एव।[2] किञ्च एकस्मिन्काले नानाज्ञानानामनुत्पत्या मनसः अणुत्वमभ्युपेयते[3] एवञ्च अन्तःकरणे मनसि यदि ज्ञानं जायेत तदा मनोवर्ति ज्ञानसुखादेः कथमपि प्रत्यक्षं न स्यात्। अतः न हि मनोगुणः ज्ञानादिकं सम्भवति। यतो हि तेषामेव गुणानां प्रत्यक्षं भवति यदाधारीभूतं द्रव्यं महत्वपरिमाणवत् स्यात्। गुणप्रत्यक्षे गुणाश्रयप्रत्यक्षस्य कारणत्वात्। अत एव परमाणुरूपादीनां प्रत्यक्षं न भवति। किन्तु 'अहं जाने' इत्याकारिका ज्ञानप्रत्यक्षविषयिणी प्रतीतिः सर्वजनानुभवसिद्धा। अतः ज्ञानाश्रयः कश्चन महत्परिमाणवानभ्युपेयः। मनसि च महत्वाभावात् तत्र ज्ञानात्मकगुणस्वीकारे तद्वृत्तेर्ज्ञानस्य कथमपि प्रत्यक्षं न स्यात्। अतः अन्तःकरणस्य मनसो न ज्ञानादिकं गुणोऽपितु महत्परिमाणवत आत्मन एव विशेषगुणः ज्ञानादिकम्। एतच्च ज्ञानं क्षणिकं भवति। क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्।[4] ज्ञानं प्रथमक्षणे उत्पद्यते तृतीयक्षणे नश्यति। अतो द्विक्षणावस्थायित्वं सिद्ध्यति। ज्ञानस्य विनाशः स्वोत्तरवर्तिविशेषगुणेन जायते। अर्थात् एकज्ञानानन्तरं यदपरज्ञानमुत्पद्यते तेनैव परवर्तिज्ञानेन पूर्ववर्तिज्ञानस्य विनाशो भवति। तच्च ज्ञानमनुभवस्मरणभेदेन द्विविधम्। तत्र संस्कारमात्रजन्यत्वविशिष्टज्ञानत्वं स्मृतित्वम्[5] तथैव स्मृतिभिन्नत्वविशिष्टज्ञानत्वं अनुभवत्वम्।[6] अनुभवोऽपि यथार्थायथार्थभेदेन द्विविधः। तत्र यथार्थानुभव एव प्रमा शब्देन व्यवह्रियते। तथा अयथार्थानुभव एव भ्रमशब्दाभिलप्यो भवति। तत्रापि तद्वन्निष्ठविशेष्यतानिरूपित-तन्निष्ठप्रकारताशाल्यनुभवत्वं यथार्थानुभवस्य लक्षणं भवति।[7] स च यथार्थानुभवः प्रत्यक्षानुमित्युपमितिशाब्दभेदात् चतुर्विधः। तत्रापि प्रमीयते अनेन इति व्युत्पत्या प्रमाकरणं प्रमाणमिति लभ्यते। प्रमाणमपि प्रत्यक्षानुमानोपमानशब्दभेदात् चतुर्विधम्।[8] तत्र प्रमाचतुष्टयमध्ये प्रत्यक्षात्मिका

---

2. ज्ञानाधिकरणमात्मा-तर्कसंग्रहः।
3. अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते - कारिकावली- 85
4. तर्कसंग्रहसर्वस्वम्।
5. तर्कसंग्रहः।
6. तदेव।
7. न्यायबोधिनी।
8. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि-न्यायसूत्रम् - 1.1.3

प्रमा इन्द्रियार्थसन्निकर्षजन्या[9] भवति। यद्यपीश्वरीयप्रत्यक्षप्रमाया नित्यत्वेन तत्र इन्द्रियार्थसन्निकर्षजन्यत्वविशिष्टज्ञानत्वात्मकप्रत्यक्षप्रमालक्षणमव्याप्तं तथापि महर्षिणा गौतमेन "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति[10] सूत्रेण जन्यप्रत्यक्षमेव लक्षितं भवति। तदनुसारमेव उत्तरवर्तिना जन्यप्रत्यक्षलक्षणमेव विहितमस्ति। तथा च इन्द्रियार्थसन्निकर्ष-जन्यत्वविशिष्टज्ञानत्वं प्रत्यक्षत्वमिति प्रत्यक्षलक्षणं निष्पद्यते। एतच्च लक्षणं जन्यप्रत्यक्षस्यैव। ईश्वरप्रत्यक्षसाधारणं लक्षणन्तु ज्ञानाकरणकत्वे सति ज्ञानत्वम्। अत्र ज्ञानं न विद्यते करणं यत्र इति व्युत्पत्या लक्षणमिदमिन्द्रियार्थसन्निकर्षजन्ये एवमीश्वरप्रत्यक्षे च समन्वितं भवति। यतो हि अनुमितौ व्याप्तिज्ञानं करणम्,[11] उपमितौ च सादृश्यज्ञानं करणम् शाब्दबोधे च पदज्ञानं करणम्, स्मृतौ चानुभवकरणम्। अत अनुमित्युपमितिशाब्दस्मृतिषु ज्ञानकरणकत्वमेव विद्यते, न तु ज्ञानाकरणकत्वम्। अतो न तेषु अस्य प्रत्यक्षलक्षणस्यातिव्याप्तिः ईश्वरप्रत्यक्षस्य केनापि करणेन अजन्यत्वाद् भवति तत्रापि ज्ञानाकरण-कत्वविशिष्टज्ञानत्वस्य सम्भवः। इदञ्च लक्षणं जीवेश्वरप्रत्यक्षसाधारणम्। एतच्चप्रत्यक्षज्ञानं निर्विकल्पकसविकल्पकभेदेन द्विविधम्। यथा घटचक्षुः संयोगात् प्रथमं घटस्य निर्विकल्पकं ज्ञानं जायते यत्किञ्चिदिदम् इत्याकारकं, तदनन्तरं 'अयं घटः' इति घटत्वप्रकारकघटविशेष्यकं ज्ञानं जायते तदेव सविकल्पकमिति कथ्यते। तत्रेयमाशंका जायते निर्विकल्पकं ज्ञानं हि अतीन्द्रियम्, तद्सद्भावे किं प्रमाणमिति। तत्र समाधेयं यत् विशिष्टबुद्धौ यावत्कालपर्यन्तं विशेषणस्य दण्डस्य ज्ञानं न स्यात् तावत्कालपर्यन्तं 'दण्डी पुरुषः' इत्याकारकविशिष्टज्ञानं कर्तुं केनाऽपि न शक्यते। तथैव चक्षुः संयोगाद्यनन्तरम् 'अयं घटः' इत्याकारकं सविकल्पकप्रत्यक्षं तावत्कालपर्यन्तं भवितुं नार्हति, यावत्कालपर्यन्तं अयं घटः इत्याकारकप्रत्यक्षविशेषणीभूतस्य घटत्वस्य प्रत्यक्षं न स्यात्। 'अयं घटः' इत्याकारकबुद्धौ घटत्वस्य विशेषणत्वात्, अतः घटत्वात्मक- विशेषणपरिज्ञानार्थं निर्विकल्पकज्ञानमवश्यं स्वीकार्यम्। निर्विकल्पकस्वीकारे च प्रथमं

9. इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्।
10. न्यायसूत्रम् - 1.1.4।
11. व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेद् अनुमायाम् - कारिकावली-66।

घटादिविषयेण साकं चक्षुरादीन्द्रियस्य संयोगात्मकः सन्निकर्षो जायते। तदनन्तरं यत्किञ्चिदिदमिति निर्विकल्पकं ज्ञानं जायते। तस्मात् ज्ञानात् सविकल्पकं विशिष्टज्ञानं 'घटः' इत्याकारकं जायते तदेव सविकल्पकम्। अत्र पुनः प्रत्यक्षं तावत् घ्राणज-रासन चाक्षुष-त्वाच-श्रावण-मानसभेदेन षड्विधम्। तत्रेन्द्रियाणां षड्विधतया तज्जन्यस्य प्रत्यक्षस्यापि षड्विधत्वमभ्युपेयम्। इदं सुगन्धितम् इत्याकारकं ज्ञानं घ्राणेन जायते। इदं मधुरमित्यादिप्रत्यक्षं रसनया जायते। इत्थं प्रकारेण तत्तदिन्द्रियैः जायमानस्य प्रत्यक्षस्य षड्विधत्वं जायते। इदं नीलं वस्त्रमित्याकारकं ज्ञानं चाक्षुषप्रत्यक्षम्। तत्र चक्षुः रश्मिरूपेण यदा नीलवस्त्रेण सह संयुक्तो भवति तदा तादृशसंयोगसन्निकर्षात् नीलं वस्त्रमित्याकारकं चाक्षुषं प्रत्यक्षं जायते। एतद्विषये केचनैवं वर्णयन्ति-चक्षुर्हि विषयसन्निधौ न गच्छति। किन्तु चक्षुषि विषयस्य प्रतिफलनात् प्रत्यक्षं जायते इति किन्तु मतमिदं न हि समीचीनम्, काचकामलादिदूषिते नयने शुक्लमपि वस्तु पीतं प्रतिभाति। तत्रैतत् प्रतिपादयितुं न शक्यते यतः बिम्बभूतस्य वस्तुनः शुक्लत्वात् तत्प्रतिफलनमपि शुक्लमेव स्यात्। यदि पीतिमाक्रान्ते चक्षुर्गोलकरूपाधिकरणे वस्तुनः प्रतिफलनं भवति अतस्तत्र पीतरूपमेव गृह्यते। इदमपि न समीचीनम्। स्फटिकसन्निधौ जपापुष्पे स्थापिते प्रतिबिम्बस्य आधारभूतं स्फटिकमेव जपापुष्पात्मकप्रतिबिम्बस्य रूपेण प्रभावितं भवति। तत्र स्फटिकमेव रक्तत्वेन भासते न तु जपापुष्पं शुक्लत्वेन भासते। तथैव पीतिमाक्लान्तः चक्षुर्गोलक एव श्वेतत्वेन भासेत। न तु शङ्खादयः पीतत्वेन भासेरन्। अतः चक्षुर्गोलकात् निर्गत्य विषयसमीपं गत्वा चक्षुरेव विषयेन सम्बध्यते न तु विषयस्य प्रतिफलनम् चक्षुषि भवति। एवं चाक्षुषप्रत्यक्षं द्रव्यगुणकर्मादीनां भवति। एवमेव त्वाचप्रत्यक्षमपि अतीन्द्रियभिन्नद्रव्यगुणादीनां भवति। यथा चक्षुः गोलकात् निःसृत्य विषयसमीपं गच्छति तथा त्वगिन्द्रियं शरीराद्बहिः विषयसमीपं न गच्छति। अपितु त्वक्सन्निधौ विषये समागते सति त्वचा त्वाचप्रत्यक्षं जायते। श्रवणप्रत्यक्षं श्रोत्रेन्द्रियेण जायते। एतत् श्रावण-प्रत्यक्षं शब्दस्य शब्दत्वस्य च प्रत्यक्षं भवति। एवं मनोरूपेन्द्रियेण आत्मन एकमात्मगुणानां प्रत्यक्षं भवति। यथाऽहं सुखी, दुःखीत्याति प्रतीत्या सुखविशिष्टस्यात्मन एवं सुखादेरपि प्रत्यक्षं भवति। इत्थञ्च इन्द्रियाणां

षड्विधत्वात् प्रत्यक्षमपि घ्राणजरासनचाक्षुषत्वाचश्रौत्रमानसभेदात् षड्विधं भवति। एतत्सर्वं प्रत्यक्षं लौकिकसन्निकर्षजन्यमलौकिकसन्निकर्षजन्यञ्च भवति। तत्र लौकिकसन्निकर्षः संयोग-संयुक्तसमवायः संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणविशेष्यभावभेदेन षड्विधः। एवमलौकिक-प्रत्यक्षमपि सामान्यलक्षणज्ञानलक्षणयोगजभेदेन त्रिविधं भवति। तच्च प्रत्यक्षं धर्मप्रत्यक्षमूलकधर्मविशिष्टधर्मिसमुदायप्रत्यक्षं, विशेषणस्मरणमूलक-विशिष्टप्रत्यक्षं, योगजसन्निकर्षजन्यञ्च।

तत्र प्रथमममलौकिकप्रत्यक्षं सामान्यलक्षणजन्यं यथा एकस्य घटस्य चाक्षुषप्रत्यक्षानन्तरं 'घटः' इत्याकारकं यत् प्रत्यक्षं तत्र प्रकारीभूतं यत् घटत्वरूपं सामान्यं तेन सामान्येन यावतां भूतभाविवर्तमानघटानां घटाः इत्याकारकमलौकिकप्रत्यक्षं सकलघटविषयकं सामान्यलक्षणाजन्यं भवति। ननु घटाः इत्याकारकोऽलौकिको बोधः समवायेनात्मनि जायते घटत्वरूप-सामान्यसन्निकर्षस्तु घटे विद्यतेऽतस्तयोर्व्यधिकरणयोर्बोधसन्निकर्षयोः कथं कार्यकारणभाव इति चेदित्थम्- अलौकिकमुख्यविशेष्यतासम्बन्धेन घटत्वावच्छिन्नचाक्षुषं प्रति समवायसम्बन्धेन चक्षुः सम्बद्धघटविशेष्यक-ज्ञानप्रकारतापन्नघटत्वं कारणमिति। तत्र हि अलौकिकमुख्यविशेष्यतासम्बन्धेन 'घटाः' इत्याकारकं घटत्वावच्छिन्नचाक्षुषप्रत्यक्षं घटे तिष्ठति तत्रैव चक्षुः सम्बद्धघटविशेष्यक ज्ञानप्रकारतापन्नघटत्वं समवायसम्बन्धेन तिष्ठतीति विषयनिष्ठप्रत्यासत्त्या तयोः कार्यकारणभावः सम्भवति। सामान्यविषयकज्ञानस्य प्रत्यासत्तित्वे कार्यकारणभावश्चेत्थम्—समवायसम्बन्धेन इन्द्रियसम्बद्ध-घटविशेष्यकज्ञानप्रकारतापन्नघटत्वविषयकं ज्ञानं कारणम्। तथाहि 'घटाः' इत्याकारकमलौकिकमुख्यविशेष्यकघटत्वावच्छिन्नचाक्षुषप्रत्यक्षं समवाय-सम्बन्धेन आत्मनि तिष्ठति तत्रैवात्मनि चक्षुः सम्बद्धघटविशेष्यक-ज्ञानप्रकारतापन्नघटत्वविषयकं ज्ञानं समवायसम्बन्धेन तिष्ठतीति भवति कार्यकारणभावः।

द्वितीयमलौकिकप्रत्यक्षं तावत् ज्ञानलक्षणाजन्यम्। यथा दूरतः कञ्चनचन्दनकाष्ठं वहन्तं दृष्ट्वा दूरताप्रयुक्तघ्राणेन्द्रियसम्बन्धाभावे चक्षुषा तत्र 'चन्दनमिदं सुरभि इत्याकारकं यत् प्रत्यक्षं जायते तत्र सुगन्धस्मरणमेव

सुगन्धविशिष्टचन्दनप्रत्यक्षे कारणं भवति। अत्र ज्ञानलक्षणासन्निकर्षस्य ज्ञानरूपत्वेन फलीभूतस्यालौकिकप्रत्यक्षस्यापि ज्ञानरूपत्वेन आत्मनिष्ठ-प्रत्यासत्याऽत्र कार्यकारणभावो ज्ञेयः।

तृतीयमलौकिकप्रत्यक्षं योगजसन्निकर्षेण योगिनां जायते। योगिनां सर्वदा अबाधितरूपेण भूतभविष्यवर्तमानानां सर्वेषां विषयाणां प्रत्यक्षं भवति।

# न्यायनये प्रत्यक्षप्रमाणविमर्शः

डॉ. अरविन्दकुमारः

न्यायशास्त्रे चत्वारि प्रमाणानि स्वीकृतानि। यथोक्तं न्यायसूत्रे– "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (न्यायसूत्र 2/2/3 तत्र 'साक्षात्कारि प्रमाणं प्रत्यक्षमित्यभिधीयते। तद्विग्रहस्तु, अक्षमक्षं प्रति इति प्रत्यक्षम्। अक्षशब्दोऽत्र ज्ञानेन्द्रियपरः। अतः तत्तज्ज्ञानेन्द्रियं प्रति नित्यं तत्तत् प्रत्यक्षं भवति। ततश्च चाक्षुषत्वादिभेदेन अनेकविधम्। साक्षात्कारश्च इन्द्रियार्थसंयोगः, तत एव प्रमोत्पद्यते। ततश्च पदार्थः प्रमीयते इति। प्रत्यक्षमपि द्विविधं भवति। एकं सविकल्पकम् अपरं निर्विकल्पकमिति। तस्याः साक्षात्कारिण्याः प्रमायाः करणं त्रिविधं भवति कदाचिदिन्द्रियम्, कदादिन्द्रियार्थसम्बन्धः, कदाचिच्च ज्ञानम्। अत्रोक्तभेदत्रये यदा निर्विकल्पकं ज्ञानं फलं तदेन्द्रिमेव केवलं करणं भवति। ज्ञानस्यायमस्ति नियमः। प्रत्यक्षेच्छया प्रथममात्मा मनसा युज्यते, मनस्तदिन्द्रियेण, इन्द्रियं च पदार्थेन, ततश्च प्रथमं निर्विकल्पकं ज्ञानं जन्यते। तच्चेदं किञ्चिदित्याकारकं नामजात्यादियोजनारहितं भवति। तस्य निर्विकल्पकस्य ज्ञानस्येन्द्रियमेव करणं भवति।

पूर्वमुक्तमादाविन्द्रियेण पदार्थग्रहे निर्विकल्पकम् अर्थात् विशेषणविशेषाद्यनवगाहि, इदं किञ्चिद् इत्याकारकमेव ज्ञानं जायते। तदा केवलमिन्द्रियमेव करणं भवति, इत्यपि प्रागुक्तम्। अनन्तरं च यदा विशिष्यं ज्ञातुमुपक्रमते तदा इन्द्रियस्यार्थेन विशेषसम्बन्धे सति विशेषण-विशेष्यादिरूपं यज्ज्ञानमुत्पद्यते 'अयं घटोऽयं पटः' इत्याकारकम्, तदेन्द्रियार्थसन्निकर्षः करणं भवति इन्द्रियेणार्थसम्बन्धे पूर्वमुक्तं निर्विकल्पज्ञानमिन्द्रियव्यापाररूपतामावहति, तच्च सविकल्पज्ञानस्य अवान्तरव्यापाररूपम् अर्थादाभ्यन्तरव्यापाररूपमस्ति, सविकल्पकज्ञानं तस्य फलं भवति।

इन्द्रियमिन्द्रियार्थसन्निकर्षं च करणमुक्त्वा ज्ञानस्यार्थाद् निर्विकल्पकज्ञानस्य करणत्वमुच्यते। तथा हि इन्द्रियार्थसन्निकर्षजन्यपदार्थबोधे तात्त्विकविचार उत्पद्यते। अर्थात् इन्द्रियगोचरे पदार्थे किं वास्तविकं किमवास्तविकमिति। यद्वास्तविकं तदुपेक्षणीयम्, त्याज्यं वेत्यादिरूपेण पूर्वज्ञातपदार्थेन हानोपादानादिबुद्धयो जायन्ते, तदा ज्ञानमेव करणं भवति। तत्र च सविकल्पकज्ञानमवान्तरव्यापारो भवति। सविकल्पकज्ञानस्य च फलं तदा हानादिबुद्धय एव भवन्ति।

अवान्तरव्यापारस्य लक्षणम्–"तज्जन्यः तज्जन्यजनकोवान्तरव्यापारः" इति। यथा कुठारदारुसंयोग आदौ कुठारजन्यो भवति। अर्थात् कुठारः प्रथम दारुजिस्वं संयुक्ति। ततश्च छिदा जायते अर्थात् दारुभेदनं भवति। यच्च कुठारदारुसंयोगस्य फलम्। तस्मिन् फले प्राथमिकः कुठारदारुसंयोगाद्यिवान्तर व्यापारो भवति। स चावान्तरव्यापारतज्जन्यः (कुठारजन्यः) तेन जन्या या छिदा तस्याः जनको भवति। अस्मिन्विषये मतभेदोप्याचार्याणां दृश्यते, यथा तर्कभाषाया अस्मिन् वाक्ये लक्ष्यते–"सविकल्पकादीनामपीन्द्रियमेव करणम्।" अथ च "यावन्ति त्वान्तरालिकानि सन्निकर्षादीनि तानि सर्वाणि, अवान्तरव्यापार इति," अर्थात् वस्तुसाक्षात्काराय प्रसृतमिन्द्रियं यावत्पूर्ववस्तु साक्षात्कारं यद्यदनुभवति यद्यत्करोति, यद्यद्ज्ञानमुपपादयति तत्तत्सर्वमेवावान्तर व्यापारपदेन व्यपदेष्टुं शक्यते इति। अत एतेन सिद्धयति यत् प्रत्यक्षविषये द्विविधं मतं प्रचलितमासीत्। आद्यं सारं प्रत्यक्षं त्रिविधकारणान्वितम्। द्वितीयम् एकविद्यमेव। संक्षेपेण त्रिविधकरणव्यापारादीनां वक्ष्यमाणं स्वरूपं करणम् अवान्तव्यापारः फलम्

(क) इन्द्रियम् इन्द्रियार्थसन्निकर्षः निर्विकल्पकप्रमा

(ख) इन्द्रियार्थसन्निकर्षः निर्विकल्पकज्ञानम् सविकल्पकप्रमा

(ग) निर्विकल्पकज्ञानम् सविकल्पकज्ञानम् हानोपादानोपेक्षाबुद्धिः

# साङ्ख्ययोगदिशा प्रत्यक्षप्रमाणविचारः

आचार्यः सुधाकरदीक्षितः

साङ्ख्यदर्शने बुद्धिः एव महत्तत्त्वमन्तःकरणं सत्त्वं चित्तमादिशब्दैः अभिधीयते। इयं बुद्धिः तैजसद्रव्यसदृशी एव इन्द्रियप्रणालिकया बहिः विद्यमानविषयं यावत् प्रसरति। अत एव साङ्ख्यमतानुसारं बुद्धिः इन्द्रियप्रणालिकया बाह्यविषयैः सह सम्बद्धा सती यथायथं विषयाकारेणाकारिता भवति। बुद्धेरयं विषयीकारपरिणाम एव बुद्धिवृत्तिशब्देनोच्यते। इयमेव विषयाकाराबुद्धिवृत्तिः ज्ञानम्। **परिणामस्पष्टाकाराः परिणमद्** वस्तु एव भवति अत एवेदमर्थाकारपरिणामात्मकं ज्ञानम् परिणममानं बुद्धिमेवाश्रित्य तिष्ठति तेन ज्ञानं न आत्मगुणः आत्मधर्मो वा किन्तु बुद्धिधर्म एव साङ्ख्ययोगमते। अयं बुद्धेः अर्थाकारपरिणामः यदा परोक्षप्रमाणस्य अनुमानस्य शब्दस्य वा साहाय्येन जायते किं वा शरीराद् बहिः गन्तुं शक्ता घ्राण रसनत्वगादीन्द्रिणां सहायेन प्रादुर्भवति तदा शरीरान्तर्गतमेव तिष्ठति। यदि हि अयम् अर्थाकारो बुद्धेः परिणामः चक्षुः साहाय्येनोत्पद्यते तदा शरीराद् बहिः विद्यमानवस्तुदेशे चक्षुः किरणैः सह बुद्धेः अपि गमनात् बहिः वस्तुदेशे एव बुद्धेः विषयीकारपरिणामो जायते।

विषये साकारे सति विषयसमानाकार एव परिणामो जायते। यथा विषयस्य त्रिकोणतायां बुद्धेः परिणामोऽपि त्रिकोणो भवति। यदि हि विषयो निराकारो भवति यथा गुणक्रियादि तदा तेन सम्बद्धा बुद्धिः यथायथं परिणाममासाद्य ज्ञानमित्याख्यां भजते तथापि बुद्धेः विषयाकारपरिणाम एव ज्ञानमित्येवोच्यते परं तत्राकारशब्दः आकृतिपरस्तु नैव सम्भवति अतः विषयेण साकं बुद्धेः सम्बन्धविशेष एव तथा आकारशब्दस्यार्थ इत्येव मन्तव्यं भवति। अत्रेदमवधेयम् बुद्धे विषयाकारपरिणाममात्रेण विषयो नावगम्यते किन्तु तदर्थं प्रकाशात्मकस्य चैतन्यस्य संसर्गः अपेक्ष्यते। अत एव मन्यते

साङ्ख्ययोगयोः विषयाकारपरिणतायां स्वभावतो जडायां बुद्धौ चैतन्यघनस्य प्रकाशपुञ्जात्मकस्य प्रतिबिम्बः फलति तेन च स्वतः प्रकाशमाना इव बुद्धिः यस्य विषयस्याकारेणाकारिता विद्यते तं विषयं प्रकाशयति। अत एव कस्यापि विषयस्यावगतये बुद्धेः विषयाकारपरिणामः विषयाकारपरिणतायां च बुद्धौ चैतन्यात्मकस्य प्रकाशपुञ्जस्य प्रतिबिम्बश्चापेक्ष्यते। अत्र यदि बुद्धेः विषयाकारपरिणामः प्रमा तर्हि परिणामस्यास्योत्पादकम् इन्द्रियं लिङ्गं शब्दो वा प्रमाणम्। यदि विषयाकारबुद्धौ पुरुषस्य प्रतिबिम्बनं प्रमा तदा बुद्धेः विषयाकारपरिणामः प्रमाणम्।

बुद्धिगतः अर्थाकारः परिणामः प्रमाणम्, तेन परिणामेन सह पुरुषस्य स्वप्रतिबिम्बमूलकः सम्बन्धश्च प्रमेति पक्षःप्रबलो बहुसम्मतश्च। योगदर्शनस्य व्यासभाष्ये (1/7) अयमेव पक्षोऽभ्युपगतः–तथाहि इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनः अर्थस्य विशेषावधारणप्रधानावृत्तिः प्रत्यक्षं प्रमाणम्। फलम् विशिष्टः पौरुषेयश्चित्तवृत्तिनिरोधः।

अत्रेदं चिन्त्यम्–पुरुषे बुद्धितत्त्वं प्रतिबिम्बते बुद्धितत्त्वे पुरुषो वेति। वाचस्पतिमिश्रस्तु बुद्धितत्त्वे पुरुषः प्रतिबिम्बत इति मतमेव स्वीकरोति। अस्मिन् वाचस्पतिमिश्रमते प्रामुख्येन युक्तिरियंदीयते–

बुद्धितत्त्वे एव कर्त्तृत्वं साङ्ख्ययोगयोः स्वीक्रियते अतः तस्मिन्नेव प्रतिबिम्बग्रहणकर्त्तृत्वं युक्तम्। पुरुषस्तु कूटस्थः अकर्त्ता तेन तस्मिन् बुद्धितत्त्व-प्रतिबिम्बग्रहणकर्त्तृत्वस्वीकारो न समीचीन इति।

इदं मिश्रमतं साङ्ख्यतत्त्वकौमुद्यां स्पष्टम्। तथाहि सोऽयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमान् भवति" इति[1]। 1. सा.का. 5

उक्त "तत्प्रतिबिम्बितः"– "तच्छायापत्त्या" इत्यत्र तच्छब्देन बुद्धितत्त्वमेव गृह्यते। 'तच्छायापत्त्या' इत्यस्य तत्सादृश्यापत्त्या इत्यर्थो बोध्यः। तत्तादात्म्यापत्त्या, तदभेदापत्त्या इत्यप्यर्थौ व्याख्याकारैः विधीयते। वार्तिककारो विज्ञानभिक्षुस्तु पुरुषे बुद्धितत्त्वं प्रति बिम्बत इत्येवाभ्युपैति। एतन्मतमेव

समर्थ्यते पुरुषो निर्मलः नितान्तं स्वच्छः बुद्धितत्त्वं तु विकारि तस्मिन् पुरुषवत् नैर्मल्यं स्वच्छतातिशयो वा नास्ति। किञ्च तदेव प्रतिबिम्बितुं समर्थो यस्मिन् केचन धर्माः आकारगुणादयो वा भवन्ति। पुरुषस्तु निर्धमकः तस्य प्रतिबिम्बः कथं सम्भवति इति अस्य स्वमतस्य समर्थने विज्ञानभिक्षुः साङ्ख्यप्रवचनभाष्ये पद्यमिदमुद्धरति–

**कस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।**
**इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥** इति।

एतेनेदमेव स्फुटं प्रतिपद्यते–यथा स्वच्छे सरसि तटद्रुमाः प्रतिबिम्बन्ते तथैव चिदात्मके अति स्वच्छे पुरुषे दर्पणस्थानीये बुद्धितत्त्वस्य विभिन्नविषयिण्यो वृत्तयो प्रतिबिम्बन्ते इति। अत्रायं निष्कर्षः – वृत्तौ अर्थावगाही चित्तिशक्तेः प्रतिबिम्बः चित्तिशक्तौ वृत्तेः प्रतिबिम्बो वा प्रमा। तत्करणं वृत्तिः प्रमाणम्। चक्षुरादिद्वारा व्यक्तिविशेषनिर्धारणीयचित्तवृत्तिः प्रत्यक्षप्रमाणम्। विषयाकारवृत्तौ चितिशक्तेः प्रतिबिम्बः, चितिशक्तौ विषयाकारवृत्तेः प्रतिबिम्बो वा प्रत्यक्षप्रमा। एवं ध्यानसमाधिद्वारा चितिशक्तिविशेषावद्योतिका सम्प्रज्ञाताख्या चित्तवृत्तिः प्रत्यक्षं प्रमाणम्। ज्ञाता चितिशक्तिः प्रमा–फलम् इति।

# धारणाध्यानसमाधीनामेकविषयकत्वम्

डॉ. आर्. कृष्णमूर्त्तिशास्त्री

देहार्धयोगः शिवयोः स श्रेयांसि तनोतु वः।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते।।

पतञ्जलिमुनेरुक्तिः काव्यपूर्वाजयत्यसौ।
पुंप्रकृत्योर्वियोगोऽपि योग इत्युदितो यथा।।

अष्टाङ्गयुक्तस्य योगस्य असम्प्रज्ञातसमाध्याख्यस्य आत्मसाक्षात्कारूपज्ञानसाधनत्वं श्रुतिस्मृतिभ्यामनुमतं वर्णितञ्च—

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्[1]।।

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि।।[2]

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् इत्याद्याः श्रुतयः पठ्यन्ते। गीतारूपा स्मृतिश्च।

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते।।[3]

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छन्ति।।

इत्यादीनि वचनानि च योगस्य विशिष्य समाधेः आवश्यकतां कथयन्ति।

# साङ्ख्ययोगदिशा प्रत्यक्षप्रमाणविचारः

आचार्यः सुधाकरदीक्षितः

साङ्ख्यदर्शने बुद्धिः एव महत्तत्त्वमन्तःकरणं सत्त्वं चित्तमादिशब्दैः अभिधीयते। इयं बुद्धिः तैजसद्रव्यसदृशी एव इन्द्रियप्रणालिकया बहिः विद्यमानविषयं यावत् प्रसरति। अत एव साङ्ख्यमतानुसारं बुद्धिः इन्द्रियप्रणालिकया बाह्यविषयैः सह सम्बद्धा सती यथायथं विषयाकारेणाकारिता भवति। बुद्धेरयं विषयीकारपरिणाम एव बुद्धिवृत्तिशब्देनोच्यते। इयमेव विषयाकाराबुद्धिवृत्तिः ज्ञानम्। **परिणामस्पष्टाकाराः परिणमद्** वस्तु एव भवति अत एवेदमर्थाकारपरिणामात्मकं ज्ञानम् परिणममानं बुद्धिमेवाश्रित्य तिष्ठति तेन ज्ञानं न आत्मगुणः आत्मधर्मो वा किन्तु बुद्धिधर्म एव साङ्ख्ययोगमते। अयं बुद्धेः अर्थाकारपरिणामः यदा परोक्षप्रमाणस्य अनुमानस्य शब्दस्य वा साहाय्येन जायते किं वा शरीराद् बहिः गन्तुं शक्ता घ्राण रसनत्वगादीन्द्रिणां सहायेन प्रादुर्भवति तदा शरीरान्तर्गतमेव तिष्ठति। यदि हि अयम् अर्थाकारो बुद्धेः परिणामः चक्षुः साहाय्येनोत्पद्यते तदा शरीराद् बहिः विद्यमानवस्तुदेशे चक्षुः किरणैः सह बुद्धेः अपि गमनात् बहिः वस्तुदेशे एव बुद्धेः विषयीकारपरिणामो जायते।

विषये साकारे सति विषयसमानाकार एव परिणामो जायते। यथा विषयस्य त्रिकोणतायां बुद्धेः परिणामोऽपि त्रिकोणो भवति। यदि हि विषयो निराकारो भवति यथा गुणक्रियादि तदा तेन सम्बद्धा बुद्धिः यथायथं परिणाममासाद्य ज्ञानमित्याख्यां भजते तथापि बुद्धेः विषयाकारपरिणाम एव ज्ञानमित्येवोच्यते परं तत्राकारशब्दः आकृतिपरस्तु नैव सम्भवति अतः विषयेण साकं बुद्धेः सम्बन्धविशेष एव तथा आकारशब्दस्यार्थ इत्येव मन्तव्यं भवति। अत्रेदमवधेयम् बुद्धे विषयाकारपरिणाममात्रेण विषयो नावगम्यते किन्तु तदर्थं प्रकाशात्मकस्य चैतन्यस्य संसर्गः अपेक्ष्यते। अत एव मन्यते

साङ्ख्ययोगयोः विषयाकारपरिणतायां स्वभावतो जडायां बुद्धौ चैतन्यघनस्य प्रकाशपुञ्जात्मकस्य प्रतिबिम्बः फलति तेन च स्वतः प्रकाशमाना इव बुद्धिः यस्य विषयस्याकारेणाकारिता विद्यते तं विषयं प्रकाशयति। अत एव कस्यापि विषयस्यावगतये बुद्धेः विषयाकारपरिणामः विषयाकारपरिणतायां च बुद्धौ चैतन्यात्मकस्य प्रकाशपुञ्जस्य प्रतिबिम्बश्चापेक्ष्यते। अत्र यदि बुद्धेः विषयाकारपरिणामः प्रमा तर्हि परिणामस्यास्योत्पादकम् इन्द्रियं लिङ्गं शब्दो वा प्रमाणम्। यदि विषयाकारबुद्धौ पुरुषस्य प्रतिबिम्बनं प्रमा तदा बुद्धेः विषयाकारपरिणामः प्रमाणम्।

बुद्धिगतः अर्थाकारः परिणामः प्रमाणम्, तेन परिणामेन सह पुरुषस्य स्वप्रतिबिम्बमूलकः सम्बन्धश्च प्रमेति पक्षःप्रबलो बहुसम्मतश्च। योगदर्शनस्य व्यासभाष्ये (1/7) अयमेव पक्षोऽभ्युपगतः–तथाहि इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनः अर्थस्य विशेषावधारणप्रधानावृत्तिः प्रत्यक्षं प्रमाणम्। फलम् विशिष्टः पौरुषेयश्चित्तवृत्तिनिरोधः।

अत्रेदं चिन्त्यम्–पुरुषे बुद्धितत्त्वं प्रतिबिम्बते बुद्धितत्त्वे पुरुषो वेति। वाचस्पतिमिश्रस्तु बुद्धितत्त्वे पुरुषः प्रतिबिम्बत इति मतमेव स्वीकरोति। अस्मिन् वाचस्पतिमिश्रमते प्रामुख्येन युक्तिरियंदीयते–

बुद्धितत्त्वे एव कर्त्तृत्वं साङ्ख्ययोगयोः स्वीक्रियते अतः तस्मिन्नेव प्रतिबिम्बग्रहणकर्त्तृत्वं युक्तम्। पुरुषस्तु कूटस्थः अकर्त्ता तेन तस्मिन् बुद्धितत्त्व-प्रतिबिम्बग्रहणकर्त्तृत्वस्वीकारो न समीचीन इति।

इदं मिश्रमतं साङ्ख्यतत्त्वकौमुद्यां स्पष्टम्। तथाहि सोऽयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमान् भवति" इति[1]। 1. सा.का. 5

उक्त "तत्प्रतिबिम्बितः"– "तच्छायापत्त्या" इत्यत्र तच्छब्देन बुद्धितत्त्वमेव गृह्यते। 'तच्छायापत्त्या' इत्यस्य तत्सादृश्यापत्त्या इत्यर्थो बोध्यः। तत्तादात्म्यापत्त्या, तदभेदापत्त्या इत्यप्यर्थौ व्याख्याकारैः विधीयते। वार्तिककारो विज्ञानभिक्षुस्तु पुरुषे बुद्धितत्त्वं प्रति बिम्बत इत्येवाभ्युपैति। एतन्मतमेव

समर्थ्यते पुरुषो निर्मलः नितान्तं स्वच्छः बुद्धितत्त्वं तु विकारि तस्मिन् पुरुषवत् नैर्मल्यं स्वच्छतातिशयो वा नास्ति। किञ्च तदेव प्रतिबिम्बितुं समर्थो यस्मिन् केचन धर्माः आकारगुणादयो वा भवन्ति। पुरुषस्तु निर्धमकः तस्य प्रतिबिम्बः कथं सम्भवति इति अस्य स्वमतस्य समर्थने विज्ञानभिक्षुः साङ्ख्यप्रवचनभाष्ये पद्यमिदमुद्धरति–

**कस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।**
**इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः।।** इति।

एतेनेदमेव स्फुटं प्रतिपद्यते–यथा स्वच्छे सरसि तटद्रुमाः प्रतिबिम्बन्ते तथैव चिदात्मके अति स्वच्छे पुरुषे दर्पणस्थानीये बुद्धितत्त्वस्य विभिन्नविषयिण्यो वृत्तयो प्रतिबिम्बन्ते इति। अत्रायं निष्कर्षः – वृत्तौ अर्थावगाही चित्तिशक्तेः प्रतिबिम्बः चित्तिशक्तौ वृत्तेः प्रतिबिम्बो वा प्रमा। तत्करणं वृत्तिः प्रमाणम्। चक्षुरादिद्वारा व्यक्तिविशेषनिर्धारणीयचित्तवृत्तिः प्रत्यक्षप्रमाणम्। विषयाकारवृत्तौ चितिशक्तेः प्रतिबिम्बः, चितिशक्तौ विषयाकारवृत्तेः प्रतिबिम्बो वा प्रत्यक्षप्रमा। एवं ध्यानसमाधिद्वारा चितिशक्तिविशेषावद्योतिका सम्प्रज्ञाताख्या चित्तवृत्तिः प्रत्यक्षं प्रमाणम्। ज्ञाता चितिशक्तिः प्रमा–फलम् इति।

# धारणाध्यानसमाधीनामेकविषयकत्वम्

डॉ. आर्. कृष्णमूर्त्तिशास्त्री

देहार्धयोगः शिवयोः स श्रेयांसि तनोतु वः।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते॥

पतञ्जलिमुनेरुक्तिः काव्यपूर्वाजयत्यसौ।
पुंप्रकृत्योर्वियोगोऽपि योग इत्युदितो यथा॥

अष्टाङ्गयुक्तस्य योगस्य असम्प्रज्ञातसमाध्याख्यस्य आत्मसाक्षात्कारस्वरूपज्ञानसाधनत्वं श्रुतिस्मृतिभ्यामनुमतं वर्णितञ्च–

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्[1]॥

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि॥[2]

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् इत्याद्याः श्रुतयः पठ्यन्ते। गीतारूपा स्मृतिश्च।

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते॥[3]

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छन्ति॥

इत्यादीनि वचनानि च योगस्य विशिष्य समाधेः आवश्यकतां कथयन्ति।

विशिष्य विवेकचूडामणिग्रन्थे एवं पठ्यते सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः समाधिं विदधात्येषा शान्तो दान्त इति श्रुतिः।।

तस्मात् योगसूत्रेषु द्वितीयपादे यमनियमासनप्राणायामप्रत्याहाराख्यानि पञ्चाङ्गानि उक्त्वा तृतीयपादे धारणाध्यानसमाधयः विव्रियन्ते। प्राणायामान्तानां चतुर्णां प्रत्याहारद्वारा धारणादिसाधनत्वं च तत्रोक्तं धारणासु च योग्यतामनसः इति। प्रत्याहारश्च गीतायामुक्तः-

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्।।** इति।

ततः परम् आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् इत्येवं असम्प्रज्ञातसमाधिं निरूपयति। अत्र च श्लोकव्याख्याने शाङ्करभाष्ये अन्तिमं वाक्यमिदं 'एष योगस्य परमो विधिः' इति। एवंरीत्या आत्मतत्त्वसाक्षात्कारस्य अत्यन्तमुपयोगिता संयमस्य वर्तते इति तद्विषये किञ्चिद्विचारयामः।

**धारणा**

योगाङ्गेषु षष्ठमिदम्। तृतीयपादारम्भे इयम् एवं सूत्रिता- देशबन्धश्चित्तस्य धारणा (यो. 3.1) इति। नाभिचक्रहृदयनासाग्रादौ देशे संप्रज्ञातसिद्धये चित्तस्य यो बन्धः स्थिरीकरणं सा धारणेत्युच्यते। योगियाज्ञवल्क्ये देशेषु आत्मापि परिगणितः

**यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि।**
**धारणेत्युच्यते सद्भिः योगशास्त्रविशारदैः।।** इति।

इदं धारणादित्रयं कैवल्योपायभूतायाः पुरुषाख्यातेः अन्तरङ्गं यमादिपञ्चकं च बहिरङ्गम् इति योगसुधाकरे सदाशिवब्रह्मेन्द्रैः उक्तम्।

**ध्यानम्**

इदन्तु एवं सूत्रितम् तत्र प्रत्ययैकतानता ध्यानम् (यो. 3.2) इति। यस्मिन् देशे विषये वा धारणा कृता तत्रैव ध्येयाकारवृत्तिप्रवाहः वृत्त्यन्तराव्यवहितः ध्यानमुच्यते। तदुक्तं विष्णुपुराणे-

तद्रूपप्रत्ययैकाग्रसन्ततिश्चान्यनिस्स्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप।। इति।।

**समाधिः**

अयं समाधिः द्वेधा संप्रज्ञातः असंप्रज्ञातश्च। तत्र प्रथमः द्वितीयस्याङ्गम्। अत एव अष्टाङ्गत्वं समाधेः चितवृत्तिनिरोधस्य योगाख्यस्य उक्तम्। अयं च चित्तस्य धर्म एकाग्रनिरुद्धाख्ययस्य चित्तस्य भूमिकाद्वयस्य भवति। विषयोऽयं योगसुधाकरे स्पष्टमुक्तः एवम्–

संप्रज्ञातोऽसम्प्रज्ञातश्चेति। स च चित्तस्य धर्मः। चित्तं हि त्रिगुणात्मकत्वात् पञ्चभूमिकोपोतम्। ताश्च भूमयः विक्षिप्तं मूढम् अविक्षिप्तमेकाग्रं निरुद्धं चेति।

1 क्षिप्तं रजसा विषयेषु क्षिप्यमाणं क्षिप्तम्

2. मूढं तमसा निद्रालस्यादिमत् मूढम्

3. विक्षिप्ताम् ईषद्रजस्संस्पृष्टेन सत्वेन कादाचित्कध्यानयुक्तम् क्षिप्ताद्विशिष्टं विक्षिप्तं

4. एकाग्रं विधूतरजस्तमस्केन शुद्धसत्वेन एकाग्रमेकतानम्।

5. निरुद्धम् प्रशान्तसकलवृत्तिकं संस्कारशेष्यं निरुद्धम्। एवं च आद्यभूमित्रयपरित्यागेन अवशिष्टभूमिद्वयोपेतस्य चित्तस्य इदं समाधिद्वयं धर्मः। ध्येयातिरिक्तवृत्तिनिरोधः संप्रज्ञातः। सर्ववृत्तिनिरोधः असंप्रज्ञातः। इति भावगणेशवृत्तौ उक्तम्

**5. सम्प्रज्ञातसाधनम्[1]**

अभ्यासः [2]वैराग्यं च द्वयं साधनम्। उक्तं हि अभ्यासवैराग्याभ्यां तन्निरोधः। **अभ्यास**जयादौ आवृतिलक्षणाभ्यासवत् अत्र क अभ्यास इति प्रश्ने एवमुक्तं योगसुधाकरे स्वत एव बहिः प्रवाहशीलं चित्तं सर्वथा निरोत्सामि इत्येवं विधः उत्साहः आवर्त्यमान अभ्यासः इति। अत्र च सूत्रं "तत्र स्थितौ यात्नो अभ्यासः" (यो. 1.13) इति।

**शङ्का**

अद्यतनः अभ्यासः स्वयमदृढः सन् अनादिसञ्चितव्युत्थानसंस्कारान् कथमभिभवेत्।

**समाधानं**

दिवसैर्मासैर्वा समाधिं यदि वाञ्छेत तर्हि स योगी एतादृश एव भवेत्। यः एवं चिन्तयति विद्यमानाश्चत्वार एव वेदाः तानध्येतुं गतस्य माणवकस्य पञ्च दिवसा अतीताः, न अद्याप्यसौ समागतः इति। तस्मात् संवत्सरैः जन्मभिर्वा दीर्घकालम् अभ्यासः आसेवितव्यः। स्मर्यते हि 'अनेकजन्मसंसिद्धः ततो याति परां गतिं'' इति। दीर्घकालः- अभ्यासोऽपि निरन्तरं कर्तव्यः। करणसमये च आदरोऽपि आवश्यकः। तदैव समाधेः दृढभूमित्वं स्यात्। अत्र च सूत्रं स तु दीर्घकालादरनैरन्तर्यसत्कारासेवितो दृढभूमिः इति। (यो.1.4)

1. **वैराग्यम्**- इदं द्विविधम्। अपरं परं चेति। तत्राद्यमपि चतुर्विध म्- यतमान-व्यतिरेक-एकेन्द्रिय-वशीकराणि इति।

**अ. यतमानं**- जगति किं सारं किमसारं इति गुरुशास्त्राभ्यां जिज्ञासामि इत्येवम् उद्योगः।

**आ. व्यतिरेकं**- स्वचित्ते विद्यमानानां दोषाणां मध्ये अभ्यस्यमानविवेकेन एतावन्तः नष्टाः एतावन्तोऽवशिष्टाः इति विवेचनम्।

**(इ) एकेन्द्रियं**- दृष्टादृष्टसुखभोगेषु दुःखात्मकत्वबोधेन तत्र प्रवृत्तिं परित्यज्य मनसि औत्सुकतामात्रेण तृष्णास्थापनं एकेन्द्रियम्।

**(ई) वशीकरणम्**- ऐहिकामुष्मिकविषयभोगेषु सर्वथा वितृष्ण त्वम्। अत्र सूत्रं दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् इति।

इदं च वैराग्यमपरमित्युच्यते। इदं सम्प्रज्ञातसमाधेः अन्तरङ्गम्। असम्प्रज्ञातसमाधेश्च बहिरङ्गम् **परंवैराग्यम्** सम्प्रज्ञातसमाध्यभ्यासे पाटवेन गुणात्रयात्मकात् प्रधानात् विविक्तस्य पुरुषस्य ख्यातिः साक्षात्कारः। तद्वारा अशेषगुणत्रयव्यवहारे यत् वैतृष्ण्यं तत् परं वैराग्यम्।

**समाधिलक्षणम्**

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः इति सूत्रे समाधिः लक्षितः। अस्यायमर्थः (यो. 3.3) ध्यानस्य प्रकर्षात् एकविषयप्रवाहश्चित्तस्य यो भवति स एव समाधिः। तदेव ध्यानमेव ध्येयैकगोचरतया निर्भासमानं ध्यानस्वरूपशून्यमिव स्थितं समाधिर्भवति इति। अत एव उक्तम्–

**ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना।**
**सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः॥** इति।

ध्यानसमाध्योः अभेदः न शङ्क्यः। यतः वक्ष्यमाणरीत्या ईष्पद्भेदः विद्यते ध्यानं–कर्तृकारणानुसन्धानपुरस्सरं जायमानः प्रत्ययः। समाधिः– कर्तृकरणानुसंन्धानं विना ध्येयमात्रगोचरतया निर्भासमानः प्रत्ययः। संप्रज्ञातप्रभेदाः सम्यक् संशयविपर्ययरहितत्वेन, प्रज्ञायते प्रकर्षेणेतिव्युत्पत्या अयं भावनाविशेषः। भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनम्। सम्प्रज्ञातभेदाः चत्वारः एवमुक्ताः सूत्रे पातञ्जले "वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः" इति (यो. 1.17)। सूत्रस्यास्य विवरणमेवम् "सवितर्कः सविचारः सानन्दः सास्मितः इति चत्वारः।

**सवितर्कः**– यदा महाभूतेन्द्रियाणि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखपुरस्सरं भावना क्रियते तदाऽयं सवितर्कः उच्यते। यदा तु अस्मिन्नेव स्थूलालम्बने पूर्वापरानुसन्धानशब्दोल्लेखशून्यत्वेन भावना प्रवर्तते तदा निर्वितर्कः उच्यते।

**सविचारः** यदा तन्मात्रान्तःकरणलक्षणं सूक्ष्मविषयमवलम्ब्य देशकालधर्मावच्छेदेन भावना प्रवर्तते तदा सविचारः। यदा तु तस्मिन्नेव सूक्ष्मालम्बने देशकालधर्मावच्छेदं विना धर्मिमात्रावभासत्वेन भावना क्रियमाणा निर्विचारः उच्यते। एनयोः सप्रभेदयोः ग्राह्यसमापत्तिः इति नामान्तरम्।

सानन्दः यदा तु रजस्तमोल्लेखावानुविद्धमन्तःकरणं सत्त्वं भाव्यते तदा गुणभावान्वितशक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात् सानन्दः समाधिः भवति। अस्य ग्रहणसमापत्तिः इति नामान्तरम्। अत्र बद्धादराः तत्त्वान्तरं प्रधानपुरूषरूपं न पश्यन्ति, ते विगतदेहाहङ्कारत्वात्

विदेहशब्दवाच्याः।

**सास्मितः**

इतः परं रजस्तमोऽनभिभूतं शुद्धसत्त्वमालंबनीकृत्य या भावना प्रवर्तते तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावात् चितिशक्तेरुद्रेकात् सास्मितः इति उच्यते। अस्य गृहीतसमापतिः इति नामान्तरम्। (अत्रैव) ये कृतपरितोषा परं परमात्मानं पुरुषं न पश्यन्ति तेषां चेतसि स्वकारणे लयमुपागते प्रकृतिलयः इति प्रथा। एवं प्रोक्ताः तिस्रः समापत्तयः (समाधयः) सबीजसमाधिः इत्येवं प्रोच्यन्ते। उक्तं हि "ता एव सबीजः समाधिः"। अत्र निर्विचारसमाध्यभ्यासेन चित्तस्य वैराग्ये नैर्मलयापरपर्याये सति अध्यात्मप्रसादः आत्मनश्चित्तशक्तेः प्रसादः ख्यातिः भवति। उक्तं हि "निर्विचारवैशारद्येऽध्यात्मप्रसादः" (यो 1.47) इति।

एवमध्यात्मप्रसादे सति, ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेणाच्छाद्यते या प्रज्ञा सा जायते। अस्याः ऋतंभरा इति तान्त्रिकं नाम। उक्तं हि "ऋतम्भरा तत्र प्रज्ञा" इति। अयमेव श्रेष्ठो योगः। तथाच व्यासभाष्यम्–

**आगमेनानुमानेन ध्यानाभ्यासरसेन च।**
**त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्॥** इति

एतादृश ऋतम्भराप्रज्ञाजनितः संस्कारः व्युत्थानसंस्कारान् सर्वानपि बाधते नूनं इति कथ्यते सूत्रेण "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी (1. 50) इति।

**असंप्रज्ञातसमाधिः**

संयमाख्यात् एतस्मात्त्रयात् लब्धा-ऋतम्भरप्रज्ञः, व्युत्थानसंस्कारमात्ररहितः अधिकारी, एतादृशसंप्रज्ञातसमाधिरूपस्य असंप्रज्ञातसमाधिबहिरङ्गभूतस्य परवैराग्यबलेन असंप्रज्ञातसमाधिम् आसादयति। "परवैराग्यस्यैवान्तरङ्गत्वं संयमस्य बहिरङ्गत्वं च सूत्राभ्यामुक्तम् विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः(1.18) तदपि बहिरङ्गं निर्बीजस्य (3.8) इति।

संयमसाध्येन अनेन निर्विकल्पसमाधिना तत्परिपाकेन च वेदान्तवाक्यात् सम्यग्दर्शनं भवति। तेनाविद्यायां निवृत्तायां तद्धेतुकदृग्दृश्य-संयोगाभावात् पञ्चविधायामपि वृत्तौ निवृत्तायां स्वरूपप्रतिष्ठः पुरुषः शुद्धः केवलो मुक्तः इत्युच्यते। एतत्सर्वं भगवद्गीतायाम्।

**युञ्जन्नेवं सदाऽऽत्मानं योगी नितयमानसः।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति।।** गी. 5.15

इत्यत्र सूचितमिति गूढार्थदीपिकायाम् उपपादितम्।

1. **युञ्जन्नेव** सम्प्रज्ञातसमाधिः।
2. **नियतमानसः** असम्प्रज्ञातसमाधिः।
3. **शान्तिं** प्रशान्तवाहिता।
4. **निर्वाणपरमां** धर्ममेघस्य ज्ञानद्वारा कैवल्यहेतुत्वम्।
5. **मत्संस्थां** औपनिषदं कैवलं च दर्शितम्।।

**उपसंहारः**

संयमस्य धारणाध्यानसमाध्याख्यस्वरूपप्रभेदाः, तस्य मुख्यं फलं च योगसूत्ररीत्या अत्र विवृतं सर्वं विवेकचूडामणौ व्यतिरेकेण अन्वयेन च संसूचितम्

**''समाहिता ये प्रविलाप्य बाह्यं**
**श्रोत्रादि चेतः स्वम्, अहं चिदात्मनि।**
**त एव मुक्ता भवबन्धपाशैः (पाशबन्धैः)**
**नान्ये तु पारोक्ष्यकथाभिधायिनः।। 357**
**अज्ञानहृदयग्रन्थिनिश्शेषविलयस्तदा।**
**समाधिना विकल्पेन यदाऽद्वैतात्मदर्शनम्।।** इति

तैत्तिरीयभृगुवल्यां च भाष्ये उपसंहृतम्। तस्मात् ब्रह्मविजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपः साधनमनुष्ठेयमिति प्रकरणार्थः इति (तै. उ. 3.6)।।

# जैनदर्शने धर्मध्यानस्य वैशिष्ट्यम्

प्रो. वीरसागरो जैनः

भारतीयदार्शनिकानामेवैतद् वैशिष्ट्यं यत् तर्कानुमानागमादिभिः वस्तुतत्त्वं प्रकाशयन्तोऽपि निरूपयन्तोऽपि ते एतद् स्वीकुर्वन्ति यत् तत्त्वबोधः, सत्यबोधः, सत्यस्य साक्षात्कारस्तु ध्यानावस्थायामेव भवति। जैनदर्शनानुसारमपि सर्वलोकालोकज्ञं केवलज्ञानं तत्त्वं तत्त्वं प्रति गत्वा न भवति, अपि तु ध्यानेनैव भवति, ध्यानकाल एव प्रकटितो भवति।

जैनदर्शने ध्यानस्य महत्त्वं विस्तरेण निगदितम्। तत्र नैके ग्रन्थाः विषयमिममवलम्ब्य विरचिताः सन्ति यथा- योगसारः, ज्ञानार्णवः, अमृताशीतिः, इत्यादयः। जैनदर्शनानुसारं मोक्षमार्गस्य प्रारम्भोऽपि आत्मध्यानात् भवति, विकासोऽपि आत्मध्यानात् भवति, पूर्णता चापि आत्मध्यानादेव भवति। आत्मध्यानं विना रागादिविकाराणां विनाशो कथमपि भवितुं नार्हति। सम्यग्दर्शन–ज्ञान–चारित्राणां पारमार्थिकी प्राप्तिः ध्यानावस्थायामेव भवति। आचार्यनेमिचन्द्रमहोदयाः स्पष्टं वदन्ति–

**दुविहं पि मोक्खहेउं झाणे पाउणदि जं मुणी णियमा।**
**तम्हा पयत्तचित्ता जूयं झाणं समब्भसह।।**[1]

अर्थात् निश्चयमोक्षमार्गं व्यवहारमोक्षमार्गं चापि मुनयः ध्यानकाले एव प्राप्नुवन्ति तस्मात् भवन्तः सर्वेऽपि ध्यानस्यैवाभ्यासं सम्यक्तया कुर्वन्तु।

जैनदर्शने ध्यानस्य महत्त्वं कियत् स्वीकृतमित्येतेनापि ज्ञातुं शक्यते यत् जैनानां मन्दिरेषु सर्वत्र एव सर्वेषां तीर्थंकराणां भगवतां वा ये केऽपि विग्रहाः विराजन्ते ते सर्वे अपि ध्यानावस्थायामेव प्रतिष्ठिताः भवन्ति, न तु अन्यस्यां कस्यामपि अवस्थायाम्; यद्यपि जैनेतरमन्दिरेषु देवताः विविध

ासु भङ्गिमासु क्रियासु च विराजन्ते। जैनदर्शनानुसारं सर्वेषां कर्मणां क्षयः ध्यानेनैव भवति–

**ध्यानाग्निः सर्वकर्माणि भस्मसात् कुरुते क्षणात्।**

एवम्प्रकारेण जैनदर्शने ध्यानस्य महत्त्वं सुतरां प्रतिपादितं किन्तु तद्ध्यानं समीचीनमेव भवेत् इत्यादिरूपेण वारं वारं निवेदितम्। जैनाचार्याः स्पष्टरूपेण कथयन्ति–

**झाणं झाणाभासं झाणस्स तहेव भावणा भणिदा।**
**मोत्तुं झाणाभासं वेहिं पिय संजुओ समणो।।**[2]

अर्थात् ध्यानमेव कुर्वन्तु भवन्तः। यदि ध्यानं न कर्तुं शक्यते तर्हि ध्यानस्य भावना करणीया। किन्तु ध्यानाभासः कदापि न करणीयः।

जैनदर्शनानुसारं ध्यानं द्विविधं भवति– प्रशस्तमपि अप्रशस्तमपि। प्रायः जनाः जानन्ति यत् ध्यानं तु सदा हितकारकमेव उपादेयभूतमेव भवति, किन्तु नास्ति तत् समीचीनम्। प्रशस्तध्यानमेव हितकारकमुपादेयभूतं मोक्षकारकं च भवति, अप्रशस्तध्यानं तु अत्यन्तमहितकारकं संसारकारणं तस्माच्च हेयभूतं भवति।

किं ध्यानम्? जैनाचार्याः कथयन्ति–**"एकाग्रचिन्तानिरोधो ध्यानम्।"**[3] अर्थात् यदा चित्तस्यैकाग्रता भवति तदा ध्यानं भवति। इदं च चतुर्विधं भवति आर्तरौद्रधर्मशुक्लभेदेन, अथवा द्विविधमपि भवति प्रशस्ताप्रशस्तभेदेन। आर्तरौद्रध्याने अप्रशस्तध्याने स्तः, धर्मशुक्लध्याने च प्रशस्तध्याने स्तः।

आर्तध्यानमिष्टवियोगेनानिष्टसंयोगेन पीड़ाचिन्तनेन निदानेन वा भवति। रौद्रध्यानं हिंसादिपापकार्येषु आनन्दानुभवनरूपं भवति। तस्मात् इमे द्वे ध्याने हेयभूते प्रतिपादिते स्तः।

धर्मध्यानं धर्मसहितं भवति, तत्त्वचिंतनरूपमात्मध्यानरूपं वा भवति। शुक्लध्यानं च मोक्षस्य साक्षात्कारकारणरूपमत्यंतमुज्ज्वलं भवति। तस्मात् इमे द्वे ध्याने उपादेयभूते स्तः।

धर्मध्यानस्य पञ्च हेतवः प्रतिपादिताः–

**वैराग्यं तत्त्वविज्ञानं नैर्ग्रन्थ्यं समचित्तता।**
**परिषहजयश्चेति पञ्चैते ध्यानहेतवः॥**

अर्थात् धर्मध्यानार्थमेतेषां पञ्चानां तत्त्वानां प्राप्तिरत्यन्तमावश्यकी- 1. वैराग्यं, 2. तत्त्वज्ञानम्, 3. नैर्ग्रन्थ्यमपरिग्रहत्वं वा, 4. साम्यं 5. परिषहजयश्च। अत एव धर्मध्यानस्य स्वामी सम्यग्दृष्टिजीवः एव भवति। मिथ्यादृष्टिजीवाः धर्मध्यानं कर्तुं नैव शक्नुवन्ति।

जैनदर्शने ध्यानस्य भेद-प्रभेदाः एवम्प्रकारेण वर्णिताः सन्ति–




---

1. नेमिचन्द्राचार्यः, द्रव्यसंग्रहे गाथा 47
2. माइल्लधवलः, नयचक्रे, गाथा, 177
3. आचार्योमास्वामी, तत्त्वार्थसूत्रे, 9/27

# सांख्ययोगे समाधिस्वरूपम्

**प्रो. महेशप्रसादसिलोड़ी**

मौलिकशरीरे जीव आऽऽकुलो भवति, दुःखस्य कारणं जगद्वासना वर्तते। यदा जीवः वासनासंस्कारात् असम्पृक्तं तिष्ठति तदा शुद्धबुद्धमुक्त स्वभावेन चैतन्यमिव भासते। ईश्वरार्पितसर्वभावस्य समाधिसिद्धिर्यया सर्वमीप्सितवितथं जानाति देशान्तरे, देहान्तरे, कालान्तरे च। व्यष्टिः चेतना समष्ट्यनन्तरं भवति, समरूपत्वसम्प्रत्यये जीवः चेतनाऽवतिष्ठति, पत्रेऽस्मिन् धारणाध्यानसमाधयः प्रविधिरूपेणाङ्गीकृताः।

समाधिविषये महर्षिणा पतञ्जलिना सूत्रितं यत्–**तदेवार्थमात्र निर्भासं स्वरूपशून्यमिव समाधिः**[1]। अर्थात्– ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपशून्यमिव यदा भवति ध्येयस्वभावावेशात् तदा समाधिरित्युच्यते। लिखितमस्ति–**तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्, मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते**[2]।।

यद्यपि सार्वभौमिकचित्तधर्मः परञ्च वासनया ध्यायमानजैविकचित्ते समाधिरूपस्याङ्गाङ्गिनोः सम्प्रज्ञातभेदो यदत्र चित्तरूपतया विशेषतो ध्येयस्वरूपं न भासते, अङ्गिनि तु सम्प्रज्ञाते साक्षात्कारोदये अपि विषयाः भासन्ते।

**ध्यानं द्वादशपर्यन्तं मनो ब्रह्मणि योजयेत्।**
**तिष्ठेत्तल्लयो युक्तः समाधिः सोऽभिधीयते**[3]।।

**सम्प्रज्ञातसमाधिः–** सम्यक् प्रज्ञायतेऽस्मिन्निरोधविशेषयोगे। यस्तु समाधिरेकाग्रे चेतसि विद्यमानं ध्येयं सद्भूतं प्रकर्षेण द्योतयति ततश्च क्लेशानविद्याऽऽदीन् क्षिणोति। कारणोच्छेदाद्धर्माधर्मरूपाणि बन्धनानि नश्यन्ति

---

1. योगसूत्रम् 3.3
2. तत्त्ववैशारदी
3. योगसूत्रभाष्यम् 3.3

एवञ्चासम्प्रज्ञातम् अभिमुखं करोति! सम्प्रज्ञातश्चतुर्विधः– वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगतश्च।

**वितर्कानुगतसमाधिः–** वितर्कश्चित्तस्यालम्बने स्थूल आभोगः।

योनिजं वा विराजं वा चतुर्भुजादिकं वा स्थूलं षड्विंशतितत्त्व-संघातमाश्रित्य प्रथमभावना प्रवर्तते स आलम्बनम्। यतो हि अदृष्टजातीयेषु चैतन्यपर्यन्तेषु विवेकेन पूर्वं चिन्तनासंभवात्, यदा योगबलेन तानि पश्चात्साक्षात् क्रियन्ते इति न तान्यालम्बनानि। एकस्मिन्नेवालम्बने क्रमेण चतुष्प्रकारकः सम्प्रज्ञातो भवति, तत्रावलम्बने विराट्शरीरादौ प्रथमं यश्चित्तस्य स्थूलाकारत्वात् स्थूल आभोगः परिपूर्णता, स्थूलयोर्भूतेन्द्रिययोरदृष्टाश्रुतामताशेषविशेषसाक्षात्कारः स वितर्कः।

2. **विचारानुगतसमाधिः–** सूक्ष्मो विचारः, प्रकृतिमहदहंकार-पञ्चतन्मात्ररूपा सूक्ष्मा अर्थास्तदाकारत्वात्सूक्ष्माश्चित्तस्याभोगाः स विचारः एते एव सविचारा निर्विचारा च सूक्ष्मविषयाः। भूतसूक्ष्मेषु अभिव्यक्तधर्मेषु देशकालनिमित्तानुभवः स विचारः। लिखितमस्ति–

**आगमेनानुमानेन ध्यानाभ्यासरसेन च।**
**त्रिधाप्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्॥**

3. **आनन्दानुगतसमाधिः–** "आनन्दो ह्लादः" यदा साधकः चित्तस्य सूक्ष्माभोगमपि परित्यज्य सत्त्वप्रकर्षेण विशिष्टानन्दमनुभवति, तेनानुगत-निरोधेन आनन्दानुगतसमाधिर्भवति।

यथा– **सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥**[1]

4. **अस्मितानुगतसमाधिः–** वितर्कविचारानन्दरूपादतिरिक्त यदेकात्मिका संविद् तदस्मितानुगत एव। सत्त्वप्रकर्षे "अहमस्मि" इति आत्मसाक्षात्कारो भवति।

---

1. श्रीमद्भगवद्गीता 6.21

**"आत्मना आत्मानं परिपश्यन्ति धीराः"** अत्र अवस्थाविशेषः वितर्कविचारानन्दरूपाणि उत्तरोत्तरं भूमिमुत्कर्षयन्ति। लिखितञ्चास्ति– **योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत्। स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत्॥** अर्थात् यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादः। अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो भवति।

**प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्।**
**भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति॥**[1]

असम्प्रज्ञातसमाधिः– **आलम्बनं विना चित्तवृत्तयः पुरुषेऽवतिष्ठत।**
**युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि।**
**तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि संत्यजेद्॥**[2]

सत्त्वबाहुल्यात् चित्तवृत्तिः अपरिणामी भवति, द्रष्टुः चित्तिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्रेऽवस्थानं भवति। जन्मान्तरसंस्कारस्य भयं भवति। सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः, भगवता पतञ्जलिना सूत्रितम्–

**"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः।"**

स तु उपायप्रत्ययो भवप्रत्ययश्च द्विविधः–

(क) उपायप्रत्ययस्तु योगिनां भवति, श्रद्धा चेतसः प्रसादः, सा हि जननीव कल्याणी योगिनं पाति। श्रद्धधानस्य वीर्यमुपजायते, समुपजात- वीर्यस्य-स्मृतिरूपस्तिष्ठते। स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते। समाहितचित्तस्य प्रज्ञाविवेकमुपजायते, तदभ्यासादसम्प्रज्ञातः समाधिर्भवति, स हि कैवल्यहेतुः।

**(ख) भवप्रत्ययः**– विदेहानां देवानां भवप्रत्ययः, विदेहः देहात् बहिः अर्थात् ईश्वरोपासनया ये ब्रह्माण्डं सावरणं त्यक्त्वा लिङ्गशरीरेण सह प्रकृत्यावरणे गताः तेऽत्र विदेहा वा प्रकृतिलीनाः यथा जनकादयः तेऽपि चासमाप्तकार्ये चेतसि स्वेच्छयैव प्रकृतिलीने संस्कारशेषे सति

1. पा. स. सू. 47 वार्तिक भा॰
2. योगसूत्रम् 1.18
3. स. पा. सू. 17 वार्तिक भा॰

असम्प्रज्ञातयोगे कैवल्यपदमिव प्राप्नुवन्ति। यावदधिकारविशेषवशात् चित्तं पुनर्व्युत्थितं न भवति तस्यापि भवप्रत्ययः, वायुपुराणेऽपि लिखितमस्ति–

**दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः,**
**भौतिकाश्च शतं पूर्णं सहस्रे त्वाभिमानिकाः।।**
**बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः,**
**पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।।**[1]

व्युत्थाननिरोधसमाधिप्रभावैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्य प्रकृतौ प्रविलीयते। संस्कारनिवृत्ते सति पुरुषः स्वरूपमात्रप्रतिष्ठोऽतः शुद्धः केवलो मुक्त इत्युच्यते।

### सांख्यसारग्रन्थे समाधिः

योगचिन्तामणिग्रन्थे, उपनिषत्सु, योगवासिष्ठप्रभृतिषु ग्रन्थेषु यत् किञ्चिदपि राजयोगविषये प्रतिपादितमस्ति तत् सर्वम् अन्येषु यौगिकग्रन्थेषु (योगसूत्रम्) असम्प्रज्ञातसमाधिरूपेण प्राप्यते, योगः चतुर्विधः प्रोक्तः, मन्त्रयोगः, लययोगः, हठयोगः, राजयोगश्चेति। योगतत्त्वोपनिषदि लिखितमस्ति–

**योगो हि बहुधा ब्रह्मन्, भिद्यते व्यवहारतः।**
**मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः।।**[2]

योगचिन्तामणिनामकग्रन्थे राजयोगस्वरूपं प्राप्यते, तत्र लिखितमस्ति न तत्र किञ्चिद् वेद्यं सम्प्रज्ञायत इति असम्प्रज्ञातः समाधिः, अयं निर्बीजो निर्विकल्पो निरालम्ब इति राजयोगः चोच्यते। कथनस्यास्य तात्पर्यमिदमस्ति असम्प्रज्ञातसमाधिरेव निर्बीजसमाधिः, निर्विकल्पकसमाधिः निरालम्बसमाधिः एव राजयोगः कथ्यते।

यदा साधकः तस्मिन् परमात्मनि लीयते तदा चिन्तयति अहमेव ब्रह्मविष्णुमहेश्वरादिस्वरूपात्मकोऽस्मि। **"नान्यत्मत्परं किञ्चिद्"**

---

1. योगसूत्रं तत्त्ववैशादी
2. योगतत्त्वोपनिषद्– 14.321

यदा योगी राजयोगे समाधिस्थो भवति, तदा इत्थमनुभवति यथाऽऽकाशे मेघाः आच्छादिता भवन्ति तदा भगवान् भास्करः नैव दृश्यते, यदा मेघा अपगता भवन्ति तदा भगवान् भास्करः दृग्गोचरो भवति, भगवान् भास्करः नित्यं स्वकीये स्थाने उदितो भवति। तथैव आत्मतत्त्वमपि भवजन्ममृत्युदुःखस्वप्नधारादिभिः नैव बद्धो भवति, स सर्वथा निर्लिप्तोऽस्ति।

अनेन प्रकारेण योगी एकाग्रचित्तेन तं भगवन्तं ध्यात्वा एकाग्र मनसा आत्मतत्त्वं साधयति। यदा योगी तत् ब्रह्मस्वरूपं प्राप्नोति तदा तस्य स्वरूपं वर्णयितुं नैव शक्यते। यतो हि योगी तदाकारो भवति, तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिर्भवतीति।

इत्यनेन प्रकारेण समाधिस्वरूपं प्रतिपादितमस्ति।

# ध्यानयोगनिदर्शनम्

डॉ. संगीता खन्ना

**यस्मिन्देशे वसेद्योगी ध्यायी योगविचक्षणः।**
**सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः।।[1]**

इत्यनेन स्मृतिवचनेन न केवलं योगिनां पवित्रातिशयत्वं किन्तु योगिजनप्रत्यासत्त्या तदीयदेशस्य तदीयबान्धवानाञ्च पावनत्वं समुद्घोषितम्। समस्तदार्शनिकैः धर्माचार्यैस्तान्त्रिकाचार्यैरपि योगस्य सामर्थ्यविशेषः[2] दर्शितप्राय एव।

अनाद्यनेहसः भारतभुवौ योगस्य समृद्धपरम्परा मानवकल्याणप्रदा श्रेयस्करी वर्तते। तासु बद्धपरिकर्म इव संकल्पितं योगदर्शनं महर्षिपतञ्जलिना सूत्ररूपेण विरचय्य तत्फलं लोककल्याणाय समर्पितम्। श्रीमद्भाष्यकारैः टीकाकारैः तादृशफलान्तर्गतो रस आस्वादार्हावस्थां प्रापितः। जनास्तत्रत्य रसास्वादं गृह्णीयुः। अद्यतनीयां परिस्थितिं परिलक्ष्य न केवलं योगप्रचारस्य परन्तु योगाभ्यासस्य नितरामावश्यकता प्रतीयते। तदर्थमावश्यकमस्ति यद्योगमार्गानुसरणपरायणी समीहा जागृयात्।

भौतिकसमृद्धेरुग्रातपसन्तप्तानां नानाविधोपप्लवग्रस्तानां कायिकमानसिकव्याधिग्रस्तानां जनानाङ्कृतेऽधुना योगात्मकं रसायनमेव कषायहरण-दैन्यदलन-व्याधिहरण-चित्तप्रसादन-मोक्षसाधनक्षममस्तीति सार्वजनीनमतिः।

---

1. दक्षस्मृतिः, 7.45 ।

2.(क) प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्।।
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन।। श्रीमद्भगवद्गीता, 6.45-46

(ख) योगात्संजायते ज्ञानं ज्ञानान्मुक्तिः प्रजायते। विष्णुपुराणम् 6.7.2

महर्षिपतञ्जलिप्रणीते योगदर्शने योगपथे प्रथमपदार्पणपराणामधिकारिणाङ्कृते यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय[3] इत्यष्टावङ्गानि सोपानरूपाणि निर्दिष्टानि सन्ति। तेषु धारणाध्यानसमाधयश्चान्तरङ्गाणि त्रीणि एकविषयाणि सन्ति 'संयम'[4] इति तान्त्रिकी संज्ञां दधते। संयमजयस्यास्य[5] महत्फलं विभूतिरूपं शास्त्रे प्रतिपादितम्। समाधिलाभे ध्यानस्य वैशिष्ट्यं विमृश्य तत्सम्बद्धं शास्त्रगह्वरे निहितं तत्त्वं प्रकाशयितुं गतिमती जाता मे लेखनी, आपरितोषाद् विदुषां न सार्थवतीति मन्ये।[6]

संयमः धारणाध्यानसमाधिसमुदाय इति तस्यैव फलं योगशास्त्रे वर्णितम्। समाधिसाधकं ध्यानं धारणासाध्यमिति पोष्यपोषकभावेन नियतपौर्वापर्यत्वानुरोधेनैकस्मिन्नेवालम्बने दृढ़ीभूतं सत् साधकं योगीं परपदं प्रापयति।

यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधारदेशविशेषे बाह्ये वाभ्यन्तरे वा चित्तस्यैकाग्र्यं धारणा इत्युच्यते। बाह्यदेशेषु हरिहरादीश्वरविग्रहविशेषाः सूर्यचन्द्राग्न्यादिदेवताविशेषाश्च सन्ति।[7] आध्यात्मिकदेशविशेषेषु नाभिचक्र-हृदयपुण्डरीक-मूर्धस्थज्योति-नासिका-जिह्वाग्र-ताल्वादयः सन्ति।[8] चित्तस्य वृत्तिमात्रेण बन्धः 'धारणा' कीर्तिता, न तु ध्येयकल्पनया बन्धः धारणेति। तदा तु सा ध्यानादिसंज्ञान्तरमापद्येत। धारणायां स्थानविशेषस्य मौख्यमस्ति। अनाधारा धारणा नोपपद्यते। धारणास्वरूपफलविषयकोल्लेखः

---

3. योगसूत्रम् 2.29
4. देशबन्धश्चित्तस्य धारणा।
   तत्र प्रत्ययैकतानता ध्यानम्।
   तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। योगसूत्रम् 3.1-4
   त्रयमेकत्र संयमः।
5. तज्जयात् प्रज्ञालोकः। योगसूत्रम् 3.5
6. आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
   बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः।। अभिज्ञानशाकुन्तलम् 1.2
7. योगसूत्रवृत्तिः, 3.1
8. योगसूत्रम्, व्यासभाष्यम् 3.1

मतमतान्तरेण शास्त्रेषु प्राप्यत एव। तत्र धारणादेशरूपेण षट्चक्राणां वैशिष्ट्यं परिलक्ष्य तेषां निरूपणस्योपक्रमोऽत्र– सुधीजनमनोमोदाय लाभाय च मया चिन्तितः।

शरीरेऽस्मिन् परिकल्पितानि षट्चक्राणि[9]– 1. मूलाधारचक्रम्, 2. स्वाधिष्ठानचक्रम्, 3. मणिपूरकचक्रम्, 4. अनाहतचक्रम्, 5. विशुद्धचक्रम्, 6. आज्ञाचक्रञ्चेति। एतत्सर्वोपरि मूर्ध्नि सहस्रारचक्रमस्ति, तदेव परं विश्रामस्थानमस्ति, तत्संप्राप्य न किञ्चित्प्राप्यान्तरं भवति।

षट्चक्रनिरुपणे सौन्दर्यलहर्यामन्यत्रापि सम्यग्विवृतमेतत्सर्वं ध्यानयोगविभावनम्। हठयोगप्रदीपिका–घेरण्डसंहिता–योगकुण्डलिन्युपनिषत्तन्त्रादिषु इदं षट्चक्रभेदनादिकं तत्तसम्प्रदायनुगणं तथा च कुत्रचित्कुण्डलिनीशक्तिजागरणनाम्नापि वर्णितम्। अत्र षट्चक्रस्थितिः, तत्र नाडीव्यवस्था, पद्मव्यवस्था, वर्ण–देवादिव्यवस्था ततः ध्यानफलञ्च, योगजिज्ञासूनां कृते एतेषां परिज्ञानमावश्यकमिति धिया निरूप्यन्ते।

प्रथमं चक्रस्थितिः ज्ञेया। शरीरे योनिपीठे 'मूलाधार' नामकं चतुर्दलकमलं चक्रं विद्यते , तत्र गणेशदेवस्वरूपे धारणां समासादयेत्। लिङ्गमूले 'स्वाधिष्ठान' नामकं षट्दलकमलं विद्यते, तत्र ब्रह्मदेवस्वरूपे धारणां विदध्यात्। तदनन्तरमस्ति नाभिप्रदेशे 'मणिपूरक' नामकं दशदलयुतं कमलं, तत्र विष्णुस्वरूपे धारणां कुर्यात्। हृदयप्रदेशे 'अनाहत' नामकं द्वादशदलयुतं कमलं विद्यते, तत्र रुद्रे धारणां समासादयेत्। अनन्तरमस्ति कण्ठप्रदेशे 'विशुद्ध' नामकं षोडशदलयुतं कमलं, तत्र सदाशिवस्वरूपे धारणां निर्वर्तयेत्। तदनु भ्रूमध्यप्रदेशे 'आज्ञाचक्र' नामकं द्विदलं कमलं विद्यते, तत्र विद्याशक्तिसहितपरमहंसगुरुदेवतायां धारणां सम्पादयेत्। एवं षट्चक्रानन्तरं परमविश्रामस्थलरूपं ब्रह्मरन्ध्रप्रदेशे 'सच्चिदानन्द' नामकं सहस्रारं कमलं विराजते तत्र ब्रह्मस्वरूपं धारयेदिति चक्रस्थितिः।

---

9. मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम्।
विशुद्धञ्च तथाज्ञां च षट्चक्राणि विभावयेत्।। तन्त्रसारः

सौदर्यलहर्यां किञ्चिद्व्युत्क्रमेण षट्चक्रवर्णनं पद्मदलाकाशादितत्त्व-शिवशक्तिनिर्देशसहितं कृतमिति विशेषस्तु तत्रैव द्रष्टव्यः।[10]

प्रक्रमेषु नाडीव्यवस्था[11] तु शरीरे पृष्ठभागे मूलाधाराद् ग्रीवान्तः पृष्ठाऽस्थिविशेषो मेरुरिति कथ्यते, तस्य वामभागे 'इडा' नाम्नी नाडी तथा च दक्षिणभागे 'पिङ्गला' नाम्नी नाडी वर्तते, मेरोर्मध्ये वर्तते 'सुषुम्णा' नाडी, सा च मूलाधाराद् ब्रह्मरन्ध्रगा, सहस्रदलकमलं सुषुम्णारहिते शून्यप्रदेशे ब्रह्मरन्ध्रसमवहितं स्थितं भवति। इडापिङ्गले उभे मूलाधारादारभ्याज्ञाचक्रान्तं प्राप्य वेणीबन्धरूपेण सर्वाणि चक्राणि संवेष्ट्य भ्रूमध्यान्नासारन्ध्रमिलिते इति। मेरुमध्यवर्तिसुषुम्णाया अन्तःस्थिता 'वज्रा' नाम्नी नाडी विद्यते, सा च नाडी सुषुम्णायाः ईषद् ह्रस्वास्ति, मेढ्रात् शिरसि परिणता भवति। वज्रायाः मध्ये "चित्रिणी" नाम्नी नाडी भवति, सा सूक्ष्मा लूतातन्तुसदृशी सकलमूलाधारा-दिचक्रविशेषान् संभेद्य तद्ग्रन्थनसंरचनाद्वारा देदीप्यते। चित्रिण्या अन्तःवर्तिनी 'ब्रह्म' नाडी विद्यते, सा मूलाधाराऽऽज्ञाचक्रयोर्मध्ये स्थिता विद्युत्प्रकाशात्मि-काऽतिसूक्ष्मा परब्रह्मद्वारभूता भवतीति। ब्रह्मनाड्याः आस्यमेव सुषुम्णायाः ग्रन्थिस्थानमस्तीति पद्मादिव्यवस्था ज्ञानार्थं चित्तबन्धस्य देशादिज्ञानार्थमपि ज्ञेयम्। यद्यपि पातञ्जलयोगदर्शने भाष्येऽपि चक्रादिकं न वर्णितम्, तथापि नाड्यः ध्यानकारणीभूतायाः धारणायाः देशविशेषरूपेण विभूतिनिरूपणप्रसङ्गे समुपवर्णिताः। यतः ध्यानाऽऽधारदेशं विना तु धारणा चित्तबन्धरूपा न सम्भवा।

अथ पद्मव्यवस्था वर्ण-देव-मण्डल-फलादियुता शास्त्रेषु यथोक्ता तदनुसारेण चक्रक्रमेण इत्थमस्ति-

---

10. महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसे।। सौन्दर्यलहरी, 9

11.(क) गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः।
चतुरङ्गुलविस्तारं कन्दमूलं (मूलाधारं) खगाण्डवत्।। षट्चक्रनिरूपणम्, 8

(ख) नाड्यस्तस्मात् समुत्पन्ना सहस्राणां द्विससप्ततिरिति। षट्चक्रनिरूपणम्, 9

(ग) नाडी स्वरूपनामस्थित्यादिकंरुद्रयामले द्रष्टव्यम्।
रुद्रयामलम्, 27, 50-53

**मूलाधारचक्रं** योनिपीठे स्थितमस्ति, तन्मूलाधारसुषुम्णयोः सन्धिस्थले संलग्नं पद्मं लिङ्गमूलादधोऽवधिसन्निवेशम् अपानस्थानारूढं रक्तवर्णं चतुर्दलं व-श-ष-स इति वेदवर्णचतुष्टययुतमधोमुखमस्ति। पद्मस्यास्य कर्णिकायां चतुष्कोणरूपं पृथिवीमण्डलं वर्तते, यच्च पीतवर्णमष्टदिग्व्यापिप्रकाशवदष्ट-सूक्ष्मशिखरैः विलसति। तस्य मध्ये पृथिव्याः स्वबीजं "लं" इत्याकारकं पीतवर्णं द्विबाहु वज्रहस्तं गजेन्द्राधिरूढं समास्ते। तद्बीजस्याङ्के गणपतिदेवः राजते, तत्र कर्णिकायां रक्तपद्मोपरि शुद्धिबुद्धिप्रदा रक्तवर्णा सिद्धिदेवी समराजते।

अथ सुषुम्णायाः मुखाद् द्व्यङ्गुलोर्ध्वं लिङ्गमूलादधो वज्रायाः मुखं भवति, तच्च मूलाधारपद्मकर्णिकायाः मध्ये गह्वरान्तवर्ति भवति। तस्मिन्मुखे "त्रिकोणं" विद्यते, तच्च विद्युत्प्रकाशं मदनाधिष्ठानं कन्दर्पनामवायोः निवासस्थानं कोटिसूर्यप्रकाशं रक्तवर्णमेव भवति। तस्य त्रिकोणस्य मध्ये स्वयम्भूः शिवलिङ्गं विद्यते, तदुपरि बिसतन्तुसदृशी सूक्ष्मा जगन्मोहिनी स्वमुखेन ब्रह्मद्वारमुखमाच्छादयन्ती स्वयमेवामृतं पिबन्ती शङ्खस्य वेष्टनाकारतुल्या नवीनविद्युद्रेखासमप्रकाशात्मिका सुप्तसर्पवत्कुण्डलिताकारा स्वयम्भूशिवस्योपरि सार्धत्रिवृत्ताकृतिर्कर्णप्रियं मधुरं गुञ्जारं कुर्वती "कुण्डलिनी" भवति। तदूर्ध्वं राजते परमा शक्तिर्यस्याः भासेन सकलं ब्रह्माण्डं भासते। सा नित्यज्ञानप्रदास्तीति।

सौन्दर्यलहर्यां मूलाधारे चतुर्दलपद्ममध्ये लास्यपरया समयाख्यया देव्या सह नवरसमहाताण्डवनटेश्वरस्य धारणा भावना वन्दना अभिमता।[12]

एतत्सर्वं ध्यात्वा योगी सर्वविद्याविनोदी, वाचस्पतिः, नरेन्द्रः, नित्यानन्दविशिष्टो भवति।[13]

---

12. तवाधारे मूले सह समयया लास्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम्।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया।
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम्।। सौन्दर्यलहरी- 41

13. षट्चक्रनिरूपणम्, 11

**स्वाधिष्ठानचक्रं** लिङ्गमूलप्रदेशस्थं सिन्दूरवर्णं सुषुम्णान्तर्वर्तिनी-ब्रह्मनाड्यादिमध्यवर्ति विद्युत्प्रभं व-भ-म-य-र-ल-इति षड्वर्णयुक्तषड्दल-पद्ममस्ति। तस्य मध्ये शुक्लवर्णमर्द्धचन्द्रयुक्तं मकराधिरूढं वरुणमण्डलमास्ते, तस्य बीजं 'वं' इत्याकारकमस्ति। बीजस्य मध्ये नवोदितसूर्यसमप्रभः चतुर्बाहुश्चतुर्मुखः सृष्टिकारी दण्डकमण्डल्वक्षसूत्राभयहस्तो ब्रह्मदेवः रक्तवर्णया सावित्र्या सह राराजते।

अस्मिन् चक्रे ध्यानयोगी मोहरहितः सकलरिपुरहितः गद्यपद्यप्रबन्ध-रचनासमर्थो भवति।[14]

**मणिपूरकचक्रं** स्वाधिष्ठानादूर्ध्वं नाभिमूले भवति, तच्च अर्द्धचन्द्रकृष्णवर्णबिन्दुसहितं ड-ढ-ण-त-थ-द-ध-न-प-फ-इति दशवर्णयुक्तदशपद्ममस्ति। तस्य कर्णिकायां त्रिकोणाकारं वह्निमण्डलं रक्तवर्णं त्रिकोणावच्छिन्नस्वस्तिकायुक्तं भवति। तन्मध्ये 'रं' इत्याकारकं वह्निबीजं रक्तवर्णं मेषाधिरूढं चतुर्भुजं वज्रशक्तिवराभयधरं विद्यते। बीजमध्ये गरुडवाहनः शंखचक्रगदापद्मधारी नीलप्रकाशमनोज्ञकान्तिः पीतवस्त्रः वनमालादिधरश्चतुर्भुजो विष्णुः लक्ष्म्या सहितो विराजते।

अस्मिन् चक्रे ध्यानाद् योगिनः जिह्वोपरि सरस्वती वसति। वाक्चातुर्यं रक्षाकरणसामर्थ्यमपि सिद्ध्यति।

**अनाहतचक्रं** हृदि बन्धुककान्त्युज्ज्वलं सिन्दूराभं सबिन्दु--क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठ-इतिद्वादशवर्णयुक्तद्वादशदलं कल्पवृक्षतुल्य-वाञ्छितप्रदं वर्तते, तत्कर्णिकायां धूमाभं षट्कोणाकारवायुमण्डलं वर्तते, तदुपरि सूर्यमण्डलमस्ति, तन्मध्ये विद्युत्कोटिनिभं त्रिकोणं वर्तते, तन्मध्ये 'यं' इति वायुबीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुजं वर्तते अत्र कर्णिकायां रूद्रो वृषारूढो रक्तवर्णः सृष्टिसंहर्ता विराजते, तत्र च नीलवर्णा त्रिवक्रा

14. स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो
मनुष्यस्तस्याहङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन।
योगीशः सोऽपि मोहाद्भुततिमिरचये भानुतुल्यप्रकाशो
गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधावाक्यसन्दोहलक्ष्मीः।। षट्चक्रनिरूपणम्- 18

त्रिनेत्रा चतुर्भुजा रुद्राणी शक्तिर्विराजते, एतत्कर्णिकाया अधो रक्तवर्णोर्ध्वमुखाष्टदलपद्ममस्ति तत्र कल्पवृक्षरत्नवेदीचन्द्रातपपताकाद्यलंकृतं मानसपूजास्थानमस्तीति।

अनाहतचक्रं ध्यात्वा योगीशो ज्ञानीशो जितेन्द्रियः काव्याम्बुधारावह श्चेत्यादिर्भवतीति।।

**विशुद्धचक्रं** कण्ठमूले षोडशदलं धूमधूम्ररूपम् आरक्तकेशरं रक्तवर्णसबिन्दुकं षोडशस्वरयुक्तं वर्तते, तत्कर्णिकायां नभोमण्डलं वृत्तरूपं शुक्लवर्णं वर्तते, तन्मध्ये त्रिकोणमस्ति, तत्र चन्द्रमण्डलं राजते, तदुपरि 'हं' इति नभोबीजं शुक्लवर्णं शुक्लाम्बरपरिधानं शुक्लगजारूढं चतुर्भुजं पाशाङ्कुशवराऽभयधरं वर्तते, तन्मध्ये वृषभोपरि स्थितमहासिंहासने सदाशिवोऽर्धनारीश्वरत्वादर्धाङ्गसुवर्णाभाऽर्धाङ्गशुक्लाभः पञ्चवक्त्रस्त्रिनेत्रो दशभुजः व्याघ्रचर्माम्बरो भस्मलिप्तसर्वाङ्गो नागहारशोभितः सुधास्राव्यधोमुखार्ध-चन्द्रशेखरो विराजते। एतत्कर्णिकायां चन्द्रमण्डलमध्ये सिंहोपरिस्थिता 'पार्वतीशक्तिः' सात्त्विकी देवी शुक्लवर्णा चतुर्भुजा पीताम्बरा पञ्चवक्त्रा त्रिनेत्रेति विराजते, तदेतत्कमलं निर्वाणमुक्तिद्वारमिति गीयते योगिभिः, अत्र च 'बुद्धिशक्तिः' चतुर्भुजा श्वेतवर्णा वेदहस्ता विराजते, तत्र च तदधः स्थिरदीपज्योत्याकारहंसरूपी जीवात्मा विराजते।

अस्मिन् चक्रे चित्तधारणात् त्रिकालदर्शी चिराञ्जीव्यादिर्भवति।।

**आज्ञाचक्रं** भ्रूकुटिप्रदेशे शुभ्रं कर्बुरवर्ण-ह-क्षे-त्यक्षरद्वययुक्तद्विपत्रं वर्तते, तत्कर्णिकायां चक्राधिष्ठात्री विद्याशक्तिः शुक्लवर्णा श्वेतषड्वक्त्रा त्रिनेत्रा षड्भुजा वराऽभयाऽक्षमालावेदाङ्गविद्यापुस्तकधरा शुक्लपद्मोपरि-स्थिताऽस्ति। एतत्पद्मस्य त्रिकोणे प्रणवाऽऽकृतिरन्तरात्मा प्रदीपाऽऽभज्योतिर्वर्तते, तस्य चतुर्दिक्ष्वन्तरिक्षे ज्योतिःस्फुलिङ्गबिम्बैर्वेष्टितो ज्वलद्दीपसदृशेन स्वतेजसा मूलाधारादिब्रह्मरन्ध्रान्तप्रकाशकोऽस्ति, तदूर्ध्वं चन्द्रमण्डले हंसक्रोडे परमहंसगुरुदेवताख्यं गुणातीतानन्दं मूलाक्षरं ब्रह्म सशक्तिकं राजते।।

आज्ञाचक्रे धारणाद् योगी अभीष्टसिद्धिमान् जन्मस्थितिलयकर्तेत्यादि-र्भवतीति। एतच्चन्द्रमण्डले चन्द्रार्धस्तदुपरि मकारस्तदुपरि प्रणवस्तदुपरि

नाद इति। इह मण्डले चित्ते लीने सति परमगुरुसेवालभ्यां निरालम्बां मुद्रां बद्ध्वा योगी प्राणजीवबुद्धीनां कलाः पश्यतीति।[15]

**सहस्त्रारचक्रे** योगी षट्चक्रभेदानन्तरमेव प्रविशिति। सहस्त्रदलकमलम् उक्तमहानादादूर्ध्वं महाशंखिन्याश्च शिखरसमदेशे शून्यनिरालम्बे विसर्गस्याऽधः प्रकाशरूपं पूर्णचन्द्रशुभ्रमधोमुखं केवलानन्दरूपम् अकारादिपञ्चाशद्वर्णै-र्विंशतिप्रकारेण परिलसितदलं तत् समास्ते।।[16]

सहस्त्रदलकमलमध्ये शशरहितः सम्पूर्णश्चन्द्रः स्फुरत्ज्योत्स्त्राजालः समास्ते। चन्द्रमध्ये विद्युत्प्रभं त्रिकोणं विद्यते त्रिकोणमध्ये सकलसुरगणैः सेवितं गुह्यं 'शून्याकारं' वर्तते। तद्ब्रह्मात्मकशून्याकारात् परमममृतं क्षरति, तदिह स्थाने परं ब्रह्म निवसति, स भगवान् निर्मलमतये योगिने स्वात्मज्ञानं दिशति, च स परमात्मा बहुनाम्ना प्रसिद्धः।[17]

अत्र सहस्त्रदलचक्रे चन्द्रस्य प्रसिद्धा 'अमा' नाम्नी षोडशी कला विद्यते, सा च शुद्धाऽतिसूक्ष्मा क्षयोदयरहिताऽधोमुखी विद्युत्प्रकाशा पीयूषधाराधराऽस्तीति, तस्या मध्यभागे 'निर्वाण'नाम्नी कला सूक्ष्मतरा भूतानामधिदेवतारूपा नित्यबोधोदया द्वादशादित्यप्रभा चन्द्रलेखेव भङ्गुरा समास्ते। निर्वाणकलाया मध्ये 'निर्वाण'नाम्नी शक्तिरास्ते सा च परब्रह्मशक्तिरूपा कोटिसूर्यप्रकाशा त्रिभुवनजननी सूक्ष्मतमा प्रेममयी मुनिमनःसु तत्त्वज्ञानं वहन्ती विद्यते, तस्या मध्ये परब्रह्मपदं नित्यानन्दं शाश्वतं सकलसुखमयमास्ते।

---

15. इह स्थाने विष्णोरतुलपरमामोदमधुरे समारोप्य प्राणं प्रमुदितमनाः प्राणनिधने। परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां पुराणं योगीन्द्रः प्रविशति च वेदान्तविदितम्।। षट्चक्रनिरुपणम्, 38

16. "इन्दुर्ललाटदेशे च तद्दूर्ध्वेबोधिनी स्वयं। तदूर्ध्वे भाति नादोऽसावर्धचन्द्राकृतिः परः।। तदूर्ध्वे च महानादो लाङ्गलाकृतिरुज्वलः। तदूर्ध्वे च कला प्रोक्ता 'आञ्जी'ति योगिवल्लभा।। जन्मनी तु तदूर्ध्वे च यद्गत्वा न निवर्तते।।" षट्चक्रनिरूपणम्, 40

17. इदं ब्रह्मरन्ध्रस्थं सहस्त्रदलकमलं केचित्–
शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा वदन्तीति प्रायो हरिहरपदं केचिदपरे।
परं देव्या देवीचरणयुगलाम्भोजरसिका मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम्।।
षट्चक्रनिरूपणम्, 45

केचित् तच्छिवपदमिति, अन्ये विष्णुपदमिति, अन्ये मोक्षप्रदं हंसपदमिति वदन्ति।

तदेतादृशचक्रेषु तद्देवतासु कर्णिकासु त्रिकोणाधिदेवेषु शक्तिषु वा यत्र क्वापि ध्यानं कुर्यात्। एवं नासिकाऽग्रे गन्धसंविदं धारयेत्, जिह्वाग्रे रससंविदं धारयेत्, ताल्वग्रे रूपसंविदं धारयेत्। जिह्वामध्ये स्पर्शसंविदं धारयेत्, जिह्वामूले शब्दसंविदं धारयेत्, इत्येवं शरीरान्तप्रदेशे यत्र कुत्राऽपि धारणां विदध्यादिति, उक्तं च विष्णुपुराणे–

**प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्।**
**वशीकृत्य ततः कुर्यात् चित्तस्थानं शुभाश्रये।।** इति।[18]

बाह्यप्रदेशेऽपि धारणा कर्तव्या भवति यथा विष्णुपुराणे सविशेषं सर्वं स्पष्टमुक्तमेव–

**मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम्।**
**एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते।।**

**तच्च मूर्तं हरेः रूपं यद्विचिन्त्यं नराधिप!**
**तच्छ्रूयतामनाधारा धारणा नोपपद्यते।।**

**प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम्।**
**सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ।।**

**समकर्णान्तविन्यस्तचारुकुण्डलभूषणम्।।**
**कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ।।**

**वलीत्रिभङ्गिना भग्ननाभिना चोदरेण च।**
**प्रलम्बाष्टभुजं विष्णुमथवाऽपि चतुर्भुजम्।।**

**समस्थितोरुजङ्घं च स्वस्तिकाङ्किबरांबुजम्।**
**चिन्तये तद् ब्रह्मभूतं तं पीतनिर्मलवाससम्।।**

---

18. विष्णुपुराणम् 6.7.45

किरीटचारुकेयूरकटकादिविभूषितम्　।
शार्ङ्गचक्रगदाखड्गशंखाऽक्षबलयान्वितम्।।

चिन्तयेत् तन्मयो योगी समाधायात्ममानसम्।
तावद्यावद् दृढीभूता तत्रैव नृप! धारणा।।[19]

आभ्यान्तरे बाह्ये वा विषये यत्र-यत्र धारणा कृता भवेत् तत्र तत्र देशे चित्तवृत्तेरेकाग्रता ध्यानमुच्यते[20] अर्थात् धारणायाः देशविशेषे स्थानविशेषे वा ध्येयालम्बनस्य प्रत्ययस्य यः प्रत्ययान्तरापरामृष्टः सदृशः प्रवाहो भवति, स एव ध्यानमिति।[21] ध्येयस्तु तत्र स्थूलसूक्ष्मादिजीवेश्वरविषयो भवति, परन्तु कालावच्छिन्नता तत्र बलवती सती ध्यानं द्रढयति। तदिदं ध्यानं बाह्याभ्यन्तरभेदाद् द्विविधमुक्तम्। उपनिषदि सगुणनिर्गुणभेदाद् द्वैविध्यं प्रतिपादितम्।[22] तदेतद्ध्यानयोगमारुढः सन्निरन्तराभ्यसन्साधकः परमात्मना युज्यते योगीति संज्ञां धत्ते।

ध्यानमेव यदा ध्येयविषयाकारेणैव साक्षिणि निर्भासते, न तु प्रत्ययाकारेण, तदा चित्तस्य ध्येयस्वरूपावेशेन 'अहमिदं चिन्तयामी' त्येवंप्रत्ययाकारवृत्त्यन्तरानुदयाद् वृत्त्यन्तररहितं स्वरूपस्य शून्यमिव भवति अर्थात् ध्येयस्वरूपाकारमात्रं भवतीति, तदा समाधिरित्युच्यते।[23] ध्यानसमाधयोर्विभागोऽत्र संक्षेपेणायमस्ति[24] यद्ध्यातृध्येयध्यानानीतिस्वरूप-

19. विष्णुपुराणम् 6.7.77-85
20. तत्र प्रत्ययैकतानता ध्यानम्। योगसूत्रम् 3.2
21.(क) तद्रूपप्रत्ययैकाग्र्यं संततिश्चान्यनिस्पृहा।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप।। वायुपुराणम् 2.2.80
(ख) देशावस्थितिमालक्ष्य बुद्धेर्या वृत्तिसंततिः।
वृत्त्यन्तरैरसंस्पृष्टा तद्ध्यानं सूरयो विदुः।। ईश्वरगीता, 9
22.(क) अथ ध्यानम्। तद्विविधं सगुणं निर्गुणञ्चेति। सगुणं मूर्तिध्यानं
निर्गुणमात्मयाथात्म्यम्। शाडिल्योपनिषद्, 1.10.1
(ख) सगुणध्यानमेवं स्यादणिमादिगुणप्रदाम्।
निर्गुणं खमिव ध्यात्वा मोक्षमार्गं प्रपद्यते।। दत्तात्रेययोगशास्त्रम्, 246
23. तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। योगसूत्रम्, 3.3
24. तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते।। विष्णुपुराणम्, 6.7.10

त्रयनिर्भासकं ध्यानम्, ध्यातृध्येयध्यानानीतिस्वरूपत्रयरहितः समाधिरिति। अष्टमाङ्गरूपस्यास्य समाधेः अङ्गिसम्प्रज्ञातयोगादयं भेदो वर्तते यदत्र चिन्तारूपतया निःशेषतो ध्येयस्य स्वरूपं न भासते। अङ्गिनि तु सम्प्रज्ञाते समाध्यविषया अपि विषया भासन्ते। साक्षात्कारोदये सत्यैकाग्र्यकाले सम्प्रज्ञातयोगो भवति, अन्यदा तु समाधिमात्रं तत्पूर्वन्तु ध्यानमेव। असम्प्रज्ञातयोगे न किञ्चित्प्रज्ञायते, संस्कारशेषं चित्तं स्वकारणे प्रलीयते। चित्ते प्रलीने सति शरीरवियोगस्तु सुतरामेव। नित्यशुद्धबुद्धमुक्तस्वभावः पुरुषः स्वात्मदर्शनपरः भगवत्परायणो वा महामुक्तो भवतीति योगसरणिः।

योगसरणिरियं व्यावहारिकी वैज्ञानिकी च। अस्यान्निष्णातः योगी पिण्डज्ञानेन ब्रह्माण्डज्ञानपारीणः तद्रहस्योद्घाटनक्षमो भवति। अद्यतनसमये आध्यात्मिकामुष्मिकपरिष्काराय योगशरणमेवाङ्गीकरणीयम्।

# ऋते ध्यानान्न मुक्तिः

डॉ. अनेकान्तकुमारो जैनः

जैनसिद्धान्तस्य प्रवर्तकाः परमयोगिनः प्रथमतीर्थंकराः ऋषभदेवाः सन्ति। जैनमतानुसारमीश्वरः जगतः कर्त्ता, स्रष्टा, शास्ता वा नास्ति, अपि तु सः सर्वज्ञ आनन्दमयश्च वर्तते। सः शुद्धः, सिद्धः, पञ्चभौतिकशरीरेण विरहित, एकोऽविनाशी, अपरिवर्तनीयश्च वर्तते। अर्थात्तस्य नाशः (जन्ममृत्युर्वा) न कदापि भवितुमर्हति। नापि सः च्युतो भूत्वा भ्रष्टः भवितुमर्हति। प्रत्येकस्य विशिष्टात्मनोऽन्तिमं प्रयोजनं पवित्रशुद्धरूपेण परमेश्वररूपेण स्थितिरेव। यस्मिन् परमात्मत्नः सर्वे गुणास्सन्ति। परन्त्वेषु गुणेषूत्पादकत्वशासकत्वादिरूपाः गुणाः जैनदार्शनिकैः नानुमताः।

## आत्मनः त्रिविधत्वम्

जैनदर्शने बहिरात्मान्तरात्मपरमात्मभेदेन त्रिविधात्मा भवति। मूढो मिथ्यात्वरागादिपरिणतो बहिरात्मा, विचक्षणो वीतरागनिर्विकल्पस्वसंवेदनज्ञान परिणतोऽन्तरात्मा, ब्रह्मा शुद्धबुद्धैकस्वभावः परमात्मा। शुद्धो रागादिरहितो बद्धोऽनन्तज्ञानादिचतुष्टयसहित इति शुद्धबुद्धस्वभावलक्षणम्। एवमात्मा त्रिविधो भवति।

## ध्यानं किमर्थम्

प्रत्येकमात्मा स्वभावेनानन्तदर्शन-ज्ञान-वीर्य-सुखादीनाम् अनन्तगुण-शक्तीनाञ्च अखण्डपिण्डस्वरूपमस्ति। वैभाविकपरिणतिषु लिप्तताकारणात् शारीरिकमानसिकाध्यात्मिकदुःखपीडितो भवति। वैभाविकपरिणतिकारणादेव जीवनस्यानन्तशक्तयस्तस्माद् दूरे सन्ति। ता एवं शक्तीः पुनः प्राप्तुं परोपयोगात् अपाकृतस्य चित्तस्य निरोधो ध्यानमुच्यते।

---

* स. आचार्यः-जैनदर्शनविभागः, श्रीलालबहादुरशास्त्रिदिराष्ट्रिय संस्कृत विद्यापीठम् नवदेहली-110016

ध्यानं व्यापकार्थयुतं पदमस्ति। जैनसाधनापद्धतौ इदं सर्वाधिकं महत्त्वपूर्णं गण्यते। संयमस्य चरित्रस्य च वृद्धये मोक्षस्य प्राप्तये च इदं सर्वोत्तमं साधनमस्ति। अस्य महत्त्वमैतिहासिकता च एतेनैव सिद्ध्यति यत् प्राचीनातिप्राचीना अपि जैनप्रतिमाः खड्गासनयुक्ता वा पद्मासनयुक्ता वा सर्वाः अपि ध्यानमुद्रास्थिता एव प्राप्यन्ते। ध्यानमेवात्र चरमोत्कर्षत्वेन स्वीकृतमस्ति।

**ध्यानस्वरूपम्–**

एकाग्रतैव ध्यानम्।[1] उत्तमसंहननवतः एकस्मिन्नेव विषये चित्तवृत्तेः निरोधो ध्यानमस्ति।[2] अस्यायं भावो यत् व्यक्तिः यदा यमेव भावं चिन्तयति तस्मिन्नेव तन्मयो भवति समभावधारणेन कर्मणां नाशयितृ ध्यानं भवति।[3] इदं मोक्षप्राप्तेः प्रधानं कारणमस्ति, यतः पापमहावनदहने अग्निसमं वर्तते।[4] ध्यानं साम्यभावमिति प्रतिपादयता कथितं यत् ध्यानयुक्तस्य योगिनः द्वैतभावो नश्यति, सः सांसारिकप्रपञ्चादुर्ध्वस्थः सन् चित्स्वरूपस्य आत्मनः ध्याने लीनो भवति।[5] अतः इदं संवरस्य निर्जरायाश्च कारणमपि कथितम्।[6] वस्तु इदं चित्तं ध्याने अन्तर्मुहूर्तादधिकं न तिष्ठति अतः ध्यानस्य कालः अन्तर्मुहूर्तमेवेति कथितमस्ति।[7]

**ध्यानभेदाः–**

ध्यानं प्रशस्ताप्रशस्तभेदेन द्विविधमस्ति। इदं हि सर्वेषां जीवानामिष्टा-

---

1. (क) एकाग्रचिन्ता निरोधो यस्तद्ध्यानं भावना परा।
   अनुप्रेक्षार्थचिन्ता वा तज्ज्ञैरभ्युपगम्यते।। –ज्ञानार्णवः, 25/16
   (ख) चित्तसेगग्गया हवई झाणं–ध्यानशतकम्, आवश्यकनिर्युक्तिः 1459;
2. तत्त्वार्थसूत्रम्, 9/27; चारित्रसारः, 166/6; तत्त्वानुशासनम्, 56
3. यदैव संयमी साक्षात्समत्वमवलम्बते।
   स्यात्तदैव परं ध्यानं तस्य कर्मौघघातम्।।4।।
4. ध्यानमेवापवर्गस्य मुख्यमेकं निबन्धनम्।
   तदेव दुरितात्रतगुरुकक्षहुतासनम्।। –ज्ञानार्णवः 25/7
5. सर्गः 22, साम्यवैभवम्, ज्ञानार्णवः
6. तद्ध्यानं निर्जराहेतुः संवरस्य च कारणम्। –तत्त्वानुशासनम्, 56
7. तत्त्वार्थसूत्रम्, 9/27; योगशास्त्रम्, 4/116

निष्टफलप्राप्तिकारणमस्ति। येन ध्यानेन रागविरहितभावेन वस्तुस्वरूपचिन्तनं क्रियते तत् प्रशस्तध्यानमस्ति। वस्तुस्वरूपस्य यथार्थमजानतः रागद्वेषमोहयुक्ता-प्रवृत्तिः अप्रशस्तध्यानं कथ्यते। जैनागमे ध्यानस्य मुख्यतया चत्वारो भेदाः वर्णिताः सन्ति। ते यथा–आर्त्तरौद्रधर्मशुक्लाश्चेति।[8]

## आर्त्तध्यानस्वरूपम्–

ऋतं दुखं, संकलेशस्तत्रभवमार्त्तम्।। आर्त्तञ्च यद्ध्यानं तदार्त्तध्यानम्। एतच्चतुर्विधं भवति। तथा हि अप्रियवस्तुनः सम्बन्धे सति तन्निवृत्यर्थं रात्रिन्दिवं यच्चिन्तनं, तदात्मकं ध्यानमाद्यम्। येन केन वा रोगेण व्याकुलिते सति तन्निराकरणार्थं रात्रिन्दिवं तद्विषयकं चिन्तनं द्वितीयं ध्यानम्। अभीष्टवस्तुनो विप्रयोगे सति, पुनस्तत्प्राप्त्यर्थं यच्चिन्तनं रात्रिन्दिवं, तत्तृतीयम्। तथा च चक्रवर्त्यादीनां विभवदर्शनात्, ममाप्यस्य तपसः फलं परलोके एवंविधमेव स्यादित्यात्मकं चिन्तनं चतुर्थमार्त्तध्यानमिति।

## रौद्रध्यानस्वरूपम्

रौद्रं यद्ध्यानं तद्रौद्रध्यानमिति। क्रूरो–नृशंसो वा रुद्रस्तस्येदं रौद्रम्। एतदपि चतुर्विधम्–अत्र 'येन केन प्रकारेण यंत्रिविशेषेणोपायविशेषण वा, प्राणिनो व्यापाद्याः' इत्यात्मकं चिन्तनं हिंसासुबन्ध्याख्यं प्रथमं रौद्रध्यानम्। यैश्च कूटसाक्षिदानादिविभिन्नोपयैः परो वञ्च्यते, तेषामुपायानां चिन्तनं द्वितीयमनृतानुबन्धिरौद्रध्यानम्। तथा च यैर्यैरुपायैः घुर्घुरूक–कर्तरिका छेदक खात्रादिभिः परधनमादीयते, तेषां चिन्तनं स्तेयानुबन्धी तृतीयं रौद्रध्यानम्। धनधाान्यादिपरिग्रहसंरक्षणार्थं राात्रिन्दिवं तदुपायानां चिन्तनं चतुर्थं विषयानन्दी रौद्रध्यानम्।

## धर्मध्यानस्वरूपम्

धर्मेण युक्तं धर्म्यं भवति। अतः धर्मेण युक्तं ध्यानमेव धर्म्यध्यानमस्ति। रागद्वेषमूलकान् समस्तान् पदार्थान् परित्यज्य श्रेयोमार्गस्थितः साधकः साम्यतायाः अभ्यसनाय यदेव ध्यायते तद् धर्म्यध्यानमस्ति। अस्य चत्वारि चरणानि सन्ति–आज्ञाविचयः अपायविचयः विपाकविचयः संस्थानविचयश्चेति।

8. तत्त्वार्थसूत्रम्, 9/28

संस्थानविचयधर्म्यध्यानस्यापि चत्वारो भेदाः सन्ति–पिण्डस्थं, पदस्थं रूपस्थं, रूपातीतञ्चेति। मन्त्रवाक्येषु स्थितिः पदस्थं, निजात्मनः चिन्तनं पिण्डस्थं, सर्वचिद्रूपस्य चिन्तनं रूपस्थं, निरञ्जनस्य ध्यानं रूपातीतध्यानञ्च वर्तन्ते।

## शुक्लध्यानस्वरूम्

ध्यानस्य चरमावस्था शुक्लध्यानमस्ति। अस्मिन्नेव पूर्णतः ध्यानसिद्धिर्भवति। एकाग्रता निरोधश्चात्र पूर्णतामापद्येते। एतामेव दशां सम्प्राप्य ध्यानिनः लक्ष्यसिद्धिर्भवति। ग्रन्थकारोऽस्य लक्षणम् एवं वदति–

**निष्क्रियं करणातीतं ध्यानधारणवर्जितम्।**
**अन्तर्मुखं च यच्चित्तं तच्छुक्लमिति पठ्यते॥4॥**[9]

अभिप्रायोऽयमत्र यत् निष्क्रिया इन्द्रियातीता ध्यानधारणाविहीना अन्तर्मुखिनी मनोवृत्तिः शुक्लध्यानं कथ्यते। इयमात्मनो विशुद्धाऽवस्था वर्तते। सर्वार्थसिद्धिकारोऽपि वदति यत् शुचिगुणयुक्तं यत् तदेव शुक्लध्यानमस्ति। तथा मलिनतायां निर्गतायां वस्त्रं शुचि सत् शुक्लं कथ्यते तथा सर्वमलविवर्जिता निर्मलगुणयुक्ता आत्मपरिणतिश्चापि शुक्ला वर्तते।[10] इत्यमेवात्मपरिणतिः शुक्लध्यानं कथ्यते।

इदं शुक्लध्यानं कषायमलस्य क्षयेनोपशमेन वा लभ्यते।[11] धर्मध्यानस्य प्रक्रियायाः अनन्तरमेव शुक्लध्यानं प्रारभते।[12] अस्यां प्रक्रियायां सम्प्राप्य बाह्यध्येयेन प्रयोजनं न भवति। साधकेन आत्मातिरिक्तं न किमपि दृश्यते।

## शुक्लध्यानस्य भेदाः

शुक्लध्यानस्य चत्वारो भेदाः सन्ति।[13] ते यथा–

---

9. ज्ञानार्णवः 42/4
10. (क) सर्वार्थसिद्धिः 9/28/446/11
    (ख) राजवार्तिकम् 9/28/627/31
11. ज्ञानार्णवः, 42/6
12. ज्ञानार्णवः 42/3
13. ज्ञानार्णवः 42/9-11, तत्त्वार्थसूत्रम् 9/39, द्रव्यसंग्रहटीका 48/199

(क) पृथक्त्ववितर्कसवीचारः

(ख) एकत्ववितर्कावीचारः

(ग) सूक्ष्मक्रियाऽप्रतिपाती

(घ) व्युपरतक्रियानिवृत्तिः (समुच्छिन्नक्रिया)

शुक्लध्यानस्यैते चत्वारो भेदा एव अधिकतरैराचार्यैः स्वीकृताः सन्ति। किन्तु हरिवंशपुराणे शुक्लपरमशुक्लौ इति द्वौ भेदौ उक्तौ। पृथक्त्ववितर्कवीचारः एकत्ववितर्कावीचारश्च शुक्लस्य, सूक्ष्मक्रियाऽप्रतिपाती व्युपरतक्रिया निवृत्तिश्चेति परमशुक्लध्यानस्य भेदत्वेन प्रोक्ताः सन्ति।[14] चारित्रसारेऽपि ईदृशमेव वर्णनं कृतमस्ति।[15]

## (क) पृथक्त्ववितर्कवीचारशुक्लध्यानस्वरूपम्

**पृथक्त्वं तत्र नानात्वं वितर्कः श्रुतमुच्यते।**
**अर्थव्यञ्जनयोगानां वीचारः सङ्क्रमः स्मृतः॥15॥**[16]

नानात्वं वा भिन्नत्वं वा नाम पृथक्त्वम्, श्रुतज्ञानं नाम वितर्कः अर्थव्यञ्जनयोगानाञ्च सङ्क्रमणं वीचारश्चेति कथ्यन्ते। यस्मिन् ध्याने पृथक्-पृथक्तया श्रुतस्य विचारः सङ्क्रमणं वा भवति, तत् पृथक्त्ववितर्का वीचारशुक्लध्यानं कथ्यते॥[17] इदं ध्यानं पृथक्त्व-वीचार वितर्कः समेतं भवति, अतः इदं पृथक्त्ववितर्कवीचारध्यानं कथ्यते।[18] इदं शुक्लध्यानस्य प्रथमं चरणं वर्तते। एतत् त्रयाणां योगयुक्तानां (मनोवाक्कायानां) मुनीनां भवति।[19] यतः अत्र योगः परिवर्तते।

**अर्थादर्थान्तरापत्तिरर्थसङ्क्रान्तिरिष्यते।**
**ज्ञेया व्यञ्जनसङ्क्रान्तिर्व्यञ्जनाद्व्यञ्जने स्थितिः॥**

---

14. शुक्लं परमशुक्लञ्च। -हरिवंशपुराणम्, 56/53-54
15. चारित्रसारः 203/4
16. ज्ञानार्णवः 42/15
17. पृथक्त्वेन वितर्कस्य वीचारो यत्र विद्यते।
    सवितर्कं सवीचारं सपृथक्त्वं तदिष्यते॥ -ज्ञानार्णवः 42/13
18. सवितर्कं सवीचारं सपृथक्त्वं च कीर्तितम्॥13॥ -ज्ञानार्णवः 42/9
19. तत्र त्रियोगिनामद्यं। -ज्ञानार्णवः, 42/12

**स्यादियं योगसङ्क्रान्तिर्योगाद्योगान्तरे गतिः।**
**विशुद्धध्यानसामर्थ्यात् क्षीणमोहस्य योगिनः।।[20]**

अर्थादर्थान्तरप्राप्तिः अर्थसङ्क्रान्तिरस्ति व्यञ्जनाद् व्यञ्जनान्तरं प्राप्या स्थिरता व्यञ्जनसङक्रान्तिरस्ति, योगाद्योगान्तरगमनं योगसङ्क्रान्तिरस्ति। विशुद्धध्यानस्य सामर्थ्यात् यस्य मोहग्रस्तकर्मक्षीणमभूत्, तादृशस्य साधकस्य एताः सङ्कान्तयो भवन्ति।

यः ध्यानी अर्थव्यञ्जनयोगेषु यावत् त्वरया सङ्क्रमते सः स्वयमेव पुनः तथैव प्रत्यावर्तते।[21] अनेन ध्यानेन योगी स्वमोहकर्मणः क्षयमुपशमं वा शीघ्रं करोति।[22] एवंविधेन पृथक्त्वध्यानेन जितात्मा शान्तकषायः दग्धकर्माग्निरिव साधक एव एकत्वध्यानयोग्यो भवति।[23]

## (ख) एकत्ववितर्कावीचारशुक्लध्यानस्वरूपम्

शुक्लध्यानस्येदं द्वितीयं चरणमस्ति। इदं पृथक्त्ववितर्कवीचार-विपर्यस्तमस्ति।[24] इदं वितर्कसहितं किन्तु वीचारवर्जितम् एकपदसहितञ्चा-स्ति। अतः इदमेकत्ववितर्कावीचारध्यानं कथ्यते।[25] इदं केनापि एकेनैव योगेन भवति[26], यतः अस्मिन् योगो न पर्यावर्तते। योगी यस्मिन्नेव योगे विलीनो भवति स एव योगः प्रवर्तते। अस्मिन् योगी खेदहीनः सन् एकमेव द्रव्यमणुं पर्यायं वा एकेनैव योगेन ध्यायति, अतः इदमेकत्वध्यानं कथ्यते।[27] नष्टमोहस्य पूर्वज्ञस्य अपरिमितदीप्तेः अत्यन्तनिश्चलस्य मुनेरिदं ध्यानं भवति। इदं ध्यानम् अत्यन्तं निर्मलं भवति।[28]

प्रथमं शुक्लध्यानं तु सङ्क्रमणयुक्तमस्ति, किन्तु अस्मिन् ध्याने सङ्क्रमणमविरुद्धं भवति, अपि च अवशिष्टघातिकर्माणि विनाश्य साधकः स्वात्मानं लभते, अत्यन्तोत्कृष्टशुद्धताञ्च प्राप्तं केवलज्ञानं केवलदर्शनञ्च लभते।[29] अस्मिन् ज्ञाने जीवः त्रैकालिकसमग्रद्रव्याणां समस्तपर्यायान् युगपदेव जानाति।

---

20. ज्ञानार्णवः, 42/16-17
21. अर्थादिषु यथा ध्यानी सङ्क्रामत्यविलम्बितम्।
    पुनर्व्यावर्तते तेन प्रकारेण स हि स्वयम्।। -ज्ञानार्णवः 42/18
22. ज्ञानार्णवः 42/20

## (ग) सूक्ष्मक्रियाऽप्रतिपाति-शुक्लध्यानस्वरूपम्[30]

केवलज्ञानसूर्येण पदार्थान् प्रकाशयतः सर्वज्ञस्य यदा अन्तर्मुहूर्तप्रमाणमायुः शिष्यते तदा तृतीयं सूक्ष्मक्रियाऽप्रतिपाति-शुक्ल-ध्यानं भवति।[31]

अस्य ध्यानस्यार्थोऽस्ति-काययोगस्य सूक्ष्मीकरणम्, अप्रतिपातौ ध्याने वा प्रविश्य पुनर्न आवर्तनमिति। अतः इदं सूक्ष्मक्रियाऽप्रतिशुक्लध्यानं कथ्यते।

यदा अरिहन्तस्यायुः कर्म अन्तर्मुहूर्तपरिमितिम् अवशिष्यते अपरेषाञ्च त्रयाणां कर्मणां स्थितिः अधिका भवति तदा स्वत एव समुद्घातविधिः प्रारभते। असौ केवली क्रमशः दण्ड-कपाट-प्रतरेति क्रियात्रयं त्रिषु कालेषु कृत्वा चतुर्थे काले समस्तलोकं पूरयति। वेदनीयं नाम गोत्रस्थितिं च आयुः कर्मसमं विधाय चतुर्षु कालेषु क्रमशः लोकपूरण-प्रतर-कपाट-दण्ड-रूपो भूत्वा आत्मप्रदेशान् शरीरवत् करोति। तदनु काययोगे स्थिरतां प्राप्य बादरवचनयोगं बादरमनोयोगञ्च सूक्ष्मीकरोति, ततश्च सूक्ष्मक्रियायोगे स्थैर्यमधिगम्य बादरकर्मयोगं सूक्ष्मं करोति, ततश्च

---

23. एवं शान्तकषायात्मा कर्मकक्षाशुशुक्षणिः।
एकत्वध्यानयोग्यः स्यात्पृथक्त्वेन जिताशयः।। -ज्ञानार्णवः 42/23
24. ज्ञानार्णवः 42/9
25. सवितर्कविचारमेकत्वपदलाञ्छितम्।
कीर्तितं मुनिभिः शुक्लं द्वितीयमतिनिर्मलम्।। -ज्ञानार्णवः 42/10
26. द्वितीयं त्वेकयोगिनाम्। -ज्ञानार्णवः 42/12
27. द्रव्यं चैकमणुं चैकं पर्यायं चैकमश्रमः।
चिन्तयत्येकयोगेन यत्रैकत्वं तदुच्यते।। -ज्ञानार्णवः 42/27
28. ज्ञेयं प्रक्षीणमोहस्य पूर्वं न्यस्यामितद्युते।
सवितर्कमिदं ध्यानमेकत्वमतिनिश्चलम्।। -ज्ञानार्णवः 42/25
29. आत्मलाभमथासाद्य शुद्धिं चात्यन्तिकीं पराम्।
प्राप्नोति केवलज्ञानं तथा केवलदर्शनम्।। -ज्ञानार्णवः, 42/30
30. ज्ञानार्णवः 42/41-51
31. सर्वज्ञः क्षीणकर्मासौ केवलज्ञानभास्करः।
अन्तर्मुहूर्तशेषायुस्तृतीयं ध्यानमर्हति।। ज्ञानार्णवः 42/41

सूक्ष्मकाययोगे स्थैर्यं सम्पाद्य क्षणमात्रेणैव तत्क्षण एव वचनयोग-मनोयोगयोः निग्रहणं करोति। तदाऽसौ जीवः एतद्ध्यानं कर्तुं योग्यो भवति। अत्रासौ सूक्ष्मैककाययोगे स्थितः सन् तस्य ध्यानं करोति।

अस्मिन् ध्याने तेषां जीवानामवश्यं समुद्घातो भवति ये षण्मासपरिमिते उत्कृष्टायुषि अवशिष्टे केवलिनो भवन्ति। अवशिष्टानां केवलिनां समुद्घातो वैकल्पिकोऽस्ति। ते समुद्घातं विनैव योगनिरोधं कृत्वा एतद्ध्यानं कर्तुमर्हन्ति।[32]

## (घ) (समुच्छिन्नक्रिया) व्युपरतक्रियानिवृत्तिशुक्लध्यानस्वरूपम्–

सूक्ष्मक्रियाऽप्रतिपातिध्यानानन्तरं केवलिनः समुच्छिन्न क्रियानिवृत्तिध्यानं प्रारभन्ते। अत्र सर्वविधैरपि योगैः उत्पद्यमानानाम् आत्मप्रदेशानां परिस्पन्दक्रियाणाम् उच्छेदेन इदं समुच्छिन्नक्रियानिवृत्ति-शुक्लध्यानं कथ्यते। इदं ध्यानं चतुर्दशे गुणस्थाने भवति। अस्य ध्यानस्य प्रारम्भे केवलिनः द्वासप्ततिः प्रकृतीः अन्ते च त्रयोदश प्रकृतीः नाशयन्ति। उक्तञ्च–

**द्वासप्ततिर्विलीयन्ते कर्मप्रकृतयो द्रुतम्।**
**उपान्त्ये देवदेवस्य मुक्तिश्रीप्रतिबन्धकाः।।**

**तस्मिन्नेव क्षणे साक्षादाविर्भवति निर्मलम्।**
**समुच्छिन्नक्रियं ध्यानमयोगिपरमेष्ठिनः।।**

**विलयं वीतरागस्य पुनर्यान्ति त्रयोदश।**
**चरमे समये सद्यः पर्यन्ते या व्यवस्थिता।।**[33]

अस्मिन् अयोगकेवलिगुणस्थाने केवलिनः निर्मलाः निष्कलङ्काः निरामयाः जन्ममरणरूपेभ्यः सांसारिकानेकदुर्निवारबन्धकष्टेभ्यो वर्जिताः भवन्ति। चारित्रपूर्णाः अनन्तवीर्यवन्तश्च भवन्ति। आत्मानं पश्यन्

---

32. षण्मासायुषि शेषे संवृत्ता जिनाः प्रकर्षेण।
ते यान्ति समुद्घातं शेषां भाज्याः समुद्घाते।। ज्ञानार्णवः, 42/42

33. ज्ञानार्णवः 42/52–54

ज्ञानगुणोत्कृष्टतासम्पन्नाः भवन्ति अस्य गुणस्थानस्य कालस्तावन्मात्रोऽस्ति यावत् **'अ इ उ ऋ लृ'** इति पञ्चलघ्वक्षराणामुच्चारणकालो भवति। अनन्तरं कर्मबन्धहीनोऽयं शुद्धात्मा स्वभावेन ऊर्ध्वं गत्वा लोकाग्रे स्थितो भवति।[34]

वज्रवृषभनाराचसंहननसम्पन्नस्य द्वादशाङ्गचतुर्दशपूर्वज्ञस्यैव शुक्लध्याने योग्यता वर्तते।[35] आदिमे द्वे ध्याने छद्मस्थानां वर्तते, एते श्रुतधारकाः भवन्ति। एतेषु श्रुतज्ञानपूर्वकं पदार्थानामालम्बनं भवति। अन्ते च द्वे शुक्लध्याने केवलिनो भवतः, एते सर्वविधालम्बनवर्जिताः भवन्ति।[36] स्त्रीणां शुक्लध्यानं न भवति। यतः तासां चित्तं शुद्धं न भवति स्वभावेन च शिथिलपरिणामास्ताः सन्ति। प्रतिमासं रक्तस्रावचिन्तया शङ्काकुलाः तिष्ठन्ति।[37] अतः स्त्रियः पञ्चमगुणस्थानादूर्ध्वं गन्तुं नार्हन्ति। प्रथमशुक्लध्यानस्य फलत्वेन संवर-निर्जरयोः अमरसुखस्य च प्राप्तिर्भवति किन्तु मुक्तिर्न लभ्यते। द्वितीयध्यानस्य फलत्वेन त्रिघातिककर्मणां नाशो भवति। तृतीयशुक्लध्याने मनोवाक्काययोगान् निरुध्य तेषां नाशः क्रियते चतुर्थध्याने च शैलेषी- अवस्थायाः काले क्षीणे सति सर्वकर्मशून्योऽयं जीवः एकस्मिन्नेव काले सिद्धावस्थां लभते।

शुक्लध्यानं ध्यानस्य सर्वोच्चकोटिर्वर्तते। अनेन साधकः स्वलक्ष्यभूतं मोक्षं प्राप्य आत्मसुखे लीनो भवति। शुक्लध्यानं प्राप्य सिद्धावस्थायां लीनता एव साधकस्यान्तिमलक्ष्यं वर्तते।

सिद्धाः (परमात्मा) खलु त्रिष्वपि लोकेष्वूर्ध्वं तिष्ठन्ति। प्रत्येकमात्मा ध्यानेन परमात्मा भवितुं शक्यते। इदमस्ति जैनानां दृढ़विश्वासः। स शाश्वतज्ञान सुखसमृद्धः, पुण्य-पापादिभिरप्यनिर्लिप्तः निर्मलध्यानादेव प्राप्यः।

---

34. ज्ञानार्णवः 42/55-59
35. आदिसंहननोपेतः प्रशान्तः पुण्यचेष्टितः।
चतुर्विधमपि ध्यानं स शुक्लध्यातुर्महति।। ज्ञानार्णवः 42/5
36. श्रुतज्ञानार्थसम्बन्धाच्छ्रुतालम्बनपूर्वके।
पूर्वे परे जिनेन्द्रस्य निःशेषालम्बनच्युते।। ज्ञानार्णवः 42/8
37. चित्ता सोहिण तेसिं ढिल्लं भावं तद्य सहावेण।
विज्जदि मासा तेसिं इत्थीसु ण संकया झाणा।-सूत्र पाहुड, 26

विश्वञ्च तस्य ज्ञाने विद्यते, सर्वस्यापि ज्ञायकत्वात्। त एतेऽनेके परमात्मानः परस्परमभिन्नाः नत्विन्द्रियगम्याः, नापि केवलेन शास्त्राभ्यासेनैव ज्ञातुं शक्यः अपितु केवलं ध्यानगम्याः, एते ब्रह्म-परब्रह्म शिवशान्तेत्याद्यपरनामकाः सन्ति।

# सांख्यनये प्रत्यक्षप्रमाणविमर्शः

डॉ. रविशंकरशुक्लः

भारतीयषडास्तिकदर्शनशास्त्रेषु सांख्ययोगदर्शनस्य विशिष्टं स्थानं वर्तते। सर्वाणि दर्शनशास्त्राणि प्रमाणस्य निरूपणं कुर्वन्ति। शास्त्रस्य अतः तत्तद् दर्शनेषु प्रमाणविचारो भवति। प्रमाणं विना कस्यापि वस्तुनः सिद्धिः न भवतीति तत्त्वदर्शीभिराचार्यैः उच्यते, अतः प्रमाणविचारो सर्वैरेव दर्शनशास्त्रैः क्रियते। किं किं विषयमवलम्ब्य शास्त्राणि निरूपितानि सन्तीतिप्रसङ्गे एषा पङ्क्तिः स्मर्यते। 'पदवाक्यप्रमाणपारावारीणाः' भावार्थञ्च द्योतयति पदविद्या व्याकरणम्, वाक्याविद्या वेदान्तमीमांसा-सांख्ययोग-शास्त्राणि च प्रमाणविद्या न्यायशास्त्रम्। तत्र प्रमाणप्रसङ्गे सांख्ययोगदर्शनानुसारेण प्रमाणस्वरूपं विविच्यते-

तच्च 'दृष्टमनुमानमाप्तवचनं' चेति 'दृष्टम् प्रत्यक्षम्, अनुमानं परामर्शः आप्तवचनं शब्दप्रमाणमिति। इमानि च लौकिकप्रमाणानीति। आर्षं तु योगिनामूर्ध्वरेतसां विज्ञानं सदपि लोकव्युत्पादनाय नाऽलं भवतीति नाभिहितम्। अधिकानां प्रमाणानां सर्वप्रमाणसिद्धत्वात् त्रिविधप्रमाणेष्वेवाऽन्त-र्भावात् त्रिविधमेवेष्टमिति। यतः प्रमेयसिद्धिः प्रमाणाद्धि तथा च प्रमेयमुत्पादनाय प्रवृत्तस्य शास्त्रस्य सामान्यतो विशेषतश्च प्रमाणनिरूपणेऽपि नाऽसङ्गतिरिति।

अभिहितं प्रमाणसामान्यस्वरूपं सम्प्रति तद् विशेषरूपेण विवेचनीयं तत्र च सर्वप्रमाणेषु ज्येष्ठत्वात्तदुपजीवकत्वाच्चाऽनुमानादीनां, यावतां वादिनामविप्रतिपत्तेश्च प्रथमं प्रत्यक्षमेव लक्षयन्ननुमानं शब्दञ्च लक्षयति।

**प्रतिविषयाऽध्यवसायो दृष्टं, त्रिविधमनुमानमाख्यातम्।**
**तल्लिङ्गलिङ्गिपूर्वकम्, आप्तश्रुतिराप्तवचनन्तु॥**

---

1. सांख्यकारिका।

दृष्टं प्रत्यक्षं तस्य लक्षणं प्रतिविषयाध्यवसायत्वमिति, विसिन्वन्ति विषयिणं ज्ञानमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः, त्रिगुणानां साम्यावस्थात्मकप्रकृतिभिन्नाश्चेतनबुद्ध्यादयः सूक्ष्माः, पृथिव्यादयश्च स्थूला यावन्तो विषया भवन्ति, तत्र स्थूलास्त्वस्मदादीनां विषयाः, सूक्ष्माश्च योगिनामूर्ध्वस्त्रोतसाञ्च विषया इति। विषयं विषयं प्रति वर्तते तत्प्रतिविषयम् इन्द्रियम्, वर्तते इति पदघटकवृतुधात्वर्थरूपा वृत्तिः सन्निकर्ष एव, तथा चाऽर्थसन्निकृष्टमिन्द्रियमित्यर्थः। तस्मिन्नध्यवसायस्तदाश्रितः, अध्यवसायो नाम-तमसः पराभवे सति बुद्धौ सत्त्वस्वभावान्निर्मला ज्ञानरूपा बुद्धिवृत्तिर्जायते, सा प्रमाणरूपा। तथा च विषयसन्निकृष्टेन्द्रियजन्यबुद्धिवृत्तिः प्रत्यक्षं प्रमाणमिति फलितम्।

# जैनदर्शने ध्यानस्य स्वरूपं वैशिष्ट्यञ्च

डॉ. कुलदीपकुमारः

भारतीयसंस्कृतौ ध्यानस्य महत्त्वं वर्तते। सर्वेषु भारतीयदर्शनेषु ध्यानस्य वैशिष्ट्यं दरीदृश्यते। प्रकृतप्रपत्रे जैनदर्शनानुसारं ध्यानस्य वैशिष्ट्यं निरूप्यते। जैनदर्शने इतरभारतीयदर्शनवन्मोक्ष एव परमलक्ष्यमिति स्वीकृतम्। मोक्षप्राप्त्युपायत्वेन ध्यानस्य विस्तृतं विवेचनं जैनसाहित्ये कृतं वर्तते।

प्राकृतसाहित्ये ध्यानशब्दस्य 'झान' अथवा 'झाण' इति प्रयोगः उपलभ्यते। आवश्यकनिर्युक्तिग्रन्थे ध्यानस्य स्वरूपं निरूपितं यत् **'अंतोमुहुत्तकालं चित्तस्सेकग्गया हवइ झाणं[1] इत्युक्तम्।''** अस्यार्थः कस्मिंश्चित् एकस्मिन् लक्ष्ये मुहूर्तं यावत् चित्तस्यैकाग्रता। तत्त्वार्थसूत्रेऽपि **'एकाग्रतया चिन्तनस्य निरोधः ध्यानमिति निरूपितम्।'[2]** सर्वार्थसिद्धौ पूज्यपादाचार्यैः **'निश्चलाग्निशिखावत् अवभासमानं ज्ञानमेव ध्यानमिति'** निरूपितम्। ध्यानशतके **'स्थिराध्यवसायः ध्यानमित्युक्तम्।'[3]** अतः चित्तस्यैकाग्रता एव ध्यानमिति वक्तुं शक्यते।

अस्य ध्यानस्य चत्वारि अङ्गानि प्रथितानि सन्ति। यथा–**'ध्याता ध्येयं, ध्यानं, ध्यानफलञ्चेति।'[4]** तत्र ध्यानस्य कर्ता ध्याता भवति। ज्ञानार्णवे ध्यातुः अष्टौ आवश्यकगुणाः प्रोक्ताः। यन्मुमुक्षुत्वं, संसारविरक्तत्वं, क्षोभरहितत्वं, शान्तचित्तत्वं, वशित्वं, स्थिरत्वं, जितेन्द्रियत्वं, संवृत्तत्वञ्चेति।

---

1. आवश्यकनिर्युक्तिः, गाथा 1463
2. 'एकाग्रचित्तनिरोधो ध्यानम्', तत्त्वार्थसूत्रम् 9/27
3. 'जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्तं। ध्यानशतकम्, गाथा 61
4. ''ध्याता ध्यानं तथा ध्येयं फलं चेति चतुष्टयम्।
   इति सूत्रसमासेन सविकल्पं निगद्यते।। ज्ञानार्णवः, 415

ध्येयं नाम अवलम्बनं यस्य ध्यानं क्रियते तत् ध्येयमित्युच्यते। स्थूलतः प्रशस्ताप्रशस्तभेदेन ध्यानं द्विविधं भवति। तत्र विरक्तभावेन वस्तुस्वरूपचिन्तनं यत्र भवति तत् प्रशस्तध्यानं इत्युच्यते। यत्र तु रागद्वेषमोहयुक्ताप्रवृत्तिस्तदप्रशस्तध्यानं कथ्यते। पुनश्च अप्रशस्तध्यानम् आर्त्तध्यानरौद्रध्यानरूपेण द्विविधं भवति। प्रशस्तध्यानस्य तु धर्मशुक्लभेदेन भेदद्वयम्। अप्रशस्तध्यानस्य हेयत्वात् तद्भेदौ न विचार्येते। प्रशस्तध्यानभेदयोर्मध्ये धर्मध्यानं चतुर्विधं भवति–आज्ञाविचयः, अपायविचयः, विपाकविचयः, संस्थानविचयश्चेति। धर्मध्यानस्य चतस्रः अनुप्रेक्षाः सन्ति–एकत्वानुप्रेक्षा, अनित्यानुप्रेक्षा, अशरणानुप्रेक्षा, संसारानुप्रेक्षा। तत्र एकत्वानुप्रेक्षायामेकान्ततायाः चिन्तनं करणीयं येन अहङ्कारो नश्यति अनित्यानुप्रेक्षायां पदार्थानाम् अनित्यतायाः चिन्तनं करणीयं येन ममत्वस्य नाशो भवति। अशरणानुप्रेक्षायां सर्वेषां पदार्थाणामशरणत्वं चिन्तनीयं यदि शरणं किञ्चिदस्ति तर्हि तदेकमात्रं जिनेन्द्रवचनमेव। संसारानुप्रेक्षायां तु संसारस्य मिथ्यात्वादितीव्रोदयात् दुखितस्य परिभ्रमणं चिन्तनीयम्। इदं .धर्मध्यानं जीवेभ्यः अत्यन्तं निर्वेदं संसारभोगादिभ्योऽत्यन्तं वैराग्यं वा विवेकोत्पन्नं स्वात्मनि अनुभाव्यम् इन्द्रियातीतं सुखञ्च अधिगमयति। स्वर्गादिषु ग्रैवेयकानुदिशसर्वार्थसिद्ध्यादीनां प्राप्तिर्भवति। तदनु च उत्तममनुष्यस्य सुखं भुक्त्वा पुनरपि भेदज्ञानमवलम्ब्य संसारस्य परिभ्रमणाद् विरक्तो भूत्वा सम्यग्दर्शनज्ञानचारित्ररूपरत्नत्रयं सन्धार्य दुःसाध्यं तपः तप्त्वा यथाशक्तिधर्मध्यानं शुक्लध्यानं सन्धार्य अविनाशिमोक्षपदं लभते। अतः धर्मध्यानं परम्परया मोक्षहेतुः वर्तते।

चित्तस्य उपाधिरहितस्वाभाविकीपरिणतिः यत्र भवति तत् शुक्लध्यानमित्युच्यते। इदं ध्यानस्य चरमावस्था भवति एकाग्रतानिरोधश्चात्र पूर्णतामापद्येते निष्क्रियः इन्द्रियातीतः ध्यान–धारणा–विधिना–अन्तर्मुखिनिमनोवृत्तिः अस्यामवस्थायां भवति यथोक्तम्–

**निष्क्रियं करणातीतं ध्यानधारणवर्जितम्।**
**अन्तर्मुखं च यच्चित्तं तच्छुक्लमिति पठ्यते।।**[5]

---

5. चारित्रसारः, 169/1

अस्यापि चत्वारो भेदाः भवन्ति। ते यथा–पृथक्त्ववितर्कवीचारः, एकत्ववितर्कवीचारः सूक्ष्मक्रियाऽप्रतिपाती, व्युपरतक्रियानिवृत्तिश्चेति।

पृथक्त्ववितर्कसवीचारशुक्लध्यानं शुक्लध्यानस्य प्रथमं चरणं वर्तते। अत्र पृथक्-पृथक्तया श्रुतस्य विचारः संक्रमणं वा भवति। अनेन ध्यानेन योगी स्वमोहकर्मणः क्षयमुपशमं शीघ्रं करोति। ततश्च एकत्वध्यानयोग्यो भवति।

एकत्ववितर्कवीचारध्यानं शुक्लध्यानस्य द्वितीयचरणं भवति। अस्मिन् योगी खेदहीनः सन् एकमेव द्रव्यमणुं पर्यायं वा एकेनैव ध्यायति। इदमत्यन्तं निर्मलं भवति। अत्र संक्रमणमवरुद्धं भवति। अनेन योगेन साधकोऽवशिष्टघातिकर्माणि विनाश्य उत्कृष्टशुद्धतां प्राप्य केवलज्ञानं केवलदर्शनञ्च लभते। यथा–

**आत्मलाभमथासाद्य शुद्धिं चात्यन्तिकीं पराम्।**
**प्राप्नोति केवलज्ञानं तथा केवलदर्शनम्।।**[6]

सूक्ष्मक्रियाऽप्रतिपातीध्यानं शुक्लध्यानस्य तृतीयं चरणं भवति। अस्यामवस्थायां काययोगस्य सूक्ष्मीकरणं भवति। यदा अरिहन्तस्यायुः कर्म अन्तर्मुहूर्तपरिमितम् अवशिष्यते अपरेषाञ्च त्रयाणां कर्मणां स्थितिः अधिका भवति तदा स्वत एव समुद्घातविधिः प्रारभते। असौ केवली क्रमशः दण्डकपाटप्रतरेति क्रियात्रयं त्रिषु कालेषु कृत्वा चतुर्थे काले समस्तलोकं पूरयति। वेदनीयं नाम गोत्रस्थितिं च आयुःकर्मसमं विघातं चतुर्षु कालेषु क्रमशः लोकपूरणप्रतरकपाटदण्डरूपां भूत्वा आत्मप्रदेशान् शरीरवत् करोति। तदनु काययोगे स्थिरतां प्राप्य बादरवचनयोगं बादरमनोयोगञ्च सूक्ष्मीकरोति, ततश्च सूक्ष्मक्रियायोगे स्थैर्यमधिगम्य बादरकर्मयोगं सूक्ष्मं करोति, ततश्च सूक्ष्मकाययोगे स्थैर्यं सम्पाद्य क्षणमात्रेणैव तत्क्षण एव वचनयोगमनोयोगयोः निग्रहणं करोति। तदाऽसौ जीवः एतद्ध्यानं कर्तुं योग्यो भवति। अत्रासौ सूक्ष्मैककाययोगे स्थितः सन् तस्य ध्यानं कथ्यते।

---

6. ज्ञानार्णवः, 39/26, आचार्यशुभचन्द्रः, जैनसंस्कृतिसंरक्षकसंघः, सोलापुरम् (महाराष्ट्रः)

शुक्लध्यानेनान्तिमं चरणं भवति व्युपरतक्रियानिवृत्तिरिति अत्र सर्वविधैरपि योगैः उत्पद्यमानानामात्मप्रदेशानां परिस्पन्दक्रियाणामुच्छेदो भवति। इदञ्च ध्यानं चतुर्दशे गुणस्थाने भवति। एतदारम्भे केवलिनः द्वासप्ततिः अन्ते च त्रयोदशप्रकृतीः नाशयन्ति। अपि च ते निर्मला निष्कलङ्काः, निरामयाः, जन्ममरणादिसांसारिकबन्धकष्टेभ्यः वर्जिताः भवन्ति। अत्र जीवः सिद्धावस्थां लभते। शुक्लध्यानं प्राप्य सिद्धावस्थायां लीनता एव साधकस्य अन्तिमलक्ष्यं वर्तते। ततश्च साधकः स्वलक्ष्यभूतं मोक्षं प्राप्य आत्मसुखे लीनो भवति। एवं जैनपरम्परायां ध्यानस्य स्वरूपं वैशिष्ट्येन निरूपितम्।

# सांख्ययोगयोः धारणास्वरूपम्

डॉ. मारकण्डेयनाथतिवारी

पातञ्जलयोगदर्शनस्य साधनपादेऽष्टाङ्गयोगानां वर्णनं विद्यते। एतेषां योगाङ्गानामभ्यासेन विवेकख्यातिर्जायते। तेष्वङ्गेषु धारणा-ध्यान-समाधिरूपाणि विवेकख्यातौ साक्षात्सहायकत्वादान्तरिकसाधनान्युच्यन्ते। यम-नियमौ योगप्रतिबन्धकान् हिंसावितर्कादीन् समूलं निरस्य समाधिं साधयतः। अन्यानि च त्रीण्यङ्गान्युत्तरोतरं सहायकानि भवन्ति। एतेषां योगाङ्गानामभ्यासेनान्तः-करणं निर्मलं सत् स्वरूपबोधसमर्थं जायते। एतेषां योगाङ्गानां सिद्धयेऽभ्यासवैराग्ये परमावश्यके। अभीष्टे वस्तुनि चित्तस्य स्थिरीकरणमेव धारणापदेनोच्यते योगदर्शने। बाह्ये वस्तुनि सूर्य-चन्द्र-दीप-शरीरप्रभृतिषु चित्तस्य स्थिरीकरणानन्तरमान्तरविषयेष्वप्यभासो विधीयते। तन्मात्रेन्द्रियमनस्तु धारणवतो जनस्य समाधिलाभः सुनिश्चितः।

यमनियमासनप्राणायामैर्बहिर्जगद् विजित्यान्तरे जगति विचरणेच्छावता प्रत्याहारपूर्वकं धारणा साधनीयेति योगशास्त्राभिमतं मतम्। किं च 'यमनियमादिबीजरूपतः प्रादुर्भूतः क्रियायोगस्वरूपो महान् कल्पवृक्षः। आसन-प्राणायामास्तदङ्कुराः। प्रत्याहारादयश्च कुसुमानि। धारणाध्यानप्रभृतीनि तत्फलानीति' दृष्ट्या धारणा योगवृक्षस्य फलमित्यपि साध्यते। समाधि प्रवेशे प्रथमं द्वारं च धारणा। एवमियं धारणा देशेऽन्तर्जगति स्थानविशेषे चित्तस्य स्थापनाद् धारणाद् धारणेत्युच्यते।[1] मनसश्चाञ्चल्यनिरोधाय समाधेः प्रथमा क्रिया प्रत्याहारेण साध्यते ततः परं मनः प्रत्याहारकारणादितस्ततः पलायते निश्चितं विषयं परिहाय विभिन्नानामन्येषां विषयाणां चिन्तनं करोति।

---

1. देशबन्धश्चितस्य धारणा, 3/1 (पातञ्जलयोगसूत्रे)

तदा साधकस्येदं कर्तव्यं भवति यत् तन्मनः पुनराकृष्य निश्चिते वस्तुनि स्थापयेत्। भूयोभूय एवं करणात् मनो विषये एकस्मिन् ध्याने तिष्ठति किं वा प्रदत्तं विषयं गृहीतुं शिक्षते तदा धारणासिद्धिर्भवति।

धारणया अन्योऽर्थो विकसिता मानसिकी शक्तिरित्यस्ति। धारणापदेन संयमार्थोऽपि गृह्यते। अतश्चेतस एकाग्रतोपायो धारणेत्यपि गम्यते। इयं धारणा प्रथमाधिकारहितसाधनार्थं बहिर्वस्तुषु अभ्यस्यमाना बाह्यधारणा। अन्तर्जगद्वस्तुषु अभ्यस्यमाना चान्तरधारणेत्युच्यते। योगशास्त्रोक्ताद् ईश्वरप्रणिधानाद् वा तस्य वाचकः प्रणवः तज्जपस्तर्थभावनमित्यादि सूत्राणि विमृश्य-विमृश्यैव तन्त्रशास्त्रेषु बाह्यान्तर्धारणयोः साधनाविधानं बहुधा प्रतिपादितम्।

चित्तस्यैकाग्रतासाधनभूतानि च-'आसन-नादानुसन्धान-शून्य-दृष्टि-प्राणायाम-अन्तर्मौन-अजपाजप-बिन्दुधारणा-पञ्चतत्त्वधारणा-स्वप्न-निद्रा प्रभृतिभिर्मन्यन्ते। एतेषामेव वास्तविकी प्रक्रिया तन्त्राणि निर्दिशन्ति। तस्यां प्रक्रियायां बाह्यधारणार्थं यन्त्रप्रतिमादयः सन्ति। तेषां पूजनार्थं व्यवह्रियमाणानि पूजोपकरणानि नानाविधा उपचाराश्च धारणामाध्यमेनैव सिद्धिमार्गं परिष्कुर्वन्ति। बाह्यधारणार्थं यावन्ति साधनानि तन्त्रेषु प्रदर्शितानि सन्ति तावन्त्यन्यत्र कुत्र भविष्यन्ति? उपकरणानामनेकधात्वं प्रत्येकमुपकरणस्य फलविशेषत्वं प्रदर्शयन्ति तन्त्रशास्त्राणि पारेजलधिं नयन्ति। आसनानां मालानां च वैविध्यं धारणामेवावलम्बते। परः सहस्रं यन्त्राकृतयः, परः सहस्रं प्रतिमाः, परःसहस्रं मन्त्राश्च धारणारूपैणेव साध्यभावान् व्रजन्ति।

आन्तरधारणायास्तु ततोऽप्यधिको विस्तारः। भावनाबलेन शरीरेऽन्तश्चक्रभावनां प्रतिपादयन्त्या भावनोपनिषदा नवरन्ध्ररूपात्मकस्य देहस्य नवचक्ररूपात्मकता या साधिता विद्यते सा धारणैव। श्रीमता भास्कररायेण तासामेव भावनानां प्रयोगविधिरप्युक्तः। तत्र मांस-त्वग्-शुक्रास्थि-ओजो-रोम-रूधिरमज्जामेदसां द्वीपात्मकत्वं, पुनस्तेषामधिदेवतारूपत्वं प्रत्येकमिन्द्रियाणामनु-सन्धानविषयश्च परमविस्तरेण निर्दिष्टः। सोऽयं महायागक्रमो यौगिक्या धारणाया एव विषयः। संयमः तस्य साधनायां तु अन्तर्यागात्मिकैव पूजा सम्मता। यस्यां हृत्कमलमेव सर्वं यावदनुष्ठेयं विद्यते। अस्या उपासनाया

लक्ष्यं मूलाधारप्रसुप्तायाः कुण्डलिन्या योगविधिना प्रबोधनं कृत्वा सहस्रारस्थितेन शिवेन सह सामरस्यमेतत्सम्भाव्यते।

सहस्रारमध्ये चतुष्कोणात्मकं चन्द्रमण्डलमेव समयिनां बिन्दुस्थानं तत्रैवान्तरपूजा विधीयते। तदेव सर्वानन्दमयं चक्रम्। 1. सकल2. सकल-निष्कल 3. निष्कलरूपेण चक्रभावनं कृत्वैव कुण्डलिनी योगप्रक्रियया प्रबोधने मूलाधारादिषण्णां चक्राणां तद्गतानां तन्मात्राणां वेधनमारोहक्रमेणावरोहक्रमेण वा यद् विधीयतं तत्र प्रत्येकं तद्गतानां तन्मात्राणां वेधनमारोहक्रमेणावरोहक्रमेण वा यद् विधीयते तत्र प्रत्येकं क्रमे बीजानां मन्त्राणां जपस्य परम्परा तन्त्रशास्त्राधारेणैव भवति।

# दर्शनेषु प्रत्यक्षप्रमाणविमर्शः

प्रो. एस्.एन्. रमामणिः

प्रमाणमेवासाधारणं करणं भवति वस्तुतः प्रमितेरुत्पत्तौ। अत एव सांख्याचार्यैरीश्वरकृष्णेनोक्तं सांख्यकारिकायाम्– प्रमेयसिद्धिः प्रमाणाद्धि।[1] वैशेषिकदर्शने प्रत्यक्षानुमानभेदेन द्विविधमेव प्रमाणं प्रामुख्येन स्वीकृतं विद्यते। उपस्कारग्रन्थे प्रशस्तपादभाष्ये चोक्तम्– प्रमाणं द्विविधं-प्रत्यक्षं लैङ्गिकञ्च।[2] तत्र नैयायिकाद्यभिमतशब्दोपमानयोः अनुमानेऽन्तर्भावो भवति।[3] प्रशस्तपादाचार्योऽपि प्राह– शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात्।[4]

महर्षिगौतममते चत्वारि प्रमाणानि–"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति[5] सूत्रम्। तेषां मते बुद्धिर्द्विविधा, अनुभूतिस्मृतिभेदात्।[6] अनुभूतिरपि चतुर्विधा। प्रत्यक्षानुमित्युपमितिशाब्दभेदात्।[7] विश्वनाथः कारिकावल्यां निगदति–

**विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा।।**[8]

प्रत्यक्षलक्षणं विदधता महर्षिगौतमेन प्रोक्तम्–"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति।[9] अस्यामाशयः इन्द्रियार्थसन्निकर्षेण जायमानं भ्रमभिन्नं पदवाच्यत्वाविषयकं व्यवसायात्मकं

---

1. सांख्यकारिका - का. सं. -4
2. शब्दोपमानयोर्नैवपृथक् प्रामाण्यमीष्यते-कारिकावली-40
3. प्रशस्तपादभाष्यम् प्रमाणप्रकरणम्।
4. प्रशस्तपादभाष्यम्।
5. न्यायसूत्रम् - 1.1.3
6. प्रशस्तपादभाष्यम् - पृ. 94
7. प्रत्यक्षानुमित्युपमितिशाब्दानुभूतिरिति।
8. कारिकावली- का. सं. - 51
9. न्यायसूत्रम् - 1.1.4

विशिष्टज्ञानात्मकं प्रत्यक्षं भवति। इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वमिति प्रत्यक्षस्य लक्षणम्। अथ चाव्यपदेश्यं नाम जात्यादियोजनारहितम्। एवं व्यवसायात्मकं विशिष्टज्ञानमिति प्रत्यक्षभेदः प्रदर्शितः। त्वङ्मनःसंयोगः ज्ञानसामान्ये करणम्, अतः सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा न किमपि ज्ञानं जन्यते। त्वङ्मनःसंयोगस्य तदानीमभावात् सुषुप्त्यवस्थायां ज्ञानसामान्यजनकसामग्र्या अभावाद् विशेषज्ञानजनने च तत्तदिन्द्रियमनःसंयोगः कारणम्।

जाग्रति स्वप्ने च विषयेन्द्रियेण सह त्वङ्मनःसंयोगस्य सर्वदा विद्यमानत्वेऽपि विषयेन्द्रियेण सह त्वङ्मनःसंयोगस्याभावान्न प्रत्यक्षम्। तथा च आत्मा मनसा युज्यते, मनः इन्द्रियेण इन्द्रियञ्च विषयेण साकं सम्बद्ध्यते, तदैव प्रत्यक्षं भवति नान्यथा। सर्वत्र बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपं कारणम्। यतोऽहि त्रयाणामेव स्पर्शवतां पृथिव्यप्तेजसां प्रत्यक्षस्य स्वीकारात्। सर्वत्र बहिरिन्द्रिय- प्रत्यक्षे रूपमेव कारणम्, एतन्मते वायोः परिज्ञानं स्पर्श-शब्द-धृति- कम्पनादिलिङ्गैरनुमानैरेव जायते। न तु वायुः प्रत्यक्षः। चिन्तामणिकारस्तु बहिरिन्द्रियजन्यप्रत्यक्षे न रूपं न वा स्पर्शः कारणम्। किन्तु चाक्षुषप्रत्यक्षे रूपं कारणम्। रूपसत्त्वे एव चाक्षुषप्रत्यक्षस्य जायमानत्वात्। एवं त्वाचप्रत्यक्षे स्पर्शः कारणम्। इत्येवं पृथक् पृथगन्वयव्यतिरेकबलात् कार्यकारणभावः स्वीकर्तव्यः। अत्रेदं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे अनुगतं किं कारणम्? तत्र नव्याः एवं प्रतिपादयन्ति यत्—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे नास्ति किमपि कारणम्। अपितु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति आत्मावृत्ति-शब्दभिन्नविशेषगुणवत्त्वमेव प्रयोजकम्[10]। यत्र आत्मावृत्तिशब्दभिन्नविशेष-गुणवत्त्वं न तिष्ठति तस्य बहिरिन्द्रियेण प्रत्यक्षमपि न जायते। अत्र आत्मावृत्तिपृथिव्यादिचतुष्टवृत्तिविशेषगुणाः रूपादयः तद्वत्त्वस्य पृथिव्यादिचतुष्टये विद्यमानतया भवति तेषां प्रत्यक्षत्वम्। अथ च घ्राणजादिषड्विधप्रत्यक्षे महत्परिमाणं क्वचित्समवायसम्बन्धेन क्वचिच्च परम्परया कारणं भवति[11]।

10. तर्कसंग्रहसर्वस्वम्।
11. घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम्।

लौकिकविषयतासम्बन्धेन जन्यप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य कारणता अभ्युपगता विद्यते। चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति आलोकसंयोगः उद्भूतरूपञ्च कारणम्। तयोर्द्रव्यप्रत्यक्षे समवायसम्बन्धेन कारणता। द्रव्यसमवेतसमवेत-रूपत्वादिप्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणता। अत्रेयमाशङ्का जायते यत् द्रव्यप्रत्यक्षे आलोकसंयोग-उद्भूतरूपयोः कारणतायां किं प्रमाणम्? अत्रोच्यते– यदि आलोकसंयोगो द्रव्यप्रत्यक्षे कारणं न स्यात् तदा अन्धकारे-ऽपि घटादीनां चाक्षुषप्रत्यक्षं स्यात्। एवमेव यदि उद्भूतरूपं द्रव्यप्रत्यक्षे कारणं न स्यात् तदा पिशाचादीनामपि प्रत्यक्षं स्यात्। एवं त्वाचप्रत्यक्षे उद्भुतरूपस्य कारणत्वेन यत्किमपि वस्तु चक्षुषा गृह्यते तेषां प्रत्यक्षं त्वचापि जायते, किन्तु चक्षुर्ग्राह्या ये रूपरूपत्वरूपाभावरूपत्वाभावाः ते न त्वचो ग्राह्याः। अपितु एतद्भिन्नाः ये चक्षुरिन्द्रियग्राह्याः पदार्थाः सन्ति तेषां ग्रहणं त्वगिन्द्रियेणाऽपि जायते।

इन्द्रियेण प्रत्यक्षे जननीये संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवाय-समवायसमवेतसमवायविशेषणविशेष्यभावभेदेन षड्विधः सन्निकर्षोऽपेक्षितः। तत्र द्रव्यप्रत्यक्षे चक्षुरादीन्द्रियसंयोगकारणम्। एवं द्रव्यसमवेतगुणजात्यादि-प्रत्यक्षे संयुक्तसमवायः, द्रव्यसमवेतसमवेतजात्यादिप्रत्यक्षे, संयुक्तसमवेत-समवायसन्निकर्षः। एवं शब्दप्रत्यक्षं श्रोत्रसमवायेन, शब्दवृत्तिशब्दत्वादीनाञ्च प्रत्यक्षं श्रोत्रसमवेतसमवायेन। एवं समवायाभावयोः प्रत्यक्षे स्वरूपसम्बन्धः तथा च घटाभाववद्भूतलमित्यत्र घटाभावस्य प्रत्यक्षता स्वसंयुक्तविशेषणता-सम्बन्धेन भवति। भूतले घटाभाव इत्यत्र स्वसंयुक्तविशेष्यतासम्बन्धेन घटाभावस्य प्रत्यक्षता जायते। घटाभाववद्रूपमित्यत्र घटाभावस्य प्रत्यक्षता स्वसंयुक्तसमवेतविशेषणतासम्बन्धेन भवति घटाभावस्य विशेषणत्वात्। रूपे घटाभाव इत्यत्र घटाभावस्य प्रत्यक्षता स्वसंयुक्तसमवेतविशेष्यतासम्बन्धेन भवति, घटाभावस्य विशेष्यत्वात्। घटाभाववद्रूपत्वमित्यत्र घटाभावस्य प्रत्यक्षता स्वसंयुक्तसमवेतसमवेतविशेषणतासम्बन्धेन जायते। रूपत्वे घटाभाव इत्यत्र घटाभावस्य प्रत्यक्षता स्वसंयुक्तसमवेतसमवेतविशेष्यतासम्बन्धेन भवति। शब्दस्य प्रत्यक्षता समवायसम्बन्धेन भवति एवञ्च शब्दत्वस्य प्रत्यक्षता समवेतसमवायसम्बन्धेन जायते। घटाभाववच्छब्दः इत्यत्र घटाभावस्य प्रत्यक्षता समवेतविशेषणतासम्बन्धेन भवति तथा च शब्दे घटाभावः इत्यत्र स्वसमवेत-

विशेष्यतासम्बन्धेन घटाभावस्य प्रत्यक्षता जायते। घटाभाववच्छब्दत्वमित्यत्र घटाभावस्य प्रत्यक्षता स्वसमवेतसमवेतविशेषणतासम्बन्धेन जायते।

अद्वैतवेदान्ते प्रत्यक्षं द्विविधं भवति, ज्ञानगतप्रत्यक्षं विषयगतप्रत्यक्षञ्च। ज्ञानगतप्रत्यक्षस्य प्रयोजकं प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्यस्याभेदः इति। विषयस्य प्रत्यक्षत्वन्तु प्रमात्रभिन्नत्वम्। प्रत्यक्षस्य विषयस्य प्रत्यक्षज्ञानं चैतन्यमेव, तच्चानादीति। संयोगादिसन्निकर्षाणां विनियोगः इति जिज्ञासाया-मुच्यते–

अयः घटः इत्यत्र घटावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्युत्पादने संयोग सन्निकर्षो भवति। घटगतरूपावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्युत्पादने संयुक्त-तादात्म्यसन्निकर्षस्योपयोगो जायते। घटगतरूपत्वावच्छिन्नचैतन्याभिव्यञ्जक-वृत्त्युत्पादने संयुक्ताभिन्नतादात्म्यसन्निकर्षो भवति। शब्दावच्छिन्नचैतन्याभि-व्यञ्जकवृत्युत्पादने तादाम्यसम्बन्धो भवति। शब्दत्वावच्छिन्नचैतन्याभि-व्यञ्जकवृत्युपादने तादाम्यतादात्म्यसम्बन्धः स्वीक्रियते।

विशेषणतासम्बन्धेन क्वचित् विशेष्यतासम्बन्धेन च अभावस्य प्रत्यक्षं जायते तत्रापि विशेषणतातः पूर्वमिन्द्रियसंयुक्तत्वम् इन्द्रियसमवेतत्वं वा योजनीयम्। यथा घटाभाववद् भूतलमित्यत्र चक्षुः संयुक्ते भूतले घटाभावस्य विशेषणत्वात् चक्षुः संयुक्तविशेषणतासम्बन्धेन भूतलवृत्तिघटाभावस्य प्रत्यक्षं जायते। एवं भूतले घटाभावः इत्यत्र चक्षुःसंयुक्तं भूतलं तत्र विशेष्यो घटाभावस्तत्रस्थघटाभावस्य चक्षुःसंयुक्तविशेष्यतासम्बन्धेन प्रत्यक्षं भवति। क्वचिच्च विशेषणतायाः पूर्वमिन्द्रियसमवेतत्वं विशेषणीयं यथा कादौ स्वत्वाभावस्य श्रोत्रसमवेतविशेष्यतया प्रत्यक्षं भवति। तत्र श्रोत्र-समवेतः कादिः तत्र खत्वाभावस्य विशेष्यत्वात्। इत्थं प्रकारेण यद्यपि विशेष्यता नानाविधा तथा च सन्निकर्षस्य षोढात्वं व्याहन्येत तथाऽपि विशेष्यतात्वेन रूपेण विशेष्यतायाः ऐक्यस्वीकारात् न हि षोढात्वव्याघातः शङ्कनीयः।

मीमांसकमते विधिरेव धर्मे प्रमाणं न तु विध्यतिरिक्तस्य प्रत्यक्षस्य

12. जैमिनिसूत्रम् 1/1/4

धर्मे प्रमाणत्वं सम्भवति। अत एवोक्तं "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्"[12] इति सूत्रेण इन्द्रियाणां विद्यमानेन पदार्थेन सह सन्निकर्षे सति पुरुषस्य यद् घटपटादिविषयकं ज्ञानं जायते तत् प्रत्यक्षम्। अत्र एतादृशलक्षणलक्ष्यं प्रत्यक्षम् इन्द्रियार्थसन्निकर्षेण विद्यमानस्यैव अर्थस्य ग्राहकं भवति। न तु अनागते धर्मे तत् प्रत्यक्षं प्रमाणं भवितुमर्हति। इत्येवं प्रत्यक्षलक्षणं मीमांसादर्शने दृश्यते। अत्र इन्द्रियार्थ-सन्निकर्षजन्यत्वरूपं लक्षणं सुखादिप्रत्यक्षेऽव्याप्तम्। यतस्तत्र सुखादिना साकं चक्षुरादीन्द्रियाणां सन्निकर्षाभावात्, इत्येवं वक्तुं न शक्यते। तत्राऽपि मनःसंयुक्तात्मसमवेतत्वरूपसन्निकर्षस्य कारणत्वात्। अत्रेयमाशङ्का जायते यन्मनसः सद्भावे प्रमाणाभावात् कथं मनःसन्निकर्षजन्यं सुखादिप्रत्यक्षं भवितुमर्हति। अत्रेत्थं प्रकारेण समाधानं कर्तुं शक्यते यत् सुखादिज्ञानमेव मनसः सद्भावे प्रमाणतयाऽभ्युपेयम्। यद्यत् प्रत्यक्षात्मकं ज्ञानं भवति तत्तदिन्द्रियजन्यमेव भवति। यथा– रूपप्रत्यक्षम्। एवमेव सुखादिविषयकमपि प्रत्यक्षात्मकं ज्ञानं केनचित् इन्द्रियेण जन्यमेव स्यात् अपरोक्षज्ञानत्वात्। तथा चानुमानप्रयोगः सुखादिसाक्षात्कारः करणजन्यः साक्षात्कारत्वात्। घटसाक्षात्कारवत् इत्यनुमानेन सुखादिसाक्षात्कारे चक्षुरादेः करणत्वस्य बाधितत्वात्।[13] न तत्र सुखादिसाक्षात्कारे चक्षुरादीनां करणत्वं सम्भवति। अतः सुखादिप्रत्यक्षकरणत्वेन मनसः इन्द्रियत्वं सिद्ध्यति। प्राभाकरास्तु एवं प्रतिपादयन्ति यत् नित्यद्रव्येषु विद्यमानानां विशेषगुणानामुत्पत्तिर्द्रव्यान्तर-संयोगादेव जायते। यथा पार्थिवपरमाणुगतरूपादिविशेषगुणानामात्म-भिन्नाग्निसंयोगादेवोत्पत्तिस्तथैव आत्मगतज्ञानसुखादिविशेषगुणानामुत्पत्तिरपि द्रव्यान्तरसंयोगजन्यैव भविष्यति। मतमिदं न समीचीनम्, शरीरस्य भोगाय-तनत्वात्, भोगस्तावत् सुखदुःखसाक्षात्कारस्तस्यायतनम्।[14] अर्थादात्मनि शरीरावच्छेदेनैव सुखदुःखादिकमुत्पद्यते। एवञ्च शरीरसंयोगादेवात्मनि सुखदुःखोत्पत्तिर्जायते। यतोऽहि शरीरातिरिक्तस्य कस्यापि भोगायतनत्वाभावात्। शरीरस्यैवान्नपानाद्याधारत्वम्, तस्मात् सुखादयः न शरीराद् बहिरुत्पद्यन्ते।

---

13. न्यायसिद्धान्तमुक्तावली– किरणावली टीका।
14. यद् भोगायतनं तदेव शरीरमिति। न्यायबोधिनी।

अतः शरीरसंयोगाद्येव सुखाद्युत्पत्तिसम्भवे न हि द्रव्यान्तरस्य मनसः अनुमानम् सम्भवति। अथैवमपि पार्थिवगुणानामेव स्वोत्पत्तौ द्रव्यान्तरसंयोगापेक्षा दृश्यते न तु द्रव्यमात्रगुणानामुत्पत्तौ तस्य कारणत्वं दृश्यते। तेजःसंयोगस्यैव विशेषगुणोत्पत्तौ कारणत्वं दृश्यते न तु द्रव्यमात्रसंयोगस्य कारणत्वं दृश्यते। तस्मान्न द्रव्ये विशेषगुणोत्पत्तये मनसोऽपेक्षाऽपितु सुखाद्यपरोक्षज्ञानमेव मनसो लिङ्गमिति दिक्।

# काव्यशास्त्रे वर्णितं प्रत्यक्षप्रमाणं, बौद्धमतखण्डनञ्च

डॉ. सुमनकुमारझा

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहो भारो महान्कवेः॥[1]
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥[2]

वस्तुतः सर्वाणि शास्त्राणि, सर्वाः विद्याः कलाश्च सर्वे शब्दा अर्थाश्च काव्याङ्गतया निरूप्यन्ते कविभिः। काव्येषु एतेषां प्रचुरप्रयोगोऽपि दृश्यते। अत एतेषां तत्त्वानामवबोधाय साधुप्रयोगाय च तत्तच्छाशास्त्राणां ज्ञानमपेक्षितमस्ति, कविभ्यः, काव्यसमीक्षकेभ्यः, सहृदयसामाजिकेभ्यश्च।

प्रमीयते वस्तु साध्यतेऽनेनेति प्रमाणम्। 'प्र' उपसर्गपूर्वक 'मा' धातोः करणे ल्युट् प्रत्ययः। प्रमाकरणं प्रमाणमित्यर्थः प्रत्यक्षमेव प्रमाणमिति चार्वाकाः। प्रत्यक्षमनुमानञ्चेति बौद्धाः वैशेषिकाश्च। शब्दोऽपीति नैयायिकाः। अथापत्तिरपीति भाट्टाः। अनुपलब्धिरपीति बह्माद्वैतवादिनः। एवमेतेऽन्येऽपि ऐतिह्यादयः प्रमाणभेदाः सन्ति। ते च सर्वे दर्शनान्तरेषु संख्यालक्षणगोचर-फलविषयतया विप्रतिपत्त्या निरूपिताः सन्ति।

अप्पयदीक्षितेन कुवलयानन्द इति ग्रन्थे प्रत्यक्षानुमानोपमानशब्दश्रुति-सामान्यार्थापत्यनुपलब्धिसंभवैतिह्यादयः प्रमाणालङ्काररूपेण निरूपितास्सन्ति। यथा हि प्रत्यक्षादिलक्षणे विवादः तथा प्रत्यक्षसंख्यानां तद्विषये तत्फलेऽपि विवादो दृश्यते। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। कल्पनापोढमभ्रान्तं

---

1. काव्यालङ्कारः–(भामहप्रणीतः)– 5/4
2. नाट्यशास्त्रम्–1/116

प्रत्यक्षम्। प्रत्यक्षप्रमाकरणं प्रत्यक्षमित्यादिलक्षणस्वरूपाणि विभिन्नानि दृश्यन्ते। इन्द्रियजं ज्ञानं प्रत्यक्षमिति मनसोऽपीन्द्रियत्वस्वीकारात् न्यायमते षड्विधं प्रत्यक्षम्। मनसो नास्तीन्द्रियत्वमिति वेदान्तपरिभाषाकारमते पञ्चविधमेव प्रत्यक्षम्। प्रत्यक्षं चतुर्विधमिति इन्द्रियज्ञानं मनोविज्ञानमात्मसंवेदनं योगिज्ञानञ्चेतीन्द्रियाश्रितं यज्ज्ञानं तत्प्रत्यक्षम्। स्वविषयान्तरविषयसहकारिणा इन्द्रियविज्ञानेन समनन्तरप्रत्ययेन जनितं यत् तन्मनो विज्ञानम्। सर्वचित्तचैतानामात्मसंवेदनं प्रत्यक्षम्। एवं प्रत्यक्षप्रमाणविषयेऽपि विसंवादः।

साहित्यशास्त्रे विशेषतः दोषनिरूपणक्रमे अलङ्कारनिरूपणे च प्रमाणमुद्धृतमस्ति। तत्रापि सर्वप्रथममाचार्यभामहः काव्यालङ्कारे प्रतिपादयति–

**अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।**
**शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च॥**
**देशकालकलालोकन्यायागमविरोधि च।**
**प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते॥**[1]

तत्र न्यायविरोधिनः यथा–

**न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिञ्च तां विदुः।**
**अतो न्यायविरोधीष्टमपेतं यत्तथा यथा।**[2]

यत्र एतेषां शास्त्राणां विरोधो दृश्यते तत्र न्यायविरोधिदोषाः भवन्ति। तत्र उदयन–वासवदत्तयोरुपाख्यानेन न्यायविरोधस्य नैकानि उदाहरणानि प्रदर्शितानि भामहाचार्येण।[3] तत्र भामहाचार्यः शास्त्रलोकयोर्महत्वमित्थं निगदति–

**नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम्।**
**शास्त्रलोकावपास्यैवं नयन्ति नयवेदिनः॥**[4]

---

1. काव्यालङ्कारः– 4–1, 2
2. तत्रैव– 4/39
3. तत्रैव– 4– 40, 41, 42, 43, 44
4. तत्रैव– 4– 46

वस्तुतः प्रतिज्ञाहीनं हेतुहीनं दृष्टान्तहीनञ्चेति यत् दोषत्रयं निरूपितम् आचार्येण तत्रैव प्रमाणस्यापि उल्लेखः प्राप्यते। यथा च

**अथ प्रतिज्ञाहेत्वादिहीनं दुष्टञ्च वर्ण्यते।**
**समासेन यथान्यायं तन्मात्रार्थप्रतीयते।।**

**प्रायेण दुर्बोधतया शास्त्राद्बिभ्यत्यमेधसः।**
**तदुपच्छन्दनायैष हेतुन्यायलवोच्चयः।।**[1]

यदा कविः काव्यनिर्माणे प्रवृतो भवति तदा स प्रजापतिः यथा-

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।''**

तथापि प्रसङ्गानुकूलं यदि कुत्रापि प्रमाणस्योल्लेखः जायते चेत् तज्ज्ञानमावश्यकं नो चेत् कथं तस्यावबोधः अपि च स विषयः तत्र सदोषो निर्दोषो वा इत्यस्यापि निर्णयः कथं स्यात् तज्ज्ञानं विना। यतो हि कान्तासम्मिततयोपदेशसमन्वितकाव्येषु, शास्त्रमप्युपयुञ्जते।

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुज्यते।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम्।।**

काव्यं लोकाश्रितं शास्त्राश्रितञ्चं भवति। तत्र शास्त्रकाव्यस्य कृते शास्त्रीयतत्त्वानां ज्ञानमपेक्ष्यते। ''कलाशास्त्राश्रयञ्येति चतुर्धा भिद्यते पुनः।''[2]

आचार्य राजशेखरोऽपि निगदति काव्यमीमांसायाम् **'सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्'** इति यायावरीयः। गद्यपद्ययत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च तद्धि शास्त्राण्यनुधावति। आन्वीक्षिकीत्रयीवार्ता दण्डनीतयश्चतस्त्रः विद्याः इति कौटिल्यः। पञ्चमीसाहित्यविद्या'' इति यायावरीयः सा हि चतसृणामपि विद्यानां निष्यन्दः।।[3]

---

1. काव्यालङ्कारः- 5- 1, 2
2. तत्रैव- 1-17
3. काव्यमीमांसा- द्वितीयोऽध्यायः।

अनेन ज्ञायते यत् काव्येषु शास्त्रीयतत्वानां सन्निवेशो जायते एव। तत्र कविः त्रिधा इति कथयति राजशेखरः-''शास्त्रकविः काव्यकविरुभयकविश्च। यच्छाशास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति। यत्काव्यकविः शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधते यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते।[1] अतः काव्येन सह शास्त्रस्य विलक्षणः सम्बन्धः इति निश्चप्रचम्। अतः प्रमाणज्ञानमपि अपेक्षितमेव। यथा चकथयति भामहाचार्यः–

**सत्त्वादयः प्रमाणाभ्यां प्रत्यक्षमनुमा च ते।**
**असाधारणसामान्य- विषयत्वं तयोः किल।।[2]**

सौगताः द्विविधं प्रमाणमङ्गीकुर्वन्ति, प्रत्यक्षमनुमानञ्च प्रत्यक्षस्य विषयोऽस्ति व्यक्तिः, अनुमानस्य च जातिः। अर्थात् प्रत्यक्षेण व्यक्तिः ज्ञायते, अनुमानेन च जातिः। सामान्यमुच्यते जातिः। जातिर्जातञ्च सामान्यम् इति अमरकोशः 1-4-3। सामान्यस्यापि तदेवार्थः यः साधारणस्य। अतः सामान्यं साधारणं जातिरिति पर्यायरूपः।

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं लिङ्गपरामर्शजन्यं ज्ञानमनुमानम्। प्रकारान्तरेण यद् वस्तु पुरतः दृश्यते तज्ज्ञानं प्रत्यक्षप्रमाणेन जायते, यत्परोक्षमस्ति तज्ज्ञानमनुमानेन एव। इति नियमेनैव बौद्धाः व्यक्ति प्रत्यक्षप्रमाणविषयः जातिः च अनुमानविषयः इति स्वीकुर्वन्ति। तत्र प्रत्यक्षलक्षणमस्ति–

**प्रत्यक्षं कल्पनापोढं ततोऽर्थादिति केचन।**
**कल्पनां नामजात्यादियोजनां प्रतिजानते।।[3]**

---

1. काव्यमीमांसा- पञ्चमोऽध्यायः।
2. काव्यालङ्कारः- 5/5
3. तत्रैव- 5/6

कल्पना बौद्धदर्शनस्य पारिभाषिकशब्दोऽस्ति यस्यार्थः नाम जाति-गुण-क्रिया द्रव्याणां पञ्चोपधीनां व्यक्तौ आरोपः। यथा चोक्तं धर्मकीर्तिना- **"कल्पनापोढमभ्रान्तं"**[1] प्रत्यक्षम् कल्पनारहितं भ्रान्तिहीनञ्च ज्ञानं प्रत्यक्षमिति। भामहाचार्येण अस्मिन् प्रत्यक्षलक्षणे विप्रतिपत्तयः प्रदर्शिताः- तत्र प्रथमा विप्रतिपतिः यथा

**समारोपः किलैतावान्सदर्थालम्बनञ्च तत्।**
**जात्याद्यपोहे वृत्तिः क्व क्व विशेषः कुतश्च सः।**[2]

जातिगुणक्रियादीनां सत्ता एव नास्ति, अत एतेषां प्रत्यक्षं कथमिति बौद्धानां मतम्। अत्र भामहः कथयति यथार्थवस्तुनः ज्ञानमेव प्रत्यक्षं जातिगुण क्रियादीनां न शक्यते प्रत्यक्षीकर्तुमिति बौद्धानां य आशयः तन्न साधु। जात्यादीनां निषेधे सति कस्यापि वस्तुनः ज्ञानं कथं संभवम्, उपाधीनाम् निषेधे सति द्वयोः वस्तुनोः पार्थक्यज्ञानं कथं स्यात्। प्रत्यक्षं द्विविधं निविर्कल्पकं सविकल्पकञ्चेति। विकल्पशब्दोऽत्र भेदवाचकः। यत्र विकल्पः तत् सविकल्पकं यत्र विकल्पाभावः तत् निर्विकल्पकम्। किमपि वस्तु अस्ति इति बोधः निर्विकल्पकज्ञानम्, परं किमस्ति इत्यस्य बोधः सविकल्पकज्ञानम्। अत्र द्वयोर्मध्ये पार्थक्यं ज्ञायते उपाधिचतुष्टयबलात्। जातिगुणक्रियायदृच्छेति उपाधिचतुष्टय्म् वस्तुतः वस्तुनः प्रत्यक्षंज्ञानं उपाधिभिरेव क्रियते। यदि जात्यादयः न स्वीक्रियन्ते चेत् ज्ञानस्य विषयः कः अर्थात् कस्य ज्ञानम् पुनरपरेण वस्तुना साकं किं पार्थक्यम्, अपि च पार्थक्यस्याधारः कः इत्यत्र बौद्धानां मतं समुचितं नास्ति इति। द्वितीया विप्रतिपत्तिः बौद्धमतखण्डनाय द्वितीया युक्तिरूपस्थाप्यते भामहाचार्येण तदपोहेषु च तथा सिद्धा सा बुद्धिगोचरा। अवस्तुकं चेद्वितथं प्रत्यक्षं तत्त्ववृत्ति हि।। यदि जात्यादीनामपोहे सत्यपि तेषां बुद्धिगोचरत्वम्, अपि च प्रत्यक्षं निर्विषयकमिति स्वीकृत्य कल्पनारूपमिति कथयन्ति चेत् तदपि न साधु, यतो हि ते यथार्थबोधकाः सन्ति। पुनराचार्येण तृतीया युक्तिउपस्थापिता यथा-

---

3. न्यायबिन्दु- पृ.-8
4. काव्यालङ्कारः- 5/7

**''ग्राह्यग्राहकभेदेन विज्ञानांशो मतो यदि।**
**विज्ञानमात्रसादृश्याद्विशेषोऽस्य विकल्पना।।[1]**

तुरीया युक्तिः उपस्थापिता भामहेन बौद्धमतखण्डनाय, यथा-

**"अर्थादेवेति रूपादेस्तत एवेति न्यायतः।**
**अन्यथा घटविज्ञानमन्यन्न व्यपदिश्यते।।"[2]**

सिद्धान्तोऽयं यत् कस्यापि वस्तुनः ज्ञानं तेन वस्तुना एव जायते। यथा घटपदार्थस्य ज्ञानं घटेन एव, पटापदार्थेन घटज्ञानं न जायते। अतः रूप-आकार-जाति-गुण-क्रिया-नामादीनामुत्पत्तिरपि तेन एव पदार्थेण स्वीकर्त्तव्या नो चेत् घटनाज्ञनमन्येन वस्तुना व्यपदिश्यते। अर्थात् पुष्पज्ञानं फलेन न जायते। अन्यथा गजं दृष्ट्वा उष्ट्रस्य बोधो भविष्यति। गोषु अश्वबोधः वृक्षं दृष्ट्वा कश्चिद् कथयेत् यत् घटमहं पश्यामि। अतः एभिः तकेः सिद्धं यत् उपाधिविशिष्टव्यक्तिरेव प्रत्यक्षस्य विषयः, उपाधिरहितव्यक्तिः यथा बौद्धाः स्वीकुर्वन्ति।

निरूपितस्य न्यायसिद्धान्तस्य काव्येषु उपयोगप्रदर्शनाय कथयति आचार्यभामहः- **'अपरं वक्ष्यते न्यायलक्षणं काव्यसंश्रयम्। इदन्तु शास्त्रगर्भेषु काव्येष्वभिहितं यथा।[3]** आचार्यदण्डिनापि सन्दर्भेस्मिन् उक्तमस्ति-

**'देशकालकलालोकन्यायागमविरोधि च। इति दोषाः वर्ज्याः काव्येषु सूरिभिः[4]**

साहित्यशास्त्रे अलङ्काररूपेणापि प्रमाणं विवेचितमस्ति यथा रूद्रटः अनुमानालङ्कारः।

भोजराजेन अर्थालङ्कारेषु प्रत्यक्ष-अनुमान-आगम-उपमान-अर्थापत्यलङ्काराः सरस्वतीकण्ठाभरणम् इतिग्रन्थे प्रतिपादिताः। मम्मटः-

---

1. काव्यालङ्कारः- 5/9
2. तत्रैव- 5/10
3. दण्डिणाडपि उक्तम्-
4. काव्यालङ्कारः- 5/30

अनुमानालङ्कारः काव्यप्रकाशः रूय्यकः अर्थापत्त्यमानालङ्कारौ अलङ्कारसर्वस्वग्रन्थे। विश्वनाथाचार्येण अनुमान-हेतु-अर्थापत्ति-विकल्प-समुच्चयादयो अलङ्काराः साहित्यदर्पणमिति ग्रन्थे निरूपिताः।

अप्पयदीक्षितेन प्रत्यक्ष-अनुमान-उपमान-शब्द-श्रुति-सामान्य अर्थापत्ति-अनुपलब्ध्यादयः अलङ्कारा स्वीकृताः कुवलयानन्द इति ग्रन्थे। अनुमान-अर्थापत्तिसामान्य-विकल्पसमुच्चयादयः अलङ्काराः निरूपिताः सन्ति। एतेषां सर्वेषां विवेचनं विस्तरभयात् न क्रियते अत्र। परम् अष्टादशशताब्द्याम् आन्ध्रदेशीयबुक्कपट्टणवेङ्कटाचार्येण विरचितः अलङ्कारकौस्तुभः इति ग्रन्थे निरूपितेषु अलङ्कारेषु प्रमाणालङ्कारोऽपि एक अलङ्कारः यथा-

**'प्रत्यक्षादिप्रमाणानां यद्यन्यतममुच्यते।**
**तदा प्रमाणालङ्कारः बहुधा च स इष्यते।।'[1]**

तत्र प्रत्यक्षं यथा-

**अयं यक्षसूनुर्जयन्तो वसन्तो झषाङ्को मृगाङ्कोऽयवेति प्रतर्क्यः।**
**महानीलनील त्विषा गोपबालं विनिश्चित्य दृग्भ्यां वधूसञ्जहर्ष।।**

इत्थमिदं निर्णीतं यत् कवीनां कृते विविधशास्त्रेषु प्रतिपादितानां तत्त्वानां ज्ञानमपेक्ष्यते। यतोऽहि काव्येषु सर्वासां विद्यानां सहभावः दृश्यते।

---

1. काव्यादर्शः- 3/126
2. अलङ्कारकौस्तुभः- 2/109
3. तत्रैव- 2/270

# Consciousness and its States: Exploring Dharmarāja's Concept of Vṛtti and Its Implications

Prof. Godabarisha Mishra

*pratyakṣaṁ tu atra caitanyam eva*

(All perceptual knowledge refer to this reality-conscious only.)

## Introduction

In Advaita, consciousness, "cit", is the process and the goal of philosophical disciplinie. In perceptual process, alkong with its forms waht is revealed is "Being" that is common to every entity and without whih the form cannot be real and cannot have objective status. In the perception of "That is a table" and "That is a tree" alonog with the forms of the table and the tree, "Being" is revealed through the expression "is" whether or not we express our cognition in words. Even though Advaitins accept the Bhāṭṭa theory of cognition, both differ in their analysis of it. For Advaitin, perception is a function (vṛti) of the inner sense (autaīīsḥkaraṇa which is an instrument). The modification that the internala organ (antaḥkaraṇa) undergoes in keeping with the object perceived is technically called as "vṛtti". there are several types of cognitions (veridical and non-veridical) in keeping with the functioning of the mind (vṛtti). All cognitions according to Advaita stem from consciousness and it is not necessary that all perception requires the involvement of the sense organ. The cognition of table, chair etc is said to be verifical since it is gained in the normal manner - thirough the modification of the mind (*antaḥkaraa-vṛtti)* and that is why it is not sublated. But in

the case of rope-snake, the initial cognition is sublated by a subsequent cognition, even though the functioning of the sense (*indriya-vyāpāra*) is common to both. Even while perceiving the snake, rope alorg exists there; but it is cognized as a snake. For this snake, the cognitum is not a snake but a rope. There is awareness of cognition and awareness of ignorance of the object in the person who is involved in the process of cognitioon. Awareness is different from cognition, with is also a cognitive act. An appropriate mental functioon (*vṛtti*) is required to dispel ignorance. Awareness does not dispel ignorance, because we are aware of both knowledge and ignorance. One point that also needs to be mentioned heree is that in any case of gnition, there is the dispelling of the ignorance that vents the realization or experience of the being and its ition. In the cognition of an object outside (*ajñāta-*, there is the destruction of both the covers created norance, the Existence-Cover (asatva-āpadaka-ṇa) and the Appearance-Cover (*abhāna-āpadaka-aṇa),* whereas in case of indirect forms of cognition, re is only the destruction of the Existence-Cover sociateed with the object i.e. fire. In case of states of mind like happiness (*ukha*) and the like, and also iin the case of illusion, there is no cover or obstruction and hence the question of destruction of the cover does not arise. They are cognized by the awareness (*sākṣin*) alone.

Modification or *vṛtti* happens to Mind (*antaḥḥkaraṇa*) and Ignorance. Let us call Miind and Ignorance together ècognitiver elementé. Miodification is nothing but èmodificationé of this cognitive element that comprehends an object and presents it to the witness. The Witness èhas toé witness any change or modification of the cognitive element. Now according to Madhusūdana Sarasvatī and Dharmāja, cognition is the mofification of the internal organ only. The modification of ignorance is according to them èpseudo cognitioné (*jñāna-ābhāsa*). Coignition or a pseudo cognition is nothing but a

modification. And by definition the Witness has to (witness) it indifferently I call this (witnessing) of the Witness (awareness). The Witness is aware of Ignorance also. That is how after waking up one says I did not know anythingé. What it means is she (witnessed) or was aware of her own Ignorance. The Advaitin rejects the grammarian view that the name is necessarily involved in al cognition and that when I perceive a horse, the word horse also is an object of cognition.

This essay intends to explore the concept of consciousness in Advaita Vedānta and the states it undergos in different types of cognition. The whole task is to see the importance of vṛtti and the way it operates in Advaita. When Dharmarāja gives the definition of pramā, the definition is meant to include the empirical world of reality into the fold of pramā. That is novelty, (*anadhigatava*) does not exclude the *vyāvadhārika*. But in Advaita it has been taken toi be the means to exclude the empirical world. That might be the reason why Madhusudana takes to a different procedure of defining illusoriness of the wor3ld and not the knowledge. One more problem, I would like to discuss here is that abādhita, (not sublated) given as a criterion of knowledge also needs toi be understood in different manner to tighten the definition of knwledge given by Dharmarāja.

### Vṛtti and its Operation

Consciousness has been a very significant concept discuss and debated among the Indian system builders to arrive at their philosophical realities. In the elucidation of the philosophy of the Upaniṣads, Śaśkara holds the view that it is consciousness, which is the basis of world appearance. Knowledge in ordinary sense pre-supposes the distinction between the knower and known. This is because nescience (*avidyā*) disguises the truth by the nescience of plurality. *Avidyā* covers the all-pervading consciousness-self just as a finger placed in front of oneés eyes covers the visibility of the sun. Consciousness is unrelated to anything,

for the reason that there is nothing apart from it to be related to, all the distinction of knowinig and knower and known, subject and object are mistakenly attributed to the self and the world of empirical activity is generated. The moment this super-imposition drops away, there is no knower-ship and no operation oif means of knwledge. Because of the lack of false identification of the senses as the self, sense like perception etc. Also ceases, for sense activities is possible only for a knower. Hence, it is nescience that conjures up all cognitive functions. As it has transformed itself into the world of variety, so it has evolved itself into that cognitive instrument called internal organ or the *antahkaraṇ*. *Antaḥkaraṇa* modifies itself and takes the forms of an object and this is known as *vṛtti*.[1] That aspect of intellignece which is definied by cognitive process (that connects the ego with the object) is the knower. That aspect of intelligence that is defined by cognitive process is the means of cognation (*Pramāṇa*). Aspect of intelligence defined by the element of fitness for manifestation present in the object (which pervdades the object) assumes the form of the object and invests it with the character of objectness, is the cognition or *pramiti*.

The conscious conditioned by the nescience in the form of the object like pot is the conotent consciousness, *viṣaya-caitanya,* conitioned by the modification of the internal organ is the cognitive consciousness, *pramāṇa-caitanya;* and conditioned by the internal organ is the cogniser-consiousness (*pramatṛ*). Madhusūdana Sarasvatī, however, speaks of four aspects and the fourth is the Brahma-caitanya residing in the object.[2] It is the function of *vṛtti* to manifest objects. The *vṛtti* forges a connection between the self-conditioned by the object and the knowing self and takes out the veil coverin the self-conditioned by the object. In the *Vivaraṇa* and *Sankṣepa-śārīraka,* the function of the *vṛtti* is to establish contact and lift the obscuring veil of nescience in that object thereby making the object-consciousness and the subject-consciousness non-

different.[3] According to the authors of the *Vedānta-kaumudī* and *prakaṭartha,* when there is sense object contact, the mind transforms itself, being activated by the moral destiny or some unknown factor,[4] into the form of long ray reaching toi the object. Rāmādvaya, the author of *Vedānta-kaumudī* holds the view that pure-consciousness underlying the mind that lay dormant is stirred by the transformation of the mind into the modification or *vṛtti* and thus sets aside the veil that has drawn over it. The *vrtt* is the transparent transmitter of the conscious to the object. Thus the subjective and objective elements get united (saṅslesa-pratyaya) and then results the cognition "I know the object". Madhusūdana is of the view that the *vṛtti* manifests the adhiśhanacaitanya which is present and un-manifest. In the case of mediate knowledge, (say inferential) there is no contract with the object and so it is merely mental. In the case of immediatee knowledge, the manifestation is of the object. Vācapati says that the *vṛtti* has the function removing the veil of nescience, that conceals the consciousness and is the material cause of the universe.

Now it may be asked as to what is the requirement of a *vṛtti* at all, if it were intelligence itself? The reason is that the consciousness has the ominpresent nescience for its adjunct and it cannot be directly one with the objects, since it is not the material cause of the objects.[5] Similarly, intelligence is associated with the internal organ, though not with the objects.[6] So the instrumentality of an internal organ is necessary for the contact of intelligence with the external objects. It is the vṛtti again that manifests the non-difference of the intelligence self from the intelligence defined by the object. Or3 we may say that it is through the association with a *vṛtti* in respect of a particular object that the obscuring nescience is lifted. So the function of *vṛtti* is for the sake of contact of the object with intelligence, and also for3 the manifestation of non-difference of the intelligence self from the object-defined intelligence. In

other words it is required for the removal of the obscuring nescience with regard to the particular object.[7]

Bhārttīrtha and Madhusūdana are of the opinion that theree is no destruction of obscuration (*āvaraṇa*) by the *vṛtti;* as otherwise, even the cognition of a pot will bring about release. It only overpowers and does not destry the obscuration (*āvaraṇa*)[8] Prakāsātman, the author of *Pañcapādikā-vivaraṇa* holds that ajñāna is only one which has several effects, while the auhor of *Iṣta-siddhi,* though agrees with him, points out that there are many āvaraṇas with regard to an object. When knowledge arises, only one nescience gets destroyed and others continue.[9] It cannot be objected that if one nescience remained, there will be other nescience actin as objects to the manifestation of the objects; for the very removal of one nescience is a guarantee against removal of that and if nesciences continue to be there, the manifestation of the object also continues to be there. Or is the refernece here is to the Bhāmatī, which accepts many nesciences as there are individual souls, even then, so far one individual is concerned, there should be liberation of ignorance to oone object is lifted, ignorance with regard to other objects may persist and so there is not question of instantaneous liberation when an object is known. One more question may be asked: even Brahmajñāna may not distroy the ajñāna and will have t o be supposed only to over power it? The answer is that the intuition arising out of Mahāvākya, *tattvamasi* is the truth and is not contradictable unlike the knowledge arising through perception, etc., which are strictly not pramā.

Hence according to Advaita, it is only consciousness that is manifested by the internal organ is the cause of the experience of objects. Only through the internal organ can there be any association and without any such association, no congition is possible. It has to be kept in mind that mere existence of internal organ is not encugh to reveal objects. The vṛtti should reach and take on the form of the objects. In the case of nonoperation of the internal organ, when

theree is cognition as in case of happiness, it is the internal organ that has transformed itself into a *vṛtti* and is manifeseted by the witness consciousness, because the *vṛtti* and consciousness conditioned by pleasure and pain are located in the same place.

There may be a doubt whether there can be the knowledge of merit and dererit through vṛtti. Advaitins say that the consciousness is not in harmony with those particular objects.[10] When consciousness is pure but concealed, the knowing-self (pramātā) is connected with it by a *vṛtti* and *antaḥkaraṇa* that gives rise to cognition. Where the object is not-concealed but impure like the illusory silver appeariing in the shell, the connectiion is to be established by the vṛtti of nescience (avidyā-vtti)_. But in the case of pleasure, pain etc., which are un-obscured and pure, there is no necessity of a vṛtti of the internal organ to connect. The vṛtti, which causes the manifestation of object in figuratively called "knowledge".[11]

## Criterion of Vaidity of Cognition

Direct perception or pratyakṣa is distinctive cause of perceptual knowledge.[12] The prime characteristic of perception is its immediacy and directness. This immediacy follows from the fact tht perceptual cognition, the non-difference of the cognitie consciousness from the content-defined-consciousness is brought about through the vṛtti. *Perceptual cognition is itself consciousness which is immeiatee.* So the immediacy of the perceptual knowledge is derived from the metaphysical nature of reality; that is consciousness, which is always direct. It is this reality consciousness, which is called perception (*pratyakṣa*) when through the modification of the mind and the sense contact; a relevation of the object is brought about. All perceptual knowledge refers to this reality-consciousness only which though really has no beginning and end, seems to be so by the association of he attributes of vṛtti which has a beginning and end and hence appears and disappears.[13] Cognition is valid when it has for its content an object that

is *not already known* (*anadhigata*) or (novelty) and is not sublated (*abādhita*). Novelty is proposed to do away with the cognitions arisin out of recollection. Rāmādvaya differs frm Dharmarāja is accepting novelty as a criterion. The difficulty of continuous perception of the same object (dhārāvāhika-jñāna) and the fact of recognition go contrary to such a definition.[14] Now taking the other criterion into consideration, abādhita (which is not sublated) we find there are problems. It is because 1. a wrong cognition may not be contradicted by another cognition. 2. One wrong cognition may be sublated by an other wrong cognition, 3. a right cognition may be contradicted by an eroneous cognition. If it is given that the sublation is toi be done only by a right, faultless cognition, then there will be problem as to how do we decide which is the right cognition. It would be arguing in a circle because we cannot say which one is right cognition without referring to the contradiction. Citsuka reflects on this point saying that it is impossible to assert whether any piece of knowledge wil continue to remain un-contradicted for all time.

**Anadhigatava (novelty)**

Prasastapāda says memory is an independent pramana. Recollection is true only in so far as it is not sublated. Dhartanaraja says that recollection may be vdalid but it is not necessary to prove that it is a means of knowledge. Memory does not reval anything that is not revealed already.[15] It is *adhigata* though it may not be *abādhita*. Taking minute details of recollection into consideration, Dharmaraja says that anadhigata (not known so far) has to be a characteristic of prama and it would include empirical knowledge into its fold. The whole exercise of Dharmaraja is to give an epistemic foundation to the philosophy of Advaita and in that direction, the world which does play a role has to be accounted for and all pramanas have to be worked out. Hence he quoted a pre-Shankara Advaitin to say till the knwledge of Brahman

arises the world is to be taken as real (ā-ātma-niscayat). In that case even as long as the rope-snake cognition continues, rope-snake also appears to be real. Hence we cannot take this to be final a definition of prama. It becomes provisional. I would like to bring Sankara to substantiate what I would like to put forth before you, he says "all usages relating to pramāṇa and prameya opereate in the world of duality."[16] When Śankara says "A thing that is kown through some means of knowledge to have a certain characteristic retains that characteristic evn in a different place, time or condition; or else all functioning of the means of knowledge would stop"[17] he means only the so called pramāṇas relating to wor3ld ofe empirical reality not the reality per se. Hence anadhigata need not be taken to be the criterion for prama. Dharmaraja does it because of his over enthusiasm to do away with the pramā theoiry of Nyaya school.

**Abadhita (un-sublated)**

Now I go back to the other dimension of the definition and about which I have alredy mentioned the difficulties. There are a few problems. 1. If a person sees a rope as a snake for life-long and worships by giving milk as it sone in some part of our country, then it is not a cognition which is sublated, and it is now knwledge at the same time. 2. Secondly, if a rope-snake, instead of bring known as rope as a garland and the continues to have such a knowledge, it is also unsublated, but not a case of knowledge. Thirdly, suppose at a distance, there is water and because of his earlier illusions, he sees it as mirage, (mrgatrsna) the knowledge remains to be unsublted though not right. Hence abadhita cannot be given as a criterion of knowledge.

How do we address this problem? Now in all these cases, this is private cognition, not public. There can be public illusions also. But these are the cases which are only seen by a person at a particular time. Definition has to have a wider scope and applicability. Secondly, these are the

cases which are not sublated, but there is possibility. Secondly, these are the cases which aree not sublated, but there is possibility of their being sbulated. So I would prefer "abadhya" for abadhita. In that case rope-snake or in any such object of illusory cognition, there is possibility of beiing sublated, though it is not sublated due to some reason.

There are a few thigns to mention by way of my concluion. Dharmakirtiés definition, "Kalpana apodham, abhrantam pratyaksam", which means that a cognition, which is not vitiated by imagination and not illusory is perception must have had its influenced on later Indian epistemologists to design their epistemology in differnet ways as has been shown above in the case study ofe Dharmaraja. Secondly, this perhaps is the reason why Madhusudana does not gtry to give a definition of knowledge in this way and tries to define illusoriness, or mithyātva. There is a still other way of validating the world, in the way Saccidananda Sarasvati puts it through his vision of world as Brahman. It is again on the basis of the statement, *brahmasvabhāvo hi prapañcaḥ na prapañca-svabhāvam brahma*. The world is of the nature of Brahman and but the Brahman is of the nature of the world.[18] In that case, the first exercise that any perception is of the nature of consciousness and it is only consciousness which becomes subject and object in accordance with the states of its existence. That is the reason why it is stated that "pratyakṣam tu atra caitanayam eva", the perception is only consciousness.

---

1. Just as the water of the tank, going out through a hole and enterning fields through channels comes o have a quadrangular3 or other figure, similarly, the internal organ too which is of the nature of light, going out through the sense of sight eetc. and reaching the locality of contents like pot is mo;dified in the form of content like pot. *Vedanta paribhāsa. Madhusūdana in his* Advaida Siddhi replies that taking the form of the object only gives the capacity to the modification to remove veil of ignorance.

2. Caitanya (tasya ca abivyaktasya caitanyasya ekatve' py abhivyanjakantakharana-bhagabhedat tridha vyapadeso bha vati, Siddanta-bindu, p. 33).
3. Pŕatibimba-vadins
4. (adrstadi-ksubdham)
5. It is like the "cow-ness" though omnipresent is not associated with horse, etc., through it is associated with a particular, possessing a dewlap.
6. SLS by SSSS p. 166
7. *Siddhāntaleśa-sangraha-* p. 187. These are respectively known as a. ciduparāgā, b. abhedaabhivyakti, and āvarana.
8. Vivranaprameya-sanragraha, p 72
9. The author of *vedanta-kaumudi* says that when there is thunderbold (vajrapatha) falling on the crowd only one of them may be killed while others may only dispense; in the similar way when one ajnana is dispelled, other ajnanas may persist.
10. Caitanayasya tattadakaratvabhavat. Vivaranaprameya samgraha, p. 35
11. vrttau janatva upacarat). Prakasatman echoes the same idea, "because of the figurative designation of "knowledge" in respect of the vritti of the internal organ (antarkarna-vrttan upacarat). In Samkhya, pure consciousness is the knower, the vṛtti is the pramana, prama is the reflection of the modification in the form of objects in the consciousness.
12. Pratyaksa-prama-kaanam pramanam.
13. In Brahadranyaka we come across he statements like lilayati iva, showing that the conosciousness, thought is non-relational becomes as though relational.
14. ajñāta-jñapakaṁ pramānaṁ iti asāram - Rāmādvya
15. As Yogasutra puts i "anubhuta-visaya-sampramosah smrtih."
16. Sarve pramana-prameya-vyavahrah laukikah vaidikasca pravrttah, sarvani ca sastrani vidhinisedha moksa parani. Adhyasabhasya of Sankara.
17. Brhadaranaya upanisad, 2.1.20
18. Refer Two Myths in Advaita by Srinivasa rao.

# वेदान्तपरिभाषायाः प्रत्यक्षपरिच्छेदः

धर्मराजाध्वरीन्द्र

यदविद्याविलासेन भूतभौतिकसृष्टयः।।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम्।।1।।

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः।।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम्।।2।।

श्रीमद्वेङ्कटनाथाख्यान् वेलाङ्गुडिनिवासिनः।।
जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्त्तकान्।।3।।

येन चिन्तामणौ टीका दशटीकाविभञ्जिनी।।
तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा।।4।।

तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी।।
धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते।।5।।

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः 'न स पुनरावर्तते' (छ. 8-15-1) इति श्रुत्या तस्य नित्यत्वावगमात्। इतरेषां त्रयाणां तु प्रत्यक्षेण, 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छ. 8-1-6); इत्यादिश्रुत्या चानित्यत्वावगमात्। स च ब्रह्मज्ञानात् इति ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते।।

तत्र प्रमाकरणं प्रमाणम्। तत्र स्मृतिव्यावृत्तं प्रमात्वम्, अनधिगताबाधितविषयज्ञानत्वम्। स्मृतिसाधारणं त्वबाधितविषयज्ञानत्वम्। नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञाना-विषयतत्तत्क्षणविशेषविषयकत्वेन न तत्राव्याप्तिः।।

किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु

यावद्घटस्फुरणं तावत् घटाकारान्तःकरणवृत्तिरेकैव, न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात्। तथा च तत्प्रतिफलितचैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालीनमेकमेवेति नाव्याप्तिशङ्काऽपि।।

ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात्तज्ज्ञानं कथं प्रमाणम्? उच्यते–ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ. 4–5–15) इति श्रुतेः, न तु संसारदशायां बाधः, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ. 4–5–15) इति श्रुतेः। तथा चाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः। तदुक्तम्–

**देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्।।1।।** इति

आ आत्मनिश्चयाद् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः। लौकिकमिति घटादिज्ञानमित्यर्थः।।

तानि च प्रमाणानि षट्, प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात्। तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा चात्र चैतन्यमेव 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ. 3–4–1) इति श्रुतेः। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति? उच्यते–चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते। ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः। तदुक्तं विवरणे–'अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्' इति।।

ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम्? इत्थम्–न तावदन्तःकरणं निरवयवं, सादिद्रव्यत्वेन सावयवत्त्वात्। सादित्वं च 'तन्मनोऽसृजत' इत्यादिश्रुतेः। वृत्तिरूपज्ञानस्य मनोधर्मत्वे च 'कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. 1–5–3) इति श्रुतिर्मानम्। धीशब्देन वृत्तिरूपज्ञानाभिधानात्। अत एव कामादेरपि मनोधर्मत्वम्।।

ननु कामादेरन्तःकरणधर्मत्वेऽहमिच्छाम्यहं जानाम्यहं

बिभेमीत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथमुपपद्यते? उच्यते-अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् यथा अयो दहतीति व्यवहारस्तथा सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासात् अहं सुखी दुःखीत्यादिव्यवहारः।।

नन्वन्तःकरणस्येन्द्रियतयाऽतीन्द्रियत्वात् कथमहमिति प्रत्यक्षविषयतेति? उच्यते-न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। 'मनः षष्ठानीन्द्रियाणि' इति भगवद्गीतावचनं प्रमाणमिति चेत्? न, अनिन्द्रियेणाऽपि मनसा षट्त्वसङ्ख्यापूरणाविरोधात्। न हीन्द्रियगतसङ्ख्यापूरणमिन्द्रियेणैवेति नियमः, 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यत्र ऋत्विग्गतपञ्चत्वसङ्ख्याया अनृत्विजाऽपि यजमानेन पूरणदर्शनात् 'वेदानध्यापयामास महाभारतपञ्चमान्' इत्यत्र वेदगतपञ्चत्वसङ्ख्याया अवेदेनापि महाभारतेन पूरणदर्शनात्। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' (क. 1-3-10) इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च। न चैवं मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्त्वं न स्यादिन्द्रियाजन्यत्वादिति वाच्यम्, न हीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वम्, अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः, ईश्वरज्ञानस्यानिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च।।

सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमित चेत्? किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किं वा विषयगतस्य? आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः। तथा हि-त्रिविधं चैतन्यं प्रमातृचैतन्यं, प्रमाणचैतन्यं विषयचैतन्यं चेति। तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्, अन्तकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्।

तत्र यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते। अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनं वह्न्यादे श्चक्षुराद्यसन्निकर्षात्। तथा चायं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात्तदुभयावच्छिन्नं चैतन्यमेकमेव,

विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वेन भेदाजनकत्वात्। अत एव मठान्तर्वर्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद्भिद्यते। तथा चायं घट इति घटप्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य चाभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वम्। सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधि-द्वयावच्छिन्नत्वात् नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वम्। नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेन्न। तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्तमानत्वेन तत्रोपाध्योर्भिन्न-कालीनतया तत्तदवच्छिन्नचैतन्ययोर्भेदात्। उपाध्योरेकदेशस्थत्वे सत्येक-कालीनत्वस्यैवोपधेयाभेदप्रयोजकत्वात्।

यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं तदा अहं पूर्वं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं विषयविशेषणं देयत्। नन्वेवमपि स्वकीयधर्माधर्मौ वर्तमानौ यदा शब्दादिना ज्ञायेते तदा तादृशशाब्दज्ञाना-दावतिव्याप्तिः, तत्र धर्माद्यवच्छिन्नतद्वृत्त्यवच्छिन्नचैतन्ययोरेकत्वादिति चेन्न, योग्यत्वस्यापि विषयविशेषणत्वात्। अन्तःकरणधर्मत्वाविशेषेऽपि किञ्चिदयोग्यं किञ्चिद्योग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणम्, अन्यथा न्यायमतेऽप्यात्मधर्मत्वाविशेषात् सुखादिवद्धर्मादेरपि प्रत्यक्षत्वापत्तिर्दुर्वारा।।

न चैवमपि सुखस्य वर्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यम्, इष्टत्वात्। 'दशमस्त्वमसि' इत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्षज्ञानाभ्युपगमात्। अत एव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षं पर्वतांशेऽपरोक्षम्। पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरण-वृत्त्यवच्छिन्नचैतन्याभेदात्। वह्न्यंशे त्वन्तःकरणवृत्तिनिर्गमनासम्भवेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्। तथा चानुभवः 'पर्वतं पश्यामि वह्निमनुमिनोमीति'।।

न्यायमते तु पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्ट-पक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम्। सुरभिचन्दनमित्यादिज्ञानमपि चन्दनखण्डांशे अपरोक्षं सौरभांशे तु परोक्षं सौरभ्यस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात्।।

न चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति वाच्यम्, इष्टत्वात्। जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतया अप्रामाणिकत्वात्। घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानं न तु तस्य जातित्वेऽपि।।

जातित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानस्याप्यनवकाशात्। समवायासिद्ध्या ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटित-जातित्वस्य घटत्वादावसिद्धेश्च। एवमेवोपाधित्वमपि निरसनीयम्।।

पर्वतो वह्निमानित्यादौ च पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न विरोधः। तथा च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्य-वच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।

घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम्। ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः? अहमिमं पश्यामि इति भेदानुभव-विरोधादिति चेत्, उच्यते-प्रमात्रभेदो नाम न तदैक्यम्, किन्तु प्रमातृसत्ता-ऽतिरिक्तसत्ताकत्वाभावः। तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्ताऽतिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यञ्च पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्।।

अनुमित्यादिस्थले त्वन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः।

नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः, धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्तानतिरेकादिति चेत्? न, योग्यत्वस्यापि विषयविशेषणत्वात्।।

नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः, रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य चैकतया

रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्ताऽतिरिक्तत्वाभावादिति चेत्? न, तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात्। रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्या-भिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात्।।

नन्वेवं वृत्तावव्याप्तिः, अनवस्थाभिया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेत्? न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृ-चैतन्याभिन्नसत्ताकत्वस्य तत्रापि भावात्। एवं चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमेन उक्तलक्षणस्य तत्रापि सत्वान्नव्याप्तिः।।

न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षि-विषयत्वाभ्युपगमविरोध इति वाच्यम्, न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किन्त्विन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्। अत एवाहंकारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता, अत एव च प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता। तथा चान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः।।

तदयं निर्गलितोऽर्थः, स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्ताऽतिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्। तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः।

सा च वृत्तिश्चतुर्विधा संशयो, निश्चयो, गर्वः, स्मरणमिति। एवं विधवृत्तिभेदेन एकमप्यन्तःकरणं मन इति, बुद्धिरिति, अहङ्कार इति, चित्तमिति व्याख्यायते। तदुक्तम्-

**मनोबुद्धिरहङ्कारश्चितं करणमान्तरम्।**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे।।1।।**

तच्च प्रत्यक्षं द्विविधं सविकल्पकनिर्विकल्पकभेदात्। तत्र

सविकल्पकं वैशिष्ट्यावगाहिज्ञानं यथा घटमहं जानामीत्यादिज्ञानम्। निर्विकल्पकं तु संसर्गानवगाहिज्ञानम्। यथा-सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यज्ञानम्।।

ननु शाब्दमिदं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वादिति चेत्? न, न हि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं, दूषितत्वात्, किन्तु योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथा च सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभेदेन सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्। एवं तत्त्वमसि इत्यादिवाक्यजन्यज्ञानस्यापि, तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्? उच्यते-वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम्, अनभिमत-संसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः, किन्तु तात्पर्यविषयत्वम्।।

प्रकृते च 'सदेव सोम्येदमग्र आसीत्' (छा.-5-2-1) इत्युपक्रम्य 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा.-6-8-7) इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसितमिति कथं तात्पर्याविषयसंसर्गमव-बोधयेत्। इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्, यत्संसर्गानवगाहियथार्थ-ज्ञानजनकत्वमिति।। तदुक्तम्-

**संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।**
**उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता।।1।।**

प्रातिपदिकार्थमात्रपरत्वं वाऽखण्डार्थत्वमिति चतुर्थपादार्थः।।

तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षि ईश्वरसाक्षि चेति। तत्र जीवो नामान्तःकरणावच्छिन्नं चैतन्यम्। तत्साक्षि तु अन्तःकरणोपहितं चैतन्यम्। अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः। विशेषणं च कार्यान्वयि व्यावर्तकम्। उपाधिश्च कार्य्यानन्वयी व्यावर्तको वर्तमानश्च। रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते।।

प्रकृते चान्तःकरणस्य जडतया विषयभासकत्वायोगेन विषयभासक-चैतन्योपाधित्वम्। अयं च जीवसाक्षी प्रत्यात्मं नाना। एकत्वे मैत्रावगते

चैत्रस्याप्यनुसन्धानप्रसङ्गः। ईश्वरसाक्षि तु मायोपहितं चैतन्यम्। तच्चैकम्, तदुपाधिभूतमायाया एकत्वात्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागत-सत्त्वरजस्तमोरूपगुणाभिप्रायतया वोपपत्तेः।।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। ( श्वे. 4/10) 'आजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ( श्वे. 4/5) 'तरत्यविद्यां विततं हृदि यस्मिन्निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः।।1।।' इत्यादिश्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते। ततश्च तदुपहितं चैतन्यम् ईश्वरसाक्षि, तच्चानादि तदुपाधेर्मायाया अनादित्वात्।

मायावच्छिन्नं चैतन्यं परमेश्वरः, मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमिति ईश्वरत्वसाक्षित्वयोर्भेदः, न तु धर्मिणोरीश्चरतत्साक्षिणोः।।

स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वर इत्यादिशब्दवाच्यतां लभते।

नन्वीश्वरसाक्षिणोऽनादित्वे 'तदैक्षत बहु स्यां प्रजायेय' (छा. 6/2/1) इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते? उच्यते-यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते, तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषा इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यमित्याद्याकारा जायन्ते। तासां च वृत्तीनां सादित्वात्तत्प्रतिबिम्बितं चैतन्यमपि सादीत्युच्यते। एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यम्। प्रत्यक्षत्वं च ज्ञेयगतं ज्ञप्तिगतं चेति निरूपितम्।।

तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव। पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्। तत्तद्विषयांशप्रत्यक्षत्वं तु पूर्वोक्तमेव। तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेन तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्वोक्तलक्षणेऽबाधितत्वं

विषयविशेषणं देयम्। शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषय-प्रातिभासिकरजतादिविषयकत्वेनोक्तलक्षणाभावान्नातिव्याप्तिः।।

ननु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धावपि तस्य प्रातिभासिक-तत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणम्, देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसम्भवादिति चेत्? न, तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् न च ज्ञानं तत्र प्रत्यासत्तिः, ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानाद्युच्छेदापत्तेः।।

ननु रजतोत्पादकानां रजतावयवानामभावे शुक्तौ कथं तवापि रजतमुत्पद्यते इति चेत्? उच्यते–न हि लोकसिद्धसामग्री प्रातिभासि-करजतोत्पादिका, किन्तु विलक्षणैव। तथा हि काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा काचिदन्तःकरणवृत्तिरुदेति तस्यां च वृत्ताविदमवच्छिन्नं चैतन्यं प्रतिबिम्बते। तत्र पूर्वोक्तरीत्या वृत्तेर्निर्गमनेनेदमवच्छिन्नं चैतन्यं वृत्त्यवच्छिन्नं चैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति। ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचिक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोष-समवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते।

परिणामो नाम उपादानसमसत्ताककार्यापत्तिः। विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः। प्रातिभासिकरजतं चाविद्यापेक्षया परिणामः, चैतन्यापेक्षया विवर्त इति चोच्यते। अविद्यापरिणामरूपं च तद्रजतमविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्तते। अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादाना-विद्याधिष्ठानाश्रितत्वनियमात्।

ननु चैतन्यनिष्ठस्य रजतस्य कथमिदं रजतमिति पुरोवर्तितादात्म्यम्? उच्यते–यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्, तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेन इदमोऽवच्छेदकतया रजतस्य पुरोवर्तिसंसर्गप्रत्यय उपपद्यते।

तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते।

ननु हि साक्षिण्यध्यस्तत्वेऽहं रजतमिति प्रत्ययः स्यात्, अहं सुखीतिवदिति चेत्। उच्यते–न हि सुखादीनामन्तःकरणावच्छिन्न-चैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तम् अहं सुखीति ज्ञानम्। सुखादीनां घटादिवच्छुद्धचैतन्य एवाध्यासात्, किन्तु यस्य यदाकारानुभवाहित-संस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवानुगतं नियामकम्।

तथा च इदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वात् घटादेरिदमाकारानुभवविषयत्वम्। अहमाकारानुभवाहितसंस्कारसहिता-विद्याकार्यत्वादन्तःकरणादेरहमाकारानुभवविषयत्वम्। शरीरेन्द्रियादेरुभय-विधानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम्। तथा चोभयविधोऽनुभवः इदं शरीरमहं देहोऽहं मनुष्योऽहं ब्राह्मण इदं चक्षुरहं काण इदं श्रोतमहं बधिर इति।।

प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्न-चैतन्यनिष्ठाविद्याकार्यत्वेऽपि इदं रजतमिति सत्यस्थलीयेदमंशाकारा-नुभवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयता, न त्वहं रजतमित्य-हमाकारानुभवविषयतेत्यनुसन्धेयम्।।

नन्वेवमपि मिथ्यारजतस्य साक्षात्साक्षिसम्बन्धितया भानसम्भवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थः? इति चेत्। न, स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयापरोक्ष्यरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात्।।

नन्विदंवृत्ते रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवत् विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेत्? न, वृत्तिद्वयप्रतिबिम्बित-चैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्य स्वीकारात्। अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमाद् अप्रामाण्योक्तिः

साम्प्रदायिकानाम्।।

ननु सिद्धान्ते देशान्तरीयरजतमप्यविद्याकार्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेत्? न त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित्क्षणिकत्वं केषाञ्चित्स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि। यद्वा घटाद्यध्यासे अविद्यैव दोषत्वेनापि हेतुः, शुक्तिरूप्याद्यध्यासे तु काचादयो दोषा अपि। तथा चागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम्। अत एव स्वप्नोपलब्धरथादीनामागन्तु-कनिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम्।।

ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवादिति चेत्? न, रथादेः स्मरणमात्राभ्युपगमे रथं पश्यामि, स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः, 'अथ रथान् रथयोगान् पथः सृजते।' (बृ. 4/3/10) इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च। तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिकाः यावत्प्रतिभासमवतिष्ठन्ते।।

ननु स्वप्नरथाद्याधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदाऽसन्नि-कृष्टतयाऽनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः, तथा च रथाध्यासः कुत्रेति चेत्? न, चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात्प्रतीयमानं रथाद्यस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानम्। देशविशेषोऽपि चिदध्यस्तः प्रतिभासिकः। रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्, तदा सर्वेन्द्रियाणामुपरमात्। 'अहं गजः' इत्यादिप्रतीत्यापादनन्तु पूर्ववन्निरसनीयम्।। स्वप्नगजादयः साक्षान्यायापरिणामा इति केचित्। अन्तःकरणद्वारा तत्परिणामा इत्यन्ये।

ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीमधिष्ठानसाक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धगजादयोऽनुवर्तेरन्। उच्यते, कार्यविनाशो हि द्विविधः–कश्चिदुपादानेन सह, कश्चिद्विद्यमान एवोपादाने आद्यो बाधः। द्वितीयस्तु निवृत्तिः। आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः, तेन विनोपादानभूताया अविद्याया अनिवृतेः, द्वितीये विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिश्च।

तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपञ्चो माबाधि। मुसलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा गजादिनिवृत्तौ को विरोधः।। एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठ-तूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः। मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मतत्त्वसाक्षात्कारमात्रनिवर्त्यतया शुक्तित्वज्ञानेनानिवर्त्यतया रजतस्य तत्र शुक्तिज्ञानान्निवृत्तिमात्रम्, मुसलप्रहारेण घटस्येव। ननु शुक्तौ रजतस्य प्रतिभाससमये प्रातिभासिकसत्त्वाभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात्, किन्त्विदानीमिदं न रजतमिति, इदानीं घटः श्यामो नेतिवदिति चेत्। न, न हि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः, किन्तु लौकिक-पारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः, व्याधिकरणधर्मावच्छिन्न-प्रतियोगिताकाभावाभ्युपगमात्।

ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतम्। न वा? अनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजततत्त्वज्ञानाभावादभावप्रत्यक्षानुपपत्तिः अवगमेऽपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वाद् रजतं पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्तते? इति चेत्? न, पारमार्थिकत्वस्या-धिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युप-गमात्। यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात्।

अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवाद् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः। नन्वेवं यत्र जपाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकलौहित्यं स्वीक्रियतामिति चेत्, न, इष्टत्वात्। एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्यलक्षणाऽनुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः।

उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम्, इन्द्रियजन्यं तदजन्यं चेति। तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षम्, मनस इन्द्रियत्वनिराकरणात्। इन्द्रियाणि पञ्च घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि। सर्वाणि चेन्द्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति। तत्र घ्राणरसनत्वगिन्द्रियाणि

स्वस्थानस्थितान्येव गन्धरसस्पर्शोपलम्भाञ्जनयन्ति। चक्षुः श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः। श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात्। अत एवानुभवो भेरीशब्दो मया श्रुत इति। वीचीतरङ्गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनागौरवम्, भेरीशब्दो मया श्रुत प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात्। तदेवं व्याख्यातं प्रत्यक्षम्।।

## इति प्रत्यक्षपरिच्छेदः।।

# प्रत्यक्षागमयोः प्राबल्यदौर्बल्यविचारः

प्रो. शुद्धानन्दपाठकः

तत्त्वज्ञानसाधनशास्त्रविचारावसरे द्वादशदर्शनानि स्मर्यन्ते। तत्र प्रमाप्रमाणलक्षणानां स्वस्वसिद्धान्तानुसारं प्रतिपादनं कृतम्। प्रमाणविषयेऽपि भिन्नं-भिन्नं मतं वर्तते। यथा चार्वाकः एकमेव प्रत्यक्षप्रमाणं स्वीकरोति। बौद्धाः वैशेषिकाश्च प्रत्यक्षानुमानमिति प्रमाणद्वयं स्वीकुर्वन्ति। सांख्याः विशिष्टाद्वैतिनः प्रत्यक्षानुमानशब्दाः इति प्रमाणत्रयं मन्यन्ते। नैयायिकाः प्रत्यक्षानुमानोपमानागमाश्चेति प्रमाणचतुष्टयमुररीकुर्वन्ति। प्राभाकराः प्रत्यक्षानु-मानोपमानशब्दार्थापत्तिश्चेति पञ्च प्रमाणानि साधयन्ति। भाट्टाः अद्वैतवेदान्तिनः प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिश्चेति षट् प्रमाणवादिनश्च। इमान्येव षट् प्रमाणानि प्रसिद्धानि सन्ति, किन्तु चत्वार्यन्यान्यपि प्रमाणानि सम्भवम् ऐतिह्यं चेष्टा प्रतिभा चेति स्वीक्रियन्ते।

तत्र प्रमाकरणं प्रमाणमिति प्रमाणस्य लक्षणं क्रियते। प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणं, यदि प्रमाकरणं प्रत्यक्षप्रमाणमुच्यते चेत् – अनुमानादौ गच्छति तद्वारणाय प्रत्यक्षेति। यदि प्रत्यक्षकरणं प्रत्यक्षप्रमाणमुच्यते चेत् भ्रमकरणेऽति-व्याप्तिः अतः तन्निवारणाय प्रमापदं दत्तम्।

अद्वैतवेदान्तमते आगमप्रमाणस्य लक्षणं क्रियते यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम्। अर्थात् मानान्तराबाधित-तात्पर्य-गोचरीभूत-पदार्थसंसर्गबोधकवाक्यं शब्दप्रमाण-मित्यर्थः।

यदि तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम् इत्येव लक्षणं क्रियते चेत् तर्हि शब्दसमानार्थके प्रमाणान्तरेऽतिव्याप्तिः भवति यतो हि सर्वेषां प्रमाणानां तात्पर्यविषयीभूतसंसर्गो भवत्येव अतः वाक्यस्य इति पदं दत्तम्।

'वह्निना सिञ्चेत्' इति वाक्यस्य प्रमाणतानिरासाय मानान्तरेण न बाध्यते इति पदं दत्तम्। एतद्वाक्यं तु प्रत्यक्षप्रमाणेन बाध्यते।

''यस्य वाक्यस्य अर्थः मानान्तरेण न बाध्यते'' इत्येव उच्यते चेत्तर्हि पशुयागस्याऽर्थवादवाक्ये 'स प्रजापतिरात्मनो वपामुदखिदत्' इत्यत्र प्रत्यक्षप्रमाणेन बाधितत्त्वात्-अव्याप्तिः, तद्वारणाय ''तात्पर्यविषयीभूतादि'' इति उक्तं, तात्पर्यविषयीभूतसम्बन्धः वपायाः उत्खाते नास्ति किन्तु पशुयागस्य प्रशंसायां वर्तते। प्रशंसाऽर्थो मानान्तरेण बाधितो नास्ति। अतः अस्य वाक्यस्य तात्पर्यविषयीभूतसम्बन्धो मानान्तरेण अबाधितत्त्वात् एतद्वाक्यं प्रमाणम्। अनेन वाक्येन पशुयागस्य प्रशंसयाऽवश्यकर्तव्यता दर्शिता।

ननु सर्वेषु प्रमाणेषु ज्येष्ठप्रमाणं प्रत्यक्षप्रमाणं वर्तते, शब्दप्रमाणं प्रत्यक्षविरोधि वर्तते तथा शब्दप्रमाणस्य कृते प्रत्यक्षप्रमाणस्याऽपेक्षाऽस्ति अतः शब्दप्रमाणस्य एव अप्रामाण्यमुपचरितार्थत्वञ्च भवेत्। उक्तञ्च भामत्याम्–

[1]ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थकं चेति। तत्रोक्तं [2]'तस्याऽपौरुषेयतया निरस्तसमस्तदोषाशंकस्य बोधकतया स्वतः सिद्धप्रमाणभावस्य, स्वकार्ये प्रमितौ - अनपेक्षत्वात् वेदे - अप्रामाण्यं नास्तीति। श्रुतयः यस्याऽऽत्मतत्त्वस्य प्रतिपादनं कुर्वन्ति, तासां प्रत्यक्षप्रमाण- विरुद्धत्वेऽपि - अप्रामाण्यं नहि भवति। यथा प्रत्यक्षप्रमाणेन चन्द्रसूर्यादि- ग्रहाणामल्पपरिमाणं गृह्यते किन्तु शास्त्रप्रमाणेन महत्परिमाणं स्वीक्रियते, तत्र प्रत्यक्षस्य बाधो जायते तद्वत् प्रत्यक्षागमयोर्मध्ये प्रत्यक्षस्य बाधो भवति अतः प्रत्यक्षप्रमाणं दुर्बलम् - आगमप्रमाणं प्रबलं सिद्ध्यति।

ननु ज्येष्ठप्रत्यक्षप्रमाणस्य प्रथमप्रवृत्तत्वात् बलिष्ठत्वम् - आगम प्रमाणस्यानन्तरप्रवृत्तत्वात् दुर्बलत्वमप्रामाणिकत्वञ्चेति चेन्न; ज्येष्ठत्वञ्चान-पेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे, रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्; अर्थात् 'इदं रजतं' इति ज्येष्ठं पूर्वं ज्ञानं भवति तत्पश्चात् कनिष्ठं ''इयं शुक्तिः'' इति ज्ञानं जायते, तेन कनिष्ठज्ञानेन

1. भामती अध्यासभाष्यम्
2. भामती

पूर्वमुत्पन्नं ज्येष्ठज्ञानस्य बाधो भवति, तद्वत् आगमप्रमाणेन प्रत्यक्षप्रमाणस्य बाधो जायतेऽतः आगमप्रमाणस्य प्रबलत्वादप्रामाणिकत्वं नास्तीति

तथा च प्रत्यक्षागमयोः प्राबल्यदौर्बल्यविचारे पारमर्षं सूत्रमपि– "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्"[1] इति। तथा च

**पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।**
**अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्॥**[2] इति।

ज्योतिष्टोमयागे ऋत्विजः प्रातःसवने बहिः पवमानेन स्तोष्यमानाः यज्ञशालातः बहिर्निर्गत्य एकस्य पृष्ठतोऽन्य इत्येवं पिपीलिकापङ्क्त्याकारेण गच्छन्ति तत्र पुरतो गन्तुः कच्छं गृहीत्वा एव अपरेण गम्यते, तेषु यदि प्रमादात् उद्गाता गृहीतकच्छम् – ऋत्विजं मुञ्चेत्, तदा दक्षिणाम् अदत्वैव प्रक्रान्तो यज्ञः समापनीयः तं सम्पाद्य पुनरपि स यज्ञः प्रयोक्तव्यः, तस्मिन् प्रयोगे पूर्वं यत् दित्सिंत तद्दद्यात्।

यदि प्रतिहर्ता प्रमादात् कच्छं मुञ्चेत् तस्मिन् एव प्रयोगे सर्वस्वं दद्यादिति, तत्र उद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे अदक्षिणत्वसर्वस्वदक्षिणत्व–योर्विरुद्धयोः समुचित्य अनुष्ठानायोगात्, अन्यतरस्य–अनुष्ठेयत्वे प्राप्ते किमुद्गात्रपच्छेदनिमित्तकमदक्षिणं कर्म–अनुष्ठेयमुत सर्वस्वदक्षिणाकमिति संशये, अनन्तरं प्रतिहर्त्रपच्छेदेऽपि उद्गात्रपच्छेदकाले प्रतिहर्त्रपच्छेद–अभावेन–अनुपजातविरोधित्वादुद्गात्रपच्छेदनिमित्तकमदक्षिणमेव कर्माऽनुष्ठेयमिति पूर्वपक्षे, इदमाह सूत्रकारः –

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्, इति निमित्तभूतयोरपच्छेदयोः पौर्वापर्ये सति पूर्वस्य पूर्वनैमितिकस्य दौर्बल्यं, पूर्वनिरपेक्षं हि यदुत्तरं निमित्तं तत् पूर्वस्य बाधकत्वेन एव उदेति, तत्काले च उत्तरस्य–अप्राप्तत्वेन न तद्बाधकत्वं पूर्वस्मिन्सम्भवति, तस्मात् तत्र सर्वस्वदक्षिणाकमेव कर्मानुष्ठेयमिति, तद्वत् प्रत्यक्षागमयोर्मध्ये आगमस्यैव प्राबल्यमिति। अत्र पूर्वस्य परेण बाधे दृष्टान्तः प्रकृतिवदिति। प्रकृतौ "कुशमयं बर्हिस्तृणातीति" विधिः श्रूयतेऽतः कुशमयैर्बर्हिभिः आस्तरणं विधीयते, विकृतौ तु "शरमयं बर्हिस्तृणाति" इति पृथक् विधिः श्रूयते, तत्र यद्यपि 'प्रकृतिवद्विकृतिः

1. जैमिनिसूत्रम् 6/5/54, 2 तंत्रवार्तिकम् (तं. वा. पृ. 859)

कर्तव्या'' इति अतिदेशात् प्रकृतौ-उपकारककुशमयैर्बर्हिभिः आस्तरणमपेक्षितं, न तु शरमयैः बर्हिभिः, तथापि (विकृतौ) = तत्र श्रूयमाणो विधि र्निरवकाशः स्यात्-इति शरमयैः बर्हिभिः बाध्यन्ते पूर्वप्राप्ता अपि कुशाः। तद्वत् प्रत्यक्षागमयोः मध्ये आगमेन एव प्रत्यक्षं बाध्यतेऽतः आगमस्यैव प्राबल्यमिति।

अन्यदेकमुदाहरणं प्रकृतौ विधिः श्रूयते ''पञ्च प्रयाजाः इज्यन्ते'' विकृतौ ''नव प्रयाजाः इज्यन्ते'' अत्रापि ''प्रकृतिवद् विकृतिः कर्तव्या'' अनेन न्यायेन विकृतौ- अपि पञ्च प्रयाजाः प्राप्यन्ते किन्तु 'नव प्रयाजाः इज्यन्ते' इति विधिः निरवकाशः भविष्यति अतः सावकाशनिरवकाशयोर्मध्ये निरवकाशस्यैव प्राबल्यमतः नवत्वसंख्याद्वारा पञ्चत्वसंख्या बाध्यते। तद्वत् आगमद्वारा प्रत्यक्षं बाध्यतेऽतः आगमस्यैव प्राबल्यमिति।

# शब्दप्रमाणम्

प्रो. एस. एन. रमामणिः

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे।।

धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः, यतो हि "न स पुनरावर्तते, यद् गत्वा न निवर्तन्ते" "तरति शोकमात्मवित्" "तमेव विदित्वातिमृत्युमेति" इत्यादि- श्रुतिभ्यः अवगन्तुं शक्यते मोक्ष एव परमपुरुषार्थ इति। धर्मार्थकामानां फलस्य अनित्यत्वात् मोक्षफलस्य नित्यत्वम् "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवात्र पुण्यचितो लोकः क्षीयते" इत्यादि श्रुतिभिः ज्ञायते (त्रयाणामनित्यत्वं मोक्षस्य नित्यत्वं तदपि ब्रह्मज्ञानादिति) सर्वप्रथमं ब्रह्म तज्ज्ञानं तत्प्रमाणं च संक्षेपेण निरूप्यते। प्रमाकरणं प्रमाणम्। अद्वैतिनां प्रमाणानि षट्। प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात्। प्रत्यक्षमेकं प्रमाणमिति चार्वाकाः, प्रत्यक्षानुमानमिति काणादः सुगतमतानुयायिनः। सांख्यनये त्रीणि प्रमाणानि। नैयायिकानां चत्वारि प्रत्यक्षानुमानोपमानशब्दाः चेति। प्राभाकराणां पञ्च अर्थापत्तिसहितम्। विशिष्टाद्वैतिनां मते त्रीणि प्रमाणानि इति प्रमाणानां संख्या उक्ता। इदानीमद्वैतमते शब्दप्रमाणमधिकृत्य किञ्चिद् विचार्यते। शब्दप्रमाणमित्युक्ते आगमप्रमाणम्। आ सम्यग् गम्यते ज्ञायते अर्थः अनेन इत्यागमो वाक्यविशेषः स एव प्रमाणम् आगमप्रमाणम्। वैशेषिकादयः प्रत्यक्षानुमाने द्वे एव प्रमाणे अङ्गीकुर्वन्ति। तेषां नये अनुमानविधया शब्दस्यान्तर्भावः।

न्यायवार्तिककारानुसारं "शब्दो न अनुमानविधया अर्थप्रत्यायकः, अनुमाने पक्षः पक्षधर्म, सपक्षान्वयः विपक्षव्यतिरेकश्च अपेक्षिता भवन्ति" इति। शब्दे उक्तचतुष्टयमपि न विद्यते। अतः शब्द अतिरिक्तप्रमाणम् इति अभ्युपगन्तव्यमेव।

अद्वैमते शब्दप्रमाणं पृथक् प्रमाणमेव। वेदान्तपरिभाषायां यदुक्तं तदत्र विचार्यते। मानान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकत्वं यस्य वाक्यस्य तद्वाक्यं शब्दप्रमाणमिति। वाक्यजन्यज्ञाने चत्वारि कारणानि। आकाङ्क्षायोग्यतासत्तयः तात्पर्यज्ञानञ्चेति। पदार्थानां परस्परजिज्ञासा विषयत्वयोग्यत्वम् आकाङ्क्षा। अत्र क्रिया श्रवणे कारकस्य, कारकश्रवणे क्रियायाः करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासा विषयत्वात्। अत्र जिज्ञासा विषयस्योदाहरणम् लौकिकम् गामानय, वैदिकन्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादीनि पदानि तात्पर्यविषयपदार्थसंसर्गप्रमापूर्वकानि तात्पर्यज्ञानस्य भवन्ति। गामानय इति वाक्ये आनयेति क्रियायाः वाचकशब्दश्रवणे घटादिकर्मकारकस्य जिज्ञासाविषयत्वं घटमिति कर्मकारकबोधकशब्दश्रवणे आनयनादिक्रियायाः जिज्ञासाविषयत्वं, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति स्वर्गकरणबोधशब्दश्रवणे प्रयाजाद्यङ्गस्य जिज्ञासाविषयत्वमित्यर्थः। अतः पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वरूपा आकाङ्क्षा इति। योग्यता च तात्पर्यविषयसंसर्गाबाधः। तत्त्वमस्यादिवाक्येष्वपि लक्ष्यस्वरूपाभेदे बाधाभावाद् योग्यता इति अर्थात् वाक्यस्य तात्पर्यविषयीभूत संबन्धस्य बाध यत्र नास्ति, तत् एव योग्यतायाः लक्षणम्। 'वत्सं बधान' इत्यस्मिन् वाक्ये वत्सकर्मकबन्धनम् तात्पर्यविषयीभूतसंसर्गः केनापि प्रमाणेन बाधित न स्यात् इति संसर्गाबाधः।

"आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः" अर्थात् पदज्ञान-जन्यान्वयप्रतियोग्युपस्थितिरेवासत्ति इति। पदार्थश्च शक्यः लक्ष्यश्चेति द्विविधः। यत्र मुख्या वृत्तिः पदानां अर्थेषु सा शक्तिः नाम।

सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया। तदेव शक्यत्वम्। अधुना लक्ष्यपदार्थः विचार्यते लक्षणाविषयो लक्ष्यः पदार्थः। शक्यसम्बन्धः लक्षणा तद्विषयो लक्ष्य इति। लक्षणा द्विविधा—केवललक्षणा लक्षितलक्षणा इति। गङ्गायां घोष इत्यत्र तीरे गङ्गापदस्य केवललक्षणा। प्रवाहसाक्षात्सम्बन्धिनि तीरे एव केवललक्षणा। यत्र शक्यपरम्परासम्बन्धेन अर्थान्तरप्रतीतिः तत्र लक्षितलक्षणा। द्विरेफपदस्य रेफद्वयशक्तस्य भ्रमरपदघटितपरस्परासम्बन्धेन अर्थान्तरे मधुकरे वृत्ति इति लक्षितलक्षणा।

1. प्रकारान्तरेण लक्षितलक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति। एतेषां क्रमशः उदाहरणानि– विषं भुङ्क्ष्व इत्यत्र स्वार्थरहितं शत्रुगृहे भोजननिवृत्तिर्लक्षिता।

2. अजहल्लक्षणाया उदाहरणं शुक्लो घटः इत्यत्र हि शुक्ल शब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव घटे द्रव्ये लक्षणया तिष्ठति इति।

3. जहदजहल्लक्षणा– यत्र विशिष्टवाचकशब्दः स्वार्थैकदेशं विहाय एकदेशे वर्तते इति। एवं द्विविधोऽपि पदार्थो उक्तः, तदुपस्थितिश्चसन्ति। सा शाब्दबाधे हेतुः। एवं महावाक्यार्थबोधे अवान्तर वाक्यार्थबोधः हेतुः, अन्वयार्थं तात्पर्यम् अवश्यमेव ज्ञातव्यम्। तत्प्रतीतिजननयोग्यत्वं तात्पर्यम्। तच्च तात्पर्यं वेदे मीमांसाशोधितन्यायादेवादधार्यते। अत एव वेदान्तवाक्यानां ब्रह्मणि तात्पर्यम् इति। "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्यादिश्रुतेः। अतः वेदानां पौरुषेयत्वं नास्ति। विशुद्धे ब्रह्मणि चैतन्ये वेदान्तानां तत्त्वमस्यादिवाक्यानां तात्पर्यमुपक्रमादिभिः षड्विधैर्लिङ्गैः प्रतिपाद्यते येन तत्त्वमस्यादिमहावाक्यानां बोधो जायते। तत्त्वमसीत्यस्य वाक्यस्य अद्वितीयं ब्रह्म तात्पर्यं षड्भिर्लिङ्गैरवधार्यते।

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।**

इति छान्दोग्ये षष्ठप्रपाठके

**"सदेव सोम्य इदमग्र आसीत्। एकमेवाद्वितीयम्** इत्युपक्रमः। **तत्सत्यं स आत्मा तत्त्वमसीत्युपसंहारः**। यत्र उपक्रमे उपसंहारे ब्रह्म विषयकैकवाक्यता अस्ति तत् वाक्यं तात्पर्यमिति।

**"तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो"** इति नवधा अभ्यासः, अत्र पौनः पुन्येन कथनं वाक्यं तात्पर्यमिति। **"येनाश्रुतं श्रुतं भवति, अमतं मतं भवति, अविज्ञातं विज्ञातं भवतीत्यादिना** तात्पर्यविषयीभूत– स्याद्वितीयस्य ब्रह्मणः प्रमाणान्तरागोचरत्वादपूर्वता निश्चीयते। **"यथा सोम्य एकेन मृन्मयेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति, मृत्तिका इत्येव सत्यमित्यादिवाक्येन मृद् उदाहरणेन अद्वितीयार्थे**

उपपत्तिरुक्ता। उपपत्त्या च अर्थसन्देहविपरीतभावनादिनिवृत्तिः। एवं आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये इत्यादिवाक्येन तात्पर्यार्थस्य प्रशंसा अर्थवादः। ब्रह्मज्ञानं जीवब्रह्मणोरैक्यं फलम्। षड्भिः लिङ्गैः वेदान्तवाक्यानां तात्पर्यावबोधनं भवति। ब्रह्मसूत्रभाष्यमुखात् प्रथमाध्यायप्रथमपादद्वितीयसूत्रे **जन्माद्यस्य यतः** इति सूत्रं ब्रह्म अवगन्तुं नोच्यते अपि तु श्रुतिवाक्येभ्यः अवगमनायोक्तम्। तत्रैव तृतीयाधिकरणे शास्त्रयोनित्वाधिकरणे ब्रह्मज्ञानार्थं शास्त्रमेव कारणम् इति, शास्त्रमपि ऋग्वेदादि इति साक्षात् श्रुतिप्रमाणं ब्रह्मसाक्षात्कारे इति निर्धारितम्। अत्रैव शांकरभाष्ये द्वितीयाध्याये प्रथमपादे अविरोधाध्याये एकादशाधिकरणे एवमुक्तम्

"यद्यपि क्वचिद् विषयतर्कस्य प्रतिष्ठितत्वम् उपलक्ष्यते....नहि इदम् अतिगम्भीरं भावयथात्म्यं मुक्तिनिबन्धनं **आगममन्तरेण** उत्प्रेक्षयितुमपि शक्यम् इति। अत्रैव द्वितीयाध्याये प्रथमपादे प्रथमसूत्रे भाष्यावसरे उक्तम् यथा–"न च अतीन्द्रियान् अर्थान् श्रुतिम् अन्तरेण कश्चिद् उपलभ्यते इति वाक्यं सम्भावयितुं, निमित्ताभावात्। अत्रैवोक्तम्–यत्तु उक्तं परिनिष्पन्नत्वाद् ब्रह्मणि प्रमाणान्तराणि सम्भवेयुः इति तदपि मनोरथमात्रम्, रूपाभावाद्धि नायम् अर्थः प्रत्यक्षगोचरो, लिङ्गाद्यभावात् च न अनुमानाधीनम्, आगम मात्रसमधिगम्य एव अयं अर्थो धर्मवत् इति आगमप्रमाणस्यैव मुख्यत्वेनोक्तम्।"

शब्दप्रमाणमेव अपरोक्षज्ञानकारणं ब्रह्मसाक्षात्कारार्थम्। यद् साक्षाद् अपरोक्षात्ब्रह्म इति श्रुतेः। अत एव नारद सनत्कुमार संवादे 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः, "तद्धास्य विजज्ञौ तद्धास्य विजज्ञौ" तं त्वौपनिषदं पुरुषं पृच्छामि इत्यादावुपदेशमात्रजन्य साक्षात्कारविषयत्वं ब्रह्मणः प्रतिपाद्यते। ब्रह्मणः वेदान्तोपजीव्यतया मानसोपसनागम्यत्वेन स्वतन्त्रतया मनोऽगोचरत्वात् वेदान्तानां मनसा ब्रह्मसाक्षात्कारे जननीये सहकारितामात्रकल्पनं न युक्तम्। अत एव यन्मनुते इत्यादि श्रुतिः। अतः शब्दस्य ब्रह्मसाक्षात्कारजनकत्वाम्नानात् तत्सहकारित्वमेव मनसो युक्तम्। "मनसैवेदमवाप्तव्यम्" इति श्रुतिस्तु वेदान्तसम्मतमनोविषया। तस्मात् श्रवणादि अङ्गतया मननादिविधानमुक्तम्। यतो वाचो निवर्तन्ते इति श्रुतिस्तु वेदान्तेतरवागविषयत्वेन ब्रह्मणः श्रावयति। वेदान्तवाक्यानि ज्ञेयतया

ब्रह्म प्रतिपाद्य अनुपदमेव "यतो वाचो निवर्तन्ते" इति वागविषयत्वं बोधयन्ति, स्वेतर वाग्विषयत्वं ब्रह्मणो वेदयन्ति। ब्रह्म विदाप्नोति परमित्युपक्रम्य ब्रह्मविद्यायां भृगुवल्ल्यां च वल्लीद्वयपि निर्विशेषविषयं ब्रह्मसाक्षात्कारमेव मोक्षसाधनमुपदिशति। अत्र शब्दापरोक्षवादसमर्थनम् प्रकाशात्मयति एवं संपूर्णविवरणप्रस्थानानुयायिनः सर्वे आत्मसाक्षात्कारार्थं प्रधानसाधनं श्रुतिः एवं शब्दप्रमाणं अङ्गीकुर्वन्तः शब्दजन्यज्ञानस्यैवापरोक्षत्वं मन्यन्ते। मधुसूदनसरस्वत्य अपि स्वाद्वैतसिद्धौ, सिद्धान्तबिन्दौ एवं वेदान्तकल्पलतिकायां शब्दापरोक्षवादस्य समर्थनं कृतम्। अतः शब्दजन्यज्ञानं ब्रह्मसाक्षात्कारस्य प्रधानसाधनम् एव अभ्युपगन्तव्यम्। एवं च अद्वितीय-निरस्तसमस्तोपाधिनित्यशुद्धमुक्तप्रत्यगभिन्नब्रह्मस्वरूपादिसिद्धिः आगमस्य फलमिति, वेदान्तपरिभाषायामुक्तम्। अतः शब्दप्रमाणनिरूपणम् आवश्यक-मेवेति।

# आगमस्य प्रामाण्यविवेचनम्

डॉ॰ धनञ्जयकुमारपाण्डेयः

अथेहौपनिषद्दर्शने "तं त्वौपनिषदं पुरुषं पृच्छामीति" श्रुत्या यथा- वेदान्तागमस्य प्रामाण्यव्यवस्थितिवेलायां यथामति संपेक्षतो विविच्यते। किमप्यपेक्ष्यैवान्यैः प्रामाण्यमुपवर्ण्यते। अद्वैतिभिर्निर्विशेषब्रह्मवादिभिस्तावदन-पेक्षमेवागमप्रमाणं स्वविषये राजत इति त्रिविधप्रस्थानानुगतवेदान्तग्रन्थरत्नेषु प्रत्यपादि। श्रुतिव्याख्यानावसरे भगवत्पादैः[2] "स्वेन वात्मना व्यवस्थितो य औपनिषदः पुरुषोऽशनायादिविवर्जितः उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्य, तं त्वां विद्याभिमानिनं पुरुषं पृच्छामि" इति न्यरूपि श्रुतेः प्रामाण्यमाहात्म्यम्।

अत्रायं निष्कर्षः - वेदान्तमीमांसायां यथा स्वयं प्रकाशायाश्चितः अन्यानधीनप्रकाशत्वं तथैव तस्यास्तत्प्रतिपादकोपनिषद्वाक्यानाञ्चान्यानधीन-प्रामाण्यं बोध्यते। एतच्च ब्रह्मस्वभावमनतिक्रम्यैवोपपादितं भवति। द्वैतिभिस्तावत्स्वाभिमतसिद्धान्तानुगुणमेव प्रामाण्यं व्यवस्थाप्यते येन सिद्धान्तश्च्युतिर्न स्यात्। तद्वदत्रापि ब्रह्ममीमांसायां ब्रह्मस्वरूपानुसारि प्रामाण्यविवेचनमिति निश्चीयते। सर्वेषां वेदान्तानामद्वैतलक्षणब्रह्मणि परमं तात्पर्यमवधार्यते, तच्च ब्रह्म श्रुतिमात्रबोध्यमित्यायाति। अत एव श्रुतेस्तु शब्दमूलत्वादितिसूत्रभाष्ये भगवत्पादवचनमाम्नायते[3]-

किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत। तथा च पौराणिकाः-

---

1. बृहदारण्यकोपनिषत्- 3-9-26
2. तत्रत्यं शाङ्करभाष्यम्
3. शारीरकभाष्यम् - 2-1-9-27

**अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्।**
**प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्।**

तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगम इति, सर्वधर्मोपपत्तेश्चेति सूत्रभाष्ये[1] तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमित्यपि प्राहुर्येन प्रामाण्य-विचारणावसरं लभते। अध्यासभाष्यारम्भस्य भामत्यां प्रामाण्यचर्चैषा सूत्ररुपेण कृतास्ति। तत्रत्या भामती भवति यथा- "अहमनुभवस्तु प्रादेशिकमनेक-विधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः"[2]

इति ग्रन्थादारभ्य प्रामाण्यं विस्तारयति ग्रन्थकारः। अत्रेदं बोध्यम्- अत्र श्रीवाचस्पतिमिश्राभिमतपक्ष उपस्थाप्यते भगवत्पादैः स्वीये भाष्ये अध्यासप्रदर्शनावसरे[3] ''तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तमिति'' प्रादर्शि। एवञ्च भेदाग्रहेण व्याप्तो ह्यध्यासो मन्तव्यो भवति। भेदस्य च प्रत्यक्षसिद्धत्वाद् व्यापकाभावादेव व्याप्याभाव आयाति। अहमिति अनुभवे आत्मतत्त्वं यच्छ्रुत्यभिप्रेयमस्ति न प्रकाशते अतश्च भेदाग्रहस्य सत्त्वादध्यास उपपद्यत एव। वर्णितो ह्यात्मा केवलं वेदान्तवाक्यैरेव बोध्यते येनोक्तवाक्यानां प्रामाण्यम्। लोकसिद्धवस्तुसङ्कीर्तनेना-गमवाक्यानां तादृशं प्रामाण्यं वक्तुं शक्येत। अहमित्यनुभवे मुख्यस्यात्मनो भासमानत्वमुपयुज्यते। यद्येवं स्यात्तर्हि आत्मा वाऽरे द्रष्टव्य इत्यादिवाक्यानां वैयर्थ्यमेव स्यात्। एतेनाप्रामाण्यमप्युपदर्शितं भवति। एतदेवाक्षिप्य भामतीग्रन्थे वेदान्तानामपौरुषेयतया प्रामाण्यं सङ्कलितं विद्यते। उक्तञ्च[4] ''तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया च स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वादिति'' एतेन विपरीतार्थबोधकत्वमात्मनि प्रतिषिद्धं भवति येन तद्गतं नास्त्यप्रामाण्यावसरः। एवं रीत्या उपनिषद्वाक्यानामबोधकत्वं संदिग्धार्थबोधकत्वञ्चापि नोपपद्यते। आगमस्य सर्वथा प्रामाण्यमेव येन तदुक्तात्मनो मुख्यत्वमपि न व्याहन्यते। अतश्च अहमर्थस्य मुख्यत्वपक्षोऽपि

---

1. तत्रैव – 2-1-13-37
2. अध्यासभाष्यभामत्याम्
3. अध्यासभाष्यम्
4. तत्रैव भामत्याम्

खण्डितो वेदितव्यः। उक्तक्रमेणात्र प्रत्यक्षादीनां बलवत्त्वमपि निराकृतम्। शास्त्रयोनित्वाधिकरणे आचार्याः प्राहुः[1]– "यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे"। अग्रेऽपि– "शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्रायः" इति। एतद्भाष्यप्रतिपादनेन शास्त्रप्रामाण्यं विस्पष्टमेवावबोध्यते एतस्यावसरे श्रीभामतीकृतो वदन्ति[2] "इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वम्, शास्त्रस्य चापौरुषेयत्वं प्रामाण्यञ्चेति।" अत्र प्रामाण्यमिति मीमांसायां वक्तव्यम्– तत्तद्दर्शनाभिमतप्रामाण्यप्रदर्शनस्यापि समीक्षायामायाति निष्कर्षस्तेनाद्वैतपक्ष एव सिद्ध्यति।

प्रमितेरर्थप्रकाशकत्वं सर्वैरपि स्वस्वरीत्योपवर्णितमस्ति। प्रमात्वं वा प्रमाणत्वं प्रामाण्यं वा, भावार्थकोऽयं प्रामाण्यशब्द एकत्र प्रतिपादितो भवत्यपरत करणार्पकश्च ल्युट्प्रत्ययान्तः प्रमाणशब्दोऽपि ख्यातः। प्रदर्शित–रीत्योभयत्रापि प्रामाण्यं विवेचनीयम्। सर्वेऽपि दर्शनकारा विषयेऽस्मिन् प्रामाण्यं विस्पष्टं प्रतिपादयन्ति। सर्वेषामिहाभ्युपगमसारः श्लोकरूपेण श्रूयते[3]–

**प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः**
**नैयायिकास्ते परतः, सौगताश्चरमं स्वतः।**
**प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः**
**प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्।। इति,**

एतेन सर्वेषामपि प्रामाण्यपक्षो वर्णितो जायते। वस्तुतोऽद्वैतदर्शने या प्रामाण्यचर्चा सैव विशेषरुपेणावतार्यते। सर्वेषामपि प्रमाणानां बाधितार्थविषयत्वेन श्रुत्यभिप्रेतार्थविषयतयाऽगमस्य प्रामाण्यं सर्वतोऽपि जयति। अत एव श्रीहर्षमिश्रैरुक्तम्[1]–

**तत्राद्वैतश्रुतेस्तावद् बाधः प्रत्यक्षतः क्षतः।**
**नानुमानादि तं कर्तुं तवापि क्षमते मते।।**
**अद्वैतागमनासीरे साधु साधुन्वतीपरान्।**
**सेवामेवार्जयत्यर्थापत्तिश्चेति परम्परा।। इति।**

1. शारीरकभाष्यम् 1–1–3.3
2. तत्रैव भामत्याम् 1–1–3.3
3. सर्वदर्शनसंग्रहः – पृ. 13

कारिकाभ्यां श्रुत्यर्थस्य सर्वथाऽबाध्यत्वमेव प्रसज्यते, भेदस्य च प्रत्यक्षसिद्धस्य बाधः प्रत्यक्ष एव। एवञ्च श्रुतिजन्यज्ञानस्यापि जन्यत्वं न वस्तुतोऽपित्वस्याभिव्यक्तिरेव सा च वृत्त्यापादितैवेति ग्रथ्यते। अथवा ब्रह्मज्ञाने नास्ति परमार्थतः श्रुतिजन्यत्वमपितु अविद्याप्रयुक्तमेव। न च तस्याविद्यकस्य परमार्थभूतसद्वस्तुना विरोधोऽपि अत एव भामतीकाराः सङ्गिरन्ते।[2]

"न ह्यागमज्ञानं सांव्यावहारिकं प्रत्यक्षस्य प्रामाण्युपहन्ति, येन कारणाभावान्न भवेदपि तु तात्त्विकम्। न च तत्तस्योत्पादकम्। अतात्त्विकप्रमाण भावेभ्योऽपि सांव्यावहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् इति"। अनेन जन्यत्वमादायाक्षेपोऽपि निरस्तो वेदितव्यः। ननु कथं तर्हि, ज्येष्ठेन प्रत्यक्षप्रमाणेन आगमस्य प्राबल्यमिति शङ्कायां सत्यां भामतीवचनमादरणीयम्[3]– "ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे, रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् इति"। अनेन तात्त्विप्रमाणस्यानपेक्षितत्वमपि उक्तं भवति"।

वस्तुतस्तु आबोधात् श्रुतेः प्रामाण्यं यदवबोध्यते, तस्यापि प्रामाण्यं स्वत एवेति स्वीकुर्वन्ति, वेदान्तविदो ब्रह्ममीमांसायाम्। खण्डनग्रन्थाशयानुरोधेन सर्वस्यापि अविद्याप्रयुक्तत्वादेवाभिधानम्। आगमेतरसर्वाण्यपि प्रमाणानि 'तस्य भासा सर्वमिदं विभाति' इत्यादिनिरूपणेनागमार्थावधारितमात्मानमेव पारम्पर्येण ब्रुवते।

[1]"'तदेवमशेषोपनिषदामखण्डैकरसे ब्रह्मणि स्वतःसिद्धमेव प्रामाण्यमिति सिद्धम्' इति ब्रुवद्भिः चित्सुखमुनिभिः अखण्डार्थप्रतिपादकत्त्वेन वेदान्तानां परमं प्रामाण्यमुपपादितम्। कथं तावत्स्वतःसिद्धं प्रामाण्यमिति चर्चायां किञ्चित्सङ्कीर्त्यते।[2] न तावत्प्रमायाः स्वतस्त्वानिरुक्तिः, यतः–

**आहुर्विज्ञानसामग्रीजन्यत्वे सत्यजन्यता।**
**तदन्यतः प्रमायास्तत्स्वतस्त्वमिति तद्विदः॥** इति,

1. खण्डनखण्डखाद्ये, भेदखण्डने श्लो. 20,21
2. अध्यासनिरूपणे, लक्षणे–भामती
3. तत्रैव, भामत्याम्

एतेन प्रमायाः स्वतस्त्वं नाम तद्धिज्ञानसामग्रीजन्यत्वे सति तदतिरिक्त हेत्वजन्यत्वमवगन्तव्यम्। अन्यथा विज्ञानदशायां जानामि न वेति संशयः, न जानामीति वा विपर्ययः, व्यतिरेकप्रमा चावश्यमेव तज्ज्ञातुः स्यादेव। न तयाऽवगम्यतेऽतः पूर्वोक्तवचनं सुष्ठु उक्तञ्चैतत् खण्डने[3]– "तेन जिज्ञासितस्य अतत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितित्वमानयति" इति प्रोक्तम्– येन संशयादिराहित्येन प्रमायाः स्वतस्त्वमेव स्यान्न परतस्त्वमिति। एतेनाभावसमुदायेनोक्तेनार्थतः प्रमितत्त्वं बोधिभवति। अतश्च कारिकया यदुच्यते तत्र प्रमायाः स्वतस्त्वं सिद्ध्यति। कल्पेनानेन वेदान्तानां स्वार्थबोधनेऽनपेक्षितत्वमेव दर्शितं भवति। प्रामाण्यं त्वत्र तेषामस्त्येव। केवलं स्वतस्त्वमेवावतार्यत इति बोध्यम्। लोकदशायामपि घटपटादिबोधानां स्वतस्त्वमिदं ज्ञेयम्। न च तत्रानुव्यसायादिना व्यवसायात्मकज्ञाननिश्चयो-ऽभ्युपेयः, तस्य तस्याप्यपेक्षायामनवस्थायास्तत्र तत्र प्रसक्तत्वात्। न च नैयायिकादिरीत्या यथा– प्रामाण्यस्य सफलप्रवृत्तिजनकत्वहेतुकेनानुमानेन अप्रामाण्यस्य च विफलप्रवृत्तिजनकत्वहेतुकेनानुमानेन सिद्धिर्दृश्यते, तथेहाभ्युपगम्यते।

वेदान्तपरिभाषायां तु तत्त्वावेदकत्वेनैव प्रत्यक्षादिप्रमाणानां प्रामाण्य-मिति विचारितमस्ति। तत्त्वावेदकत्वमस्य पारमार्थिकापारिमार्थिकभेदेनाव-गन्तव्यम्। ब्रह्मस्वरूपावगाहि–आगमप्रमाणव्यतिरिक्तानां बाधितार्थावगाहि-प्रत्यक्षादिप्रमाणां केवलमविद्यावद्विषयत्वेन आब्रह्मसाक्षाकारादस्ति व्यावहारिकं प्रामाण्यमिति तदुक्तरीत्या तत्प्रतिपादनाद् दृश्यते। अयमेवार्थः सर्वत्रापि प्रामाण्यमिति। अयमेवार्थः सर्वत्रापि प्रामाण्यचर्चायां विवृतमस्ति वेदान्तप्रस्थानेषु। क्वचिच्चेयं चर्चा प्रामाण्यमिति शब्देनावतार्यते, क्वचिच्च ब्रह्मस्वरूप-विचारणामवलम्ब्य, तत्तद् विषयनिरूपणमाध्यमेन च। अत्र सर्वस्यापि ब्रह्मविचारशास्त्रस्य तात्पर्यभूतं निर्विशेषमेव श्रुत्यनुमोदितं यत्र परमं प्रामाण्यमिति निश्चेयम्।

---

1. तत्त्वपदीपिकायाम्, अखण्डार्थनिरुपणे
2. तत्रैव प्रामाण्यवादस्योत्तरपक्षे
3. संवित्स्वप्रकाशवादे

**विज्ञानं स्वप्रकाशं भवति च पुरुषस्तद्वपुर्भावरुपम्;**
**ध्वान्तं मिथ्या प्रपञ्चो भ्रमभरनिलयोऽनादिभावोऽप्रबोधः।**
**आरोपारोप्यसिद्धप्रमितिजनकताऽखण्डता स्वप्रमात्वम्,**
**शक्तिर्लक्ष्यः पदार्थान्वय इति कथिताः पौरुषेयो न वेदः[1]॥**

श्रीचित्सुखमुनिप्रकथनेन समन्वयादेवास्य प्रामाण्यस्य स्वरूपमप्यावेद्यते। यद्यपि तत्तद् दर्शनरीत्या प्रामाण्यचर्चा वैशद्येन प्रक्षिप्य पूर्वोत्तरपक्षाभ्यां व्यवस्थितमिव दृश्यते, किन्तु साऽपि व्यवस्थितिर्नानवद्या। प्रमाणानां सर्वेषां तद्गतप्रामाण्य च, इदमेव फलं यत् तैस्तु प्रमितिरेव नानाविधा जन्यते। प्रमित्युत्पादनमेव प्रमाणानां सावकाशत्वं चारितार्थ्यञ्चावकल्प्यते। न कुत्रचिदपि एवंविधा प्रमितिः सम्भाष्यते। लौकिकघटपटादिबोधनेऽपि यत् प्रामाण्यमवबोध्यते तत्रापि सम्यग् रीत्या नेदमुपयुज्यते।

न हि घटपटादिविषयबोधनेन, प्रमाणानां कृतकृत्यता स्यात्। स्वयं प्रकाशायाश्चितो ब्रह्मणो वा, अन्यानपेक्षप्रामाण्यं तद्बोधकवेदान्तानाञ्चैवं प्रामाण्यं सम्भवति अन्यस्य च केवलं कल्पितमेव। ननु तवाऽपि कल्पितमेव भण्यते तत्कथं विशेष इति चेन्न; अखण्डार्थप्रतिपादकवेदान्तानां वेदान्तवाक्यानाञ्चास्ति विशेषः कश्चन सन्दर्भः। नित्यसिद्धस्य वस्तुनः स्वरूपं यथा श्रुत्योपस्थाप्यते न तथाभूतं निगमवेद्यं स्वरूपमन्यैरुद्घाट्यते इति इयानत्र विशेषः। न त्रिकालाबाध्ये सत्ये तेषां प्रमाणानां विनियोगः, अद्वैतमीमांसायां तु सर्वाधिष्णत्वेन प्रख्यातस्य तस्यात्मनः याथात्म्यबोधनादेव प्रामाण्यमिति निश्चीयते। घटपटादिबोधानामपि तत्तदवच्छिन्नचैतन्ये एवाध्यस्तत्वाद् तस्य तस्य बोधविषयत्वमायाति। न हि चैतन्यमन्तरा कदाऽपि रीत्या कश्चन बोधः स्यात्। घटादयोऽपि, चैतन्यरुपेण विषयतां न लभेरन् इत्यपि ज्ञेयम्। विषयत्वलाभायापि चैतन्यस्वीकृतेरावश्यकत्वमुन्नेयम्। एवं रीत्या वस्तुतः प्रामाण्यचर्चायाः ब्रह्मस्वरूपनिर्णये एव प्रासङ्गिकत्वं नान्यत्र इति दिक्।

---

1. नयनप्रसादिन्याम् प्रथमाध्यायान्ते

# वेदान्ते शब्दप्रमाणविमर्शः

डॉ॰ प्रभाकरप्रसादः

वेदान्तैकप्रमेयाय ब्रह्मणेऽनन्तमूर्तये।
सच्चिदानन्दरूपाय प्रणमामि पुनः पुनः॥

अत्र वेदान्तो नाम उपनिषत्प्रमाणम्, तदनु तत्तात्पर्यनिर्णयानुकूलन्याय-निबन्धनात्मकं ब्रह्ममीमांसादर्शनम्, तदनु तदर्थबोधनाय प्रवृत्तं श्रीशङ्करभगवत्पा-दाचार्यकृतं शारीरकमीमांसाभाष्यम्, तदनु तद्विभागटिप्पण्यात्मकं व्याख्योप-व्याख्याद्युपबृंहितं भामतीप्रस्थानं पञ्चपादिकाप्रस्थानं वार्त्तिकप्रस्थानञ्चेति दर्शनीयतमं दर्शनम्। एतच्च परिपूर्णं स्वतन्त्रं दर्शनम्। परिपूर्णत्वञ्चैतद् दर्शनेऽधिकृतस्य दर्शनान्तरनिरपेक्षत्वम्। स्वातन्त्र्यञ्चाधिकृतस्यैतद्दर्शनार्थबोधे दर्शनान्तरनिरपेक्षत्वम्। अत एवास्मिन् दर्शने प्रमाणशास्त्रमिति प्रसिद्धान्न्याय-शास्त्राद्भिन्नं किञ्चिद्विलक्षणलक्षितं प्रमालक्षणम् निरूपितम्, प्रत्यक्षादि-प्रमाणभेदानाञ्च लक्षणं स्वीकृतमिति दृश्यते। अत्र निबन्धे शब्दप्रमाणविषये एतद्दर्शने स्वीकृतस्य लक्षणस्य वैशिष्ट्यं प्रतिपाद्यते। प्रथमं ''नासङ्गतं प्रयुञ्जीत'' इत्युक्तेः मुमुक्षूणां मोक्षहेतुभूतब्रह्मज्ञानस्य निरूपणार्थं प्रवृत्तेऽत्र दर्शने शब्दप्रमाणनिरूपणस्य का सङ्गतिरिति निरूप्यते। ''अथातो ब्रह्मजिज्ञासेति'' मुमुक्षूणां कृते मोक्षहेतुभूतब्रह्मज्ञानाय ब्रह्मविचारस्य कर्तव्यतां प्रतिज्ञाय व्यासाचार्यैः ''लक्षणप्रमाणाभ्यां भवति वस्तुसिद्धि''रिति न्यायेन विचार्यस्य ब्रह्मणः लक्षणमुक्तम् ''जन्माद्यस्य यत'' इति द्वितीयसूत्रेण, तदनु तृतीयेन सूत्रेण ''शास्त्रयोनित्वाद्'' इति ब्रह्मणि शास्त्रमेव प्रमाणमित्युक्तम्। तदनु किं शास्त्रम्? कथं तद् ब्रह्मणि प्रमाणमिति ''तत्तु समन्वयाद्'' इति सूत्रेण प्रतिपाद्यते। शास्त्रञ्च शब्दात्मकमतः शब्दप्रमाणनिरूपणं समन्व-याधिकरणेन सम्बद्धम्। अत एव समन्वयाधिकरणस्यावतरणिकायाम् ''तृतीयसूत्रे ब्रह्मणि वेदान्ताः प्रमाणमिति प्रतिज्ञातं चतुर्थसूत्रे तत्प्रामाण्यमुपपाद्यत'' इत्युक्तम्।

अत्र तृतीयसूत्रे ब्रह्मणि वेदान्ताः प्रमाणमिति शास्त्रयोनित्वाधिकरणस्य द्वितीयवर्णकमाश्रित्योक्तम्, प्रथमवर्णकाश्रयणे तु ''तत्तु समन्वयाद्'' इत्यत्रैव ब्रह्मणि शब्दात्मकस्य शास्त्रस्य प्रामाण्यमुपपादनपूर्वकमुच्यत इति वक्तव्यमुभयथापि शब्दप्रमाणनिरूपणं समन्वयाधिकरणेन सम्बद्धमिति नासङ्गतं शब्दप्रमाणनिरूपणमस्मिन् दर्शने इति युक्तम्। अत एव शाब्दनिर्णयदीपिकायां श्रीमदानन्दबोधाचार्यैः– ''अथ शास्त्रैकदेशसम्बद्धं प्रकरणं भवति, केनास्य शास्त्रभागेन सम्बन्धः? समन्वयाधिकरणेनेति। तदर्थमेव खल्वत्र विविच्यते'' इत्युक्तम्। अत्र प्रकरणं नाम शाब्दनिर्णयाख्यः प्रकरणग्रन्थः शब्दप्रमाणस्वरूपनिरूपणपरः विवरणाचार्यैः प्राणीतः। शाब्दनिर्णयग्रन्थे श्रीप्रकाशात्ममुनिभिः शब्दप्रमाणविषय एवमुक्तम् –

**शाब्दविज्ञानजा यार्थेऽसन्निकृष्टे सुनिश्चिता।**
**बुद्धिस्तच्छाब्दमानं हि सङ्गिरन्ते विपश्चितः॥[1] इति**

इदं लक्षणं शाबरभाष्येऽपि दृश्यते – ''शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्'' इति। अत्र शब्दविषयं विज्ञानं शब्दविज्ञानम्, तस्मादसन्निकृष्टेऽर्थे श्रोतुरनधिगतेऽबाधिते च विषये यद्विज्ञानं तच्छाब्दप्रमाणमित्यर्थः। अभिहितान्वयानुसारेण योजनन्तु शब्दाज्जनितं पदार्थविषयं यद्विज्ञानं तस्मादसन्निकृष्टेऽर्थे बुद्धिरिति। पदात्पदार्थस्मरणस्य शब्दाभासस्य च निवृत्त्यर्थं विशेषणद्वयमसन्निकृष्टेऽबाधिते इति। प्रत्यक्षानुमानादिव्यावृत्त्यै शब्दविज्ञानादित्युक्तम्। स्पष्टीकृतञ्च वार्त्तिकपादैः–

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।**
**ताद्रूप्येण गृहीतत्वं तद्विपर्ययतोऽपि वा॥[2] इति**

अर्थर्ववेदीयकौशिकगृह्यसूत्रस्य दारिलभाष्येऽपीदमेव लक्षणं लभ्यते–

**शाब्दज्ञानात्परोक्षन्तु पूर्वदर्शनवर्जितम्।**
**यज्ज्ञानं जायते तद्धि प्रमाणं शब्द उच्यते॥ इति**

अयमाशयः– प्रमाणान्तरानधिगतेऽबाधितेऽर्थे ज्ञापकं शब्दज्ञानजन्यमर्थज्ञानं शब्दप्रमाणम्। प्रत्ययान्तपदार्थज्ञानं शब्दजन्यं वाक्यार्थज्ञाने कारणमर्थात्

---

१. शाब्दनिर्णयः श्लोक नं ४
२. श्लोकवार्तिकम् १. १. ५

वाक्यार्थज्ञानं शाब्दी प्रमा, तत्करणञ्च पदोपस्थापितपदार्थज्ञानम्, तस्य च शब्दजन्यत्वाच्छब्दे प्रमाणव्यवहारोऽपि सङ्गच्छत इत्यभिहितान्वयवादे युज्यते। अन्विताभिधानवादे तु शब्दविज्ञानापेक्षादात्ममनःसन्निकर्षाद् यददृष्टार्थविषयं विज्ञानं तच्छाब्दमित्यर्थः। शाब्दी प्रमितिरेव लक्ष्यते। शब्दज्ञानं प्रमाणान्तरेणा-प्रमितवाक्यार्थधीजनकमित्यर्थः। पदान्येव वाक्यम्, पदार्था एव वाक्यार्था इत्यङ्गीकाराद् वाक्ये प्रमाणव्यवहारोऽपि सङ्गच्छते। मतद्वयेऽपि अनधिग-तार्थत्वविशेषणेन प्रमात्वस्य शरीरं निरूप्यते, शब्दविज्ञानादित्यनेन शब्दप्रमाणस्य शरीरं निरूप्यते। "अनधिगतार्थगन्तृप्रमाणम्" इति प्रमालक्षणमनेन शब्दप्रमाण-घटकीभूतस्य प्रमाणस्यापि लक्षणं निरूपितं भवति। शब्दप्रमाणेन कथं ब्रह्म सिद्ध्यतीति अत्र निरूप्यते। श्रीमद्भागवतञ्च "जन्माद्यस्य यतोऽन्वयादितरतः" इत्यारब्धं ब्रह्मसूत्राणां तात्पर्यस्य बोधने प्रवृत्तं लीलाविग्रहधारिणो भगवतः श्रीकृष्णस्य माहात्म्यरसायनं पाययद् सविशेषं ब्रह्मैव तत्त्वमिति सम्यगुद्घोषयतीति महर्षिबादरायणाभिमतमद्वैतं कथमपि भवितुं नार्हतीति वक्तुं शक्यते। "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" "उत्तमः पुरुषस्त्वन्यः" इति भगवद्गीतापि कण्ठतः अद्वैतं निराकरोत्यतः महर्षिबादरायणाभिमतमद्वैतमेवेति कथमुच्यते इति पूर्वपक्षे प्राप्ते समाधिरभिधीयते–

**अथातो ब्रह्मजिज्ञासा सूत्रारम्भणहेतुना।**
**निर्विशेषं परं ब्रह्म तत्त्वमित्यभिधीयते॥**

श्रीबादरायणाचार्यैः "अथातो ब्रह्मजिज्ञासे"ति सूत्रेण शास्त्रमारब्धम्। तेन ब्रह्म चास्या मीमांसाया विषयः, तज्ज्ञानञ्च प्रयोजनमित्यवसीयते। ब्रह्मशब्दश्च नारायणे रूढ इति केचन, शङ्करे नीलकण्ठे रूढ इति केचन इत्येवं रूढयोः कलहदर्शनात् "रूढयोः कलहे योगस्योन्मेषः" इति न्यायेन यौगिकोऽयं ब्रह्मशब्द इति निश्चिते बृहत्वाद् ब्रह्मेति बृहत्ववाचको ब्रह्मशब्द इति गम्यते। निरुपपदबृहत्वञ्च त्रिविधपरिच्छेदराहित्यम्। परिच्छेदाश्च देशतः कालतो वस्तुतश्चेति त्रिधा। तत्र ब्रह्मणो व्यापकत्वाद्देशपरिच्छेदराहित्यम्, नित्यत्वाच्च कालपरिच्छेदराहित्यम्, अद्वितीयत्वाच्च वस्तुपरिच्छेदराहित्यमिति निर्विशेषं ब्रह्मैवोपक्रान्तमिति ज्ञायते। ब्रह्मजिज्ञासा चोपक्रान्ता, अतः ज्ञायते ब्रह्मज्ञानं प्रयोजनमिति यथा पूर्वतन्त्रे धर्मजिज्ञासोपक्रान्तेति नूनमिदं शास्त्रं धर्मज्ञानप्रयोजनमिति निर्णीतम्। धर्मश्च यागादिर्भाव्यः, अतस्तज्ज्ञानमनुष्ठानो-पयोगितया पुरुषार्थसाधनं भवतीति तत्र सङ्गच्छते, अत्र ब्रह्म भूतानां ज्येष्ठं

परिनिष्ठितं वस्तु, [1]अतस्तज्ज्ञानञ्चानुष्ठानोपयोगितया पुरुषार्थसाधनमिति वक्तुं न शक्यते। ब्रह्मोपासनामूलकतया तज्ज्ञानस्य प्रयोजनवत्त्वमपि न युक्तम्; तथा सति "अथातः ब्रह्मोपासनां व्याख्यास्यामः" इत्येव सूत्रं स्यात्। असन्दिग्धमप्रयोजनञ्च वस्तु प्रेक्षावता प्रतिपित्सितमिति तु विरुद्धम्। अतः ब्रह्मज्ञानमज्ञाननिवर्तनद्वारा प्रयोजनवदिति वक्तव्यम्, तच्च तदैव वक्तुं शक्यते – यदि ब्रह्मभिन्नं सर्वं ब्रह्माज्ञानकल्पितं शुक्त्यज्ञानकल्पितरजतवत् मिथ्याभूतमिति स्वीक्रियते, तेन ब्रह्माज्ञाननिवर्तनमुखेन ब्रह्मज्ञानं पुरुषार्थसाधनं भवतीति सप्रयोजनत्वाद् ब्रह्मजिज्ञासा युज्यते। एवं जिज्ञास्यं ब्रह्म सगुणनिर्गुणसाधारणमिति द्वितीयसूत्रे तदनुगुणमेव लक्षण "जन्माद्यस्य यत"[2] इत्यनेनोक्तमिति वक्तव्यम्।।

अतः लक्षणस्य सद्भावमात्रेण लक्ष्यत्वाद् ब्रह्म सगुणमेवेति वक्तुं न शक्यते। लक्षणञ्च लक्ष्यस्य स्वरूपमात्रबोधनपरत्वेन कश्चन्द्रः इति जिज्ञासाया उत्तररूपेण प्रवृत्ते "प्रकृष्टप्रकाशश्चन्द्र" इति लक्षणवाक्ये दृष्टवात् अत्रापि इतरव्यावृत्तिद्वारा जगज्जन्मादिकारणं ब्रह्मेति ब्रह्मणः तटस्थलक्षणं, रजतवत् यत्प्रतीतं तद्रजतं नास्त्यपि तु शुक्तिद्रव्यमेवेतिवद् जगज्जन्मादिकारणत्वेन यत् प्रतीतं तद् ब्रह्मैवेति ब्रह्मणः स्वरूपलक्षणं युक्तमेवेति सूत्रकारैरुभयसाधारणमेव लक्षणं प्रणीतम्। न हि लक्षणानुसारेण लक्ष्यस्य स्वरूपवर्णनं युक्तम् अपि तु लक्ष्यानुसारेणैव लक्षणं वक्तव्यम्। अन्यथाव्याप्तिदोष एव न स्यात्। उक्तञ्च भट्टाचार्यैःसिद्धानुगममात्रं हिं कर्तुं युक्तं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् इति। अतः निर्गुणमेव ब्रह्म वेदान्तमीमांसाशास्त्रस्य वेद्यं सगुणरूपन्तूपासनार्थं वर्णितन्तत्र तत्र विचार्यते इति न दोषः। अत एव "शास्त्रयोनित्वाद्"[3] इत्यधिकरणमपि अतद्व्यावृत्त्या शास्त्रं ब्रह्म बोधयतीति प्रत्यक्षादिप्रमाणैः निर्गुणत्वादेव न वेद्यं ब्रह्मेति अद्वैतिनामनुकूलमेव। समन्वयो यद्यपि भेदस्य प्राणबन्धुस्तथापि आकाशादिपदात् तात्पर्यवशान् निर्विकल्पस्यापि बोधस्य परैरभ्युपगमात्[4] तत्त्वमसीत्यादिवाक्येभ्यो निर्विकल्पस्यापि बोधो युज्यत इति समन्वायदिति

१. "ब्रह्मैव भूतानां ज्येष्ठम्" तैत्तिरीयब्राह्मणम्।
२. ब्र. सू १. १. २
३. ब्र. सू. १. १. ३
४. परैः नैयायिकैरित्यर्थः।

सूत्रमपि वेदान्तिनां न विरुद्धम्। एवञ्चोपक्रमे निर्गुणसगुणसाधारणब्रह्मणो जिज्ञास्यत्वेन प्रतिज्ञा, "अवस्थितेरिति काशकृत्स्नः" "असम्भवस्तु सतोऽनुपपत्तेः "इति निर्गुणस्यापि परामर्शः, "सम्पद्याविर्भावः स्वेन शब्दात्" इति जीवब्रह्मणोरभेदस्य मुक्तिकाले जीवस्य यद्वास्तविकं ब्रह्मरूपं तस्याविर्भावो भवतीति सूत्रशब्दैरेवाद्वैतस्य स्वीकारादुपक्रमपरामर्शोपसंहारैरद्वितीयं ब्रह्म शारीरकमीमांसावेद्यमिति निश्चीयते। "अरूपवदेव हि तत्प्रधानत्वाद्" "आह च तन्मात्रम्" इत्यादिसूत्रेण निर्गुणस्यापि ब्रह्मणः अभ्यासादपि निर्विशेषे व्यासाचार्याणां तात्पर्यमवसीयते। अद्वितीयस्य ब्रह्मणः शास्त्रयोनित्वादित्यत्र शास्त्रैकवेद्यत्वादपूर्वतापि तात्पर्यलिङ्गम्। फलं फलाध्याये ब्रह्मज्ञानान्मुक्ति-रूपफलस्योक्तेः चतुर्थचतुर्थे प्रथमाधिकरणे "सम्पद्याविर्भावात्" "मुक्तः प्रतिज्ञानात्" इति सूत्राभ्यामाविर्भावरूपमोक्षस्योक्तेः, अप्राप्तभ्रमनिवृत्तिरूपप्राप्तेः निर्भिन्नेऽपि ब्रह्मणि सम्भवात्फलात्मकमपि लिङ्गमद्वैतिनां न विरुद्धम्। अर्थवादोऽपि विरोधपरिहाराध्याये साङ्ख्ययोगन्यायवैशेषिकबौद्धजैनपाशुपत-भागवतादिमतानां निरासस्य कृतत्वाद् नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति न्यायेन ब्रह्मणो विवर्तोपादानकारणत्वे स्तुतिरूपार्थवादोऽपि अद्वैतिनां लिङ्गम्। "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र ब्रह्मभिन्नत्वेन प्रपञ्चस्याभावस्योक्तेः, "उपसंहारादर्शनान्नेति चेन्न क्षीरवद्धि" आत्मनि चैवं विचित्राश्च हि "इत्यधिकरणे च परिपूर्णशक्तिकं ब्रह्म जगत्सृष्टौ किमपि साधनान्तरं नापेक्षते, "लोकवत्तु लीलाकैवल्यत्" इति च मायावीय ब्रह्म जगत्सृजतीत्युक्तेश्च अद्वितीयब्रह्मवादे उपपत्तिरपि निर्विशेषब्रह्मवादे दृश्यते। एवञ्च षड्विधतात्पर्यलिङ्गैः निर्विशेषब्रह्मवादः सूत्रकारैः स्वीकृत इति ज्ञातेऽप्रातिभासिकस्य निर्विशेषब्रह्मवादस्य व्यावहारिकत्वे प्रत्यक्षादिप्रमाणानां विरोधस्य सत्वात् पारमार्थिक एव निर्विशेषब्रह्मवादः, अतः सूत्रकाराणां महातात्पर्यं तत्रैवेति निश्चीयते एवं सति "भेदव्यपदेशा-च्चान्यः" इत्यसकृज्जीवेश्वरयोर्भेदश्रवणं व्यवहारकाले साधकस्य चित्तशुद्ध्य-र्थमपेक्षितोपासनपरमिति युज्यते। "निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। अमन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः"।।[2] इति कल्पतरुकारैरपीदमे-वोक्तम्। सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायेनापि भेदव्यपदेश-

१. भामतीकल्पतरुः १. २. ७।

२. भामतीकल्पतरुः: १. १. ७

स्योपासनायां सावकाशत्वात् "असावादित्यो ब्रह्म" इत्यादौ कल्पितेनापि रूपेणोपासनायाः श्रवणान्निर्विशेषब्रह्मवाद एव महर्षिबादरायणाभिमत इति वक्तुं शक्यते। अनेन "स्वपरप्रतिघाततो विघातं कलयद्भिर्व्यवहार-भूमिकायाम्। परमार्थदशेति काचिदन्या विगतन्यायमुपेयतेऽद्वयस्य"।। इति अद्वैतस्य परमार्थत्वे युक्तिर्नास्तीति दोषारोपणं परास्तम्।

भगवान् शाण्डिल्योऽपि महर्षिः "तामेकात्मपरां बादरायणः" इति सूत्रयन् बादरायणाभिमतमद्वैतमेवेति समुद्घोषयति। अत्र परामात्मन एकत्वा-नेकत्वशङ्काया एवानवतारादात्मेति एकात्मवादापरनामाद्वैतवाद एव बादरायणा-भिमतत्वम् श्रीमहर्षिशाण्डिल्याकूतं प्रतीयते। किञ्च सर्वेषां भेदवादिनामुपसंहारा-दर्शनाधिकरणं हृदयशूलं भवति। अस्मिन्नधिकरणे "आत्मनि चैवं विचित्राश्च हि" इति सूत्रेण समाधानं दत्तम्, तच्च जगद्वैचित्र्यमात्मनि कल्पितमेव स्वाप्निकपदार्थवदिति स्पष्टमेव कण्ठतः मायावादो बोध्यते। "यावद्विकारन्तु विभागो लोकवद्" इदमपि सूत्रं यत्र यत्र विभागः तत्र तत्र विकारः, विकारश्च मिथ्येति निर्विशेषात्मवादं बोधयति। श्रीमद्भागवतमपि सत्यं परमिति उपक्रमे उपसंहारे च ब्रह्म एव परं सत्यमिति बोधयद् ब्रह्मसमसत्ताकं जगन्नास्तीति अद्वितीयात्मनः एव त्रिकालाबाधितत्वमावेदयन्निर्विशेषवाद एव महातात्पर्यं निरूपयति। तदित्थं

**निर्विशेषब्रह्मवादो बादरायणसम्मतः।**
**इति सूत्रपदैः सम्यग् दिङ्मात्रमिह दर्शितम्।।**

एवञ्चोपनिषदां ब्रह्मसूत्राणाञ्च तात्पर्यमद्वैत एवेति निश्चितेऽद्वैतस्य प्रत्यक्षादिप्रमाणैः सिद्धिर्न भवतीति शब्दैकवेद्यस्य निर्विशेषब्रह्मवादस्य निरूपणार्थं शब्दप्रमाणविवेचनमद्वैतिनामपेक्षितमेव। विवरणाचार्यैः तात्पर्यज्ञानस्य शाब्दबोधे कारणत्वं नास्तीति सिद्धान्तमनुसृत्य पूर्वोक्तं शब्दप्रमाणलक्षणमुक्तमिति युक्तम्। यस्य वाक्यस्य तात्पर्यविषणीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणमिति लक्षणन्तु तात्पर्यज्ञानस्यापि शाब्दबोधे कारणत्वाङ्गीकार-मतेनेति वेदान्तपरिभाषाकारैर्दर्शितमपि युक्तमेवेति विवेकः।

**सिद्धान्तरीतिषु मया भ्रमदूषितेन स्यादन्य-**
**थापि लिखितं यदि किञ्चिदत्र।**
**संशोधने सहृदयाः सदया भवन्तु**
**सच्छास्त्रतत्त्वपरिशीलननिर्विशङ्काः ।।**

# शब्दवृत्तिनिरूपणम्

डॉ॰ सतीशः के. एस्.

शाब्दज्ञानकरणं शब्दप्रमाणम्। शाब्दज्ञानन्तु पदज्ञानत्वेन पदज्ञानजन्यं तात्पर्यज्ञानत्वेन तात्पर्यज्ञानजन्यं वा तात्पर्यज्ञानकारणत्वं वा[1]। तत्करणं शब्दप्रमाणं नाम मानान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकं वाक्यम्।[2] इदं लक्षणं शब्दनित्यत्वानित्यत्ववादिनां सर्वेषामनुगतम्।

अत्र मते पदार्थो द्विविध एव शक्यो लक्ष्यश्च[3]। गौणीवृत्तेर्लक्षित-लक्षणायामेवान्तर्भावात्। शक्तिविषयत्वं शक्यत्वम्। शक्तिश्च पदानामर्थेषु मुख्या वृत्तिः। तथा च वृत्तित्वे सति पदपदार्थमात्रनिरूप्यत्वं शक्तित्वमिति भावः। न तु शक्तिः सङ्केतः यश्चेश्वरेच्छा इदं पदममुमर्थं बोधयत्वित्येवं रूपेति न्यायमतोक्तं स्वीक्रियते। अतः घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः। शक्तिश्चास्मिन् मते पदार्थान्तरम्। तस्यां शक्तौ वह्न्यादेर्दाहादिलक्षणकार्यानुपपत्तिः प्रमाणम्। किञ्च,

**न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।**
**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥**[4]

इति श्रुतिरत्र प्रमाणम्।

अपि च **सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्ति-र्**[5]इति स्मृतिरपि प्रमाणम्। चित्सुखाचार्यैरपि चोक्तम् – **परास्य शक्तिर्विविधा**

---

1. वेदान्तपरिभाषा- शिखामणिः- पृष्ठसंख्या-260
2. वेदान्तपरिभाषा- शिखामणिः- पृष्ठसंख्या- 259
3. वेदान्तपरिभाषा- शिखामणिः- पृष्ठसंख्या- 287
4. श्वेताश्वतरोपनिषत्, 6/8
5. वायुपुराणम्- 12/13

**सर्गाद्या भावशक्तयः** इतिः। ज्ञायमानशक्तिविषयत्वमेव शक्यत्वम्। सा च शक्तिस्तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया।

अद्वैते जातौ शक्तिर्न व्यक्तौ। व्यक्तीनामानन्त्येन गुरुत्वात्। यया संविदा घटवृत्तिघटत्वं गृह्यते तयैव घटस्यापि ग्रहणमिति व्यक्तिसमान-संवित्संवेद्यतया जातेर्ग्रहणात्, जातिव्यक्त्योस्तादात्म्यस्वीकाराच्च घटादिपदाद्-व्यक्तिग्रहणे नानुपपत्तिः। अथवा नास्त्यत्राग्रहः। व्यक्तावपि शक्तिरङ्गीक्रियते। किन्त्वयं भेदो यद्व्यक्तौ स्वरूपसती पदानां शक्तिर्जातौ तु ज्ञाता सती।

किन्तु प्रो. पारसनाथद्विवेदिनस्तु व्यक्तौ शक्तिरज्ञातास्तीत्यत्र प्रमाणं नास्तीति प्रतिपादयन्ति[1]। अयमत्र विवेको यद्व्यक्तिशक्तिवादिनां शक्तिबोधस्तु शक्त्यैवान्यमते च लक्षणयेति तत्र निरूपितम्।

शक्तेः स्वरूपे महान् मतभेदोऽस्ति न्यायाद्वैतयोः। न्यायमते पदपदार्थ-सम्बन्धः शक्तिरस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छेच्छामात्रं वेति[2] निरुक्तम्। अद्वैतवेदान्ते तु वृत्तित्वे सति पदपदार्थमात्रनिरूप्यत्वं शक्तित्वमिति[3] निरुक्तम्। न्यायमते सा इच्छारूपा न पदार्थान्तरमद्वैतवेदान्ते तु तस्याः पदार्थान्तरत्वम[4]-ङ्गीकृतम्। सर्वत्र कारणे कार्यानुकूलशक्तेः पदार्थान्तरत्वमद्वैते स्वीकृतम्। जातौ शक्तिरुत व्यक्तावथवा जातिविशिष्टव्यक्तावित्यत्रापि न्यायाद्वैतवेदान्त-योर्मतभेदोऽस्ति। नैयायिकानां मते जातिविशिष्टव्यक्तौ शक्तिः। अद्वैतमते तु जातावेव शक्तिः स्वीकृता। जातिशक्तिमते गोशब्दस्य गोत्वे शक्तिरिति स्यात्। शक्यतावच्छेदकं गोत्वत्वम्। तच्च गवेतरासमवेतत्वे सति सकलगोसमवेत त्वम्। तथा च सकलगोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशेन मीमांसकमते महद्गौरवम्। तर्कमते तु शक्तिग्रहे गोत्वस्य स्वरूपतः प्रकारत्वेन न सकलगोव्यक्तिभानावश्यकता। तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्ति-बोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति नैयायिकानां वादः[5]।

---

1. वेदान्तपरिभाषा, टिप्पणी–292
2. न्यायसिद्धान्तमुक्तावली– पृष्ठसंख्या– 358
3. मणिप्रभा पृष्ठसंख्या– 287
4. सा च शक्तिः पदार्थान्तरम्– वेदान्तपरिभाषा– पृष्ठसंख्या– 288
5. न्यायसिद्धान्तमुक्तावली पृष्ठसंख्या– 381

अद्वैतिनान्तु जातावेव शक्तिः[1]। जातिविशिष्टव्यक्तौ शक्तिस्वीकारे **नागृहीतविशेषणा बुद्धिर्विशेष्यमधिगच्छती**ति न्यायाज्जातौ शक्तिग्रहस्यावश्यकतया जातावेव शक्तिः स्याल्लाघवात्। न तु जातिविशिष्टव्यक्तौ। तदुक्तं - **विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषण** इति। व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधे जातिविषयकशक्तिज्ञानस्य हेतुत्वात्तस्यैव शक्तिवषयत्वस्वीकारे लाघवं स्यात्। व्यक्तिभानं तु लक्षणया। यथा - नीलो घट इत्यत्र न्यायमते नीलशब्दस्य नीलगुणविशिष्टे लक्षणा, एवमेव जातिवाचकस्य गवादिशब्दस्य **तद्विशिष्टे व्यक्तिविशेषे लक्षणे**[2]ति।

अयमत्र कश्चन विशेषो बोध्यः - अद्वैतमते जातिर्निरस्ता। जातिमनभ्युपगच्छद्भिरद्वैतिभिः कथं जातौ शक्तिरिति स्वव्याघातकमुच्यत इति संशयः स्यात्। अस्य संशयस्य निवारणं प्रो. पारसनाथद्विवेदीमहोदयैः स्वकीयायां वेदान्तपरिभाषाटिप्पण्यां सम्यक्कृतम्। तथाहि -

प्रख्याविशेषाज्जातिसिद्धिः। प्रख्यायतेऽनयेति प्रख्या बुद्धिः। तस्या अविशेषादेकरूपत्वात्तद्विषयस्याप्येकरूपत्वम्। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेष्वयं गौरियं गौरिति एकाकारप्रत्ययोदयादवश्यमेव तादृशप्रतीतिकारणेनैकेन सामान्येन विषयेण भवितव्यमिति तत्त्वेकं गौत्वमिति च सिद्ध्यति। लाघवात्तत्रैव शक्तिकल्पनं न्याय्यम्। गौत्वाश्वत्वे सामान्यमिति व्यावृत्तेष्वनुवृत्तप्रत्ययवशात् समान्यानामपि सामान्यमाश्रयितव्यम्। न चानवस्था, प्रख्याविशेषाभावात्। अभावेष्वपि निरूपाख्यत्वं सामान्यं कल्पनीयम्। न च सिद्धान्ते जातिः खण्डिंता, अपि तु नित्यत्वसमवायत्वघटितं तल्लक्षणं खण्डितम्1। तस्मात् जातामेव शक्तिरद्वैतनये।[3]

शक्तेरतिरिक्तपदार्थत्वं नैयायिकैर्निराकृतम्। शक्तेरतिरिक्तपदार्थत्ववादिभिर्वह्नेर्दाहशक्तिरुदाह्रियते स्वमतसाधनाय। तथा हि- चन्द्रकान्तमण्यादिसंयुक्तेन्धनदीप्ते वह्नौ सत्यपि दाहो न जायते। अतः शक्तिविशिष्टवह्निरेव दाहं प्रति कारणम्। मण्यादिना च वह्निनिष्ठा दाहानुकूला शक्तिर्नश्यत इति कल्प्यते - मणिर्दाहानुकूलशक्तिनाशको दाहानुत्पत्तिकारणत्वादिति। मण्याद्यप-

1. तच्च जातेरेव न व्यक्तेः - वेदान्तपरिभाषा पृष्ठसंख्या - 291
2. वेदान्तपरिभाषा - पृष्ठसंख्या - 296
3. वेदान्तपरिभाषा - शिखामणिटिप्पणी- पृष्ठसंख्या - 294

सारणेनोत्तेजकेन सूर्यकान्तमण्यादिना वा दाहो जायते। तत्र दाहो नाम रूपान्तरोत्पत्तिः पूर्वरूपनाशो वा। प्रतिबन्धकत्वं नाम कार्यानुकूलधर्मविघट-कत्वम्। उत्तेजकत्वं नाम प्रतिबन्धकसमवधानकालीनकार्यजनकत्वम्। एवं सिद्धा शक्तिर्न द्रव्यगुणकर्मान्तर्भूता गुणवृत्तित्वात्। कपालरूपादौ घटरूपादि-जननशक्तिदर्शनात्। एवमेव न सामान्यविशेषान्तर्भूता उत्पत्तिविनाशशालित्वात्। नाप्यभावान्तर्भूता भावत्वेन प्रतीयमानत्वात्। अतः शक्तिरतिरिक्तः पदार्थ इति।

नैयायिका एवमस्य समाधानं यच्छन्ति - मण्यभावविशिष्टवह्नेरेव दाहकारणत्वाङ्गीकारेण मणिसमवधानकाले दाहवारणोपपत्तावतिरिक्तशक्ति-कल्पना न युक्ता। एवञ्च प्रतिबन्धकाभावस्य कारणत्वाङ्गीकारान्न शक्ति-कल्पना युक्ता। अयञ्च प्रतिबन्धकाभावस्त्रेधा - उत्तेजकस्य प्रतिबन्धक-मण्यादेर्द्वयोः सत्त्वे विशेष्यसत्त्वेऽपि विशेषणाभावाद्विशिष्टाभाव, उत्तेजक-सत्त्वे मणेरभावे चोभयाभावाद्विशिष्टाभाव इति। तार्किकमते कारणीभूता-भावप्रतियोगित्वं प्रतिबन्धकत्वम्। उत्तेजकत्वञ्च कारणतावच्छेदकीभूताभाव-प्रतियोगित्वमिति बोध्यम्। किञ्चानेकशक्तितत्प्रागभावादिकल्पनायां गौरवमपि स्यात्।

किन्त्वभावस्य कारणत्वमनिर्वचनीयवादिभिरद्वैतवेदान्तिभिर्न स्वी-क्रियते। असत्कार्यवादोऽस्माभिरप्यग्रे निराकरिष्यते। तस्मात् शक्तिरतिरिक्ता स्वीकार्या एव। अनुमानमपि-**वह्निरद्विष्ठातीन्द्रियस्थितिस्थापकेतरभावाश्रयो गुणित्वात् घटवदि**[1]ति शक्तौ प्रमाणम्। अपि च, **न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**[2] इति, **सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्ति**[3] रिति श्रुतिस्मृती नैसर्गिकीं शक्तिं प्रमाणयतः। तस्मात् कार्यानुकूला शक्तिः सर्वत्र कारणेष्वास्थेया। प्रकृते शब्देऽपि तत्तत्पद-जन्यपदार्थज्ञानरूपकार्येणानुमेयापदार्थज्ञानं **पदनिष्ठस्वानुकूलशक्तिपूर्वकं पदजन्यपदार्थज्ञानरूपकार्यत्वात् व्यतिरेके घटवदि**[4]ति। तस्मात् शक्तिर्नेश्वरेच्छारूपेच्छारूपा वा, अपि तु पदार्थान्तरमिति सिद्धम्। एवं शक्यार्थो निरूपितः।

---

1. शिखामणिः पृष्ठसंख्या - 289
2. श्वेताश्वतरोपनिषत् - 6/8
3. वायुपुराणम् - 12/31
4. मणिप्रभा - पृष्ठसंख्या - 290

इदानीं लक्ष्यपदार्थो निरूप्यते –

शक्यसम्बन्धो लक्षणा। लक्षणाविषयत्वं लक्ष्यत्वम्[1]। लक्षणा द्विविधा केवललक्षणा लक्षितलक्षणा चेति। तत्र शक्यसाक्षात्सम्बन्धः केवललक्षणा। यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्सम्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा[2]। यत्र तु शक्यपरम्परासम्बन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा। यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपदघटितपरम्परासम्बन्धेन मधुकरे लक्षितलक्षणा।

गौणीवृत्तिश्च लक्षितलक्षणायामन्तर्भवति। यथा सिंहो माणवक इत्यत्र सिंहशब्दवाच्यसम्बन्धिक्रौर्यादिसम्बन्धेन माणवकस्य प्रतीतिर्भवति। अतो वृत्त्यन्तरकल्पना नापेक्षिता।

पुनश्च लक्षणा त्रिविधा – जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति[3]। शक्यसम्बन्धिमात्रविषया वृत्तिर्जहल्लक्षणा। यथा **विषं भुङ्क्ष्वेत्यत्र**। अत्र हि स्वार्थत्यागपूर्वकं शत्रुगृहभोजननिवृत्तिर्बोध्यत इति जहल्लक्षणा। अत्रोदाहृतवाक्ये तात्पर्यानुपपत्तिर्लक्षणाबीजं द्रष्टव्यम्।

शक्यार्थविशिष्टविषयत्वमजहल्लक्षणात्वम्। शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्राजहल्लक्षणा इत्यर्थः[4]। अत्र शक्यार्थविशिष्टविषयत्वं शक्यार्थनिरूपितवैशिष्ट्यवद्विषयकत्वं बोध्यम्[5]। अजहल्लक्षणाया उदाहरणन्तु शुक्लो घट इति। अत्र शुक्लशब्दः स्वार्थं शुक्लरूपमविहायैव तद्वद्द्रव्यं बोधयति।

शक्यैकदेशमात्रविषयवृत्तित्वं जहदजहल्लक्षणालक्षणम्[6]। यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिस्तत्र लक्षणेति परिभाषाकृन्मतम्[7]। यथा

---

1. वेदान्तपरिभाषा-शिखामणि-पृष्ठसंख्या- 296
2. वेदान्तपरिभाषा, पृष्ठसंख्या- 296
3. वेदान्तपरिभाषा, पृष्ठसंख्या- 277
4. वेदान्तपरिभाषा, पृष्ठसंख्या- 298
5. तेन काकेभ्यो दधिरक्षतामित्यत्र नातिव्याप्तिः- वेदान्तपरिभाषा शिखामणिः- पृष्ठसंख्या- 298
6. वेदान्तपरिभाषा, शिखामणिः पृष्ठसंख्या- 298
7. वेदान्तपरिभाषा, पृष्ठसंख्या- 299

नित्यो घट इत्यत्र घटत्वस्य विशेषणांशस्येव नित्येन सहान्वयः। अत्रैव जहदजहल्लक्षणा। न तु साम्प्रदायिकमत इव सोऽयं देवदत्त इत्यादिषु। तत्र विशेष्यांशस्यैवोपस्थितेः। अत एवैतन्मतानुसारेण काकेभ्यो दधि रक्षता–मित्युदाहरणम्। तत्र शक्यकाकपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेणाकाके काके च काकशब्दस्य प्रवृत्तिः।

अस्मिन्मते तात्पर्यानुपपत्तिरेव लक्षणाबीजम्। न त्वन्वयानुपपत्तिः। एवमेव लक्षणा न पदमात्रवृत्तिः। किन्तु वाक्यवृत्तित्वमपि तस्याः स्वीक्रियते। यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा। एवमेवार्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये, निन्दारूपाणाञ्च निन्दितत्वे लक्षणा। एवं द्विविधः पदार्थो निरूपितः।।

# उपक्रमादिलिङ्गानां तात्पर्यनिर्णायकत्वम्

डॉ॰ के॰ एस॰ महेश्वरः

तात्पर्यविषयीभूतेऽर्थे शब्दः प्रमाणं भवति। तदन्यप्रतीतीच्छाया अनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वं तात्पर्यमित्युच्यते। तदवच्छेदिका-शक्तिः तच्च शब्दनिष्ठं वेदे वक्तुरभावात्। अज्ञाताबाधितार्थप्रयोजनार्थज्ञान-जननानुकूलशक्तिमत्त्वम्। एतादृशतात्पर्यज्ञानं यद्यपि शाब्दबोधमात्रं प्रति न कारणं तथापि तात्पर्यसंशयतात्पर्यविपर्ययोत्तरशाब्दबोधं प्रति कारणमेव। अतः तादृशस्थले शाब्दबोधात्प्रागेव तात्पर्यज्ञानमपेक्षितं भवति। तदर्थं तात्पर्यग्राहकाणि अपेक्षितानि। तत्र अधिकाराख्यं प्रकरणम् एकं तात्पर्यग्राहकमिति प्रसिद्धम्। तदर्थमादौ कस्य प्रमेयस्य अयमधिकारः इति निर्णयः कर्तव्यो भवति। तन्निर्णयार्थमुपक्रमादिलिङ्गानि उपकुर्वन्ति। अतो हेतोः उपक्रमादीनि तात्पर्यलिङ्गानीत्युच्यन्ते। तथाहि, अनेकावान्तरवाक्य-समूहात्मके एकार्थप्रधानके प्रकरणे प्रकरणतात्पर्यविषयीभूतस्य समुदितमहावाक्यार्थस्य निर्णायार्थं न्यायापेक्षा भवति। अवान्तरवाक्येभ्यः बहूनामर्थानां प्रतीयमानत्वात्। तदा कस्मिन्नर्थे प्रकरणतात्पर्यमिति निर्णेतुं इमानि तात्पर्यलिङ्गानि उपयुज्यन्ते इति भावः "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलं अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति प्राचीनोक्तिः। लोके हि वक्तारः यमर्थं प्रतिपिपादयिषन्ति तमेवार्थमादौ उपक्रम्य तदर्थसिद्ध्यर्थं यद्यदुपपादनीयं तत्सर्वमुपपाद्य अन्ते तमेवार्थमुपसंहरति इति दृष्टम्। तदा तस्मिन्नर्थे वक्तुः तात्पर्यमवसीयते। तथा च उपक्रमोपसंहारयोः एकार्थनिष्ठत्वं प्रथमं तात्पर्यलिङ्गम्।

वक्तुं विवक्षितांशस्य पौनःपुन्येन कथनं स्वाभाविकमित्यतः तत्र तात्पर्यमवगन्तुं शक्यम्। 'अनन्यपरपुनः श्रवणमभ्यासः' इति तल्लक्षणम्।

एवमेव अज्ञानांशस्यैव प्रतिपादनीयत्वात् ज्ञाताज्ञातपदार्थेषु बहुषु तत्तद्वाक्येभ्यः अवगम्यमानेषु अज्ञानेऽर्थे वक्तुः तात्पर्यं निर्णीयते। तदेव अपूर्वताख्यं तात्पर्यलिङ्गम्। मानान्तराविषयत्वमिति तल्लक्षणम्। फलवत्त्वमपि तात्पर्यं गमयति। यतः फलवान् हि वाक्यार्थः उपादेयो भवति। प्रयोजनवद्वाक्यार्थज्ञानविषयत्वं फलवत्त्वम्। यस्यार्थस्य वक्त्रा स्तुतिः क्रियते सोऽर्थः उपादेयः इति, यस्य च निन्दा क्रियते सोऽर्थः हेयः इति च प्रतीयते। अतः स्तुतिनिन्दान्यतरपरेभ्यः अर्थवादवाक्येभ्यः अपि वक्तृतात्पर्यावगमः भवति। एवमेव यस्मिन्नर्थे वक्ता उपपत्तिमुक्त्वा मानान्तराबाधितत्वं सम्पादयितुं प्रयतते तत्र वक्तृतात्पर्यमवगम्यते। अर्थस्य मानान्तरेण अबाधितत्वमेव उपपत्तिः। इत्थं, लोकादेव उपक्रमादीनां तात्पर्यग्राहकत्वमवगन्तुं शक्यते। तेनैव न्यायेन वेदेऽपि तात्पर्यनिर्णयार्थं एतेषामुपयोगः क्रियते। परन्तु एकमस्ति वैलक्षण्यं यत् लोके तु निरङ्कुशाः भवन्ति वक्तारः। तेषां बहुविधदोषदूषितत्वात् यथाकथञ्चित् विषयप्रतिपादनं कृत्वा 'यद्यपि मया अल्पमेवोपक्रान्तं तथापि मम तात्पर्यमन्यत्रैव' इति सः वक्तुमर्हति। तथापि यदेव तात्पर्यविषयीभूतं तत्रैवोपक्रम्य परिसमापनीयमासीत्, मम तु अपटुत्वात् न कृतमित्येव सः अभिप्रैति। तस्मात् निर्दुष्टवाक्यार्थस्थले इमानि तात्पर्यग्राहकानि इति वक्तुं शक्यते एव। वेदो हि निर्दुष्टः। अतः तत्तात्पर्यनिर्णयार्थं इमानि लिङ्गानि उपकुर्वन्त्येव।

वस्तुतस्तु, वेदस्यापि निरङ्कुशत्वात् नियोगपर्यनुयोगानर्हत्वात् सर्वेष्वपि प्रकरणेषु उपक्रमादिभिःषड्भिः भवितव्यमेवेति नियमो न कर्तुं शक्यः। नोपलभ्यते च तथा। अतः षड्भिः लिङ्गैः विना प्रकरणतात्पर्यनिर्णयो न भवति इति नास्ति। यत्किञ्चिद् कस्य वा द्वित्रीणां वा लिङ्गानां दर्शनेन तत्रैव तात्पर्यमित्यपि वा निर्णेतुं न शक्यते। बहुधा व्यभिचारदर्शनात्। तर्हि कथमेतानि लिङ्गानि इत्युच्यन्ते? अव्यभिचरितं हि लिङ्गमिति व्यवह्रियते। यत्र यद्विषयकोपक्रमोपसंहारौ तत्र तत्तात्पर्यकत्वं इति व्याप्तिर्नास्ति इति यद्युच्येत तर्हि उपक्रमोपसंहारौ एकं लिङ्गम् इति व्यवहारो न स्यात् इति चेत् सत्यम्! धूमस्य वह्निव्याप्यत्वात् धूमः लिङ्गम् इति यथा उच्यते तथा नात्र लिङ्गत्वव्यवहारः। कस्यापि लिङ्गस्य तात्पर्यव्याप्यत्वाभावात्। तर्हि कथमेतेषां तात्पर्यनिर्णायकत्वमिति चेत् अत्र किञ्चिदुपपादनीयम्।

षण्णां लिङ्गानां मध्ये त्रयं शब्दनिष्ठं, त्रयमर्थनिष्ठमिति विभागो वर्तते। एकार्थविषयकोपक्रमोपसंहारवत्त्वमनन्यार्थपरशब्दभूयस्त्वं, निन्दा-स्तुत्यन्यतरपरवचनत्वमितरेषां त्रयाणामपि धर्माणां शब्दनिष्ठत्वात्* व्यवह्रियते। अवशिष्टं त्रयमर्थनिष्ठम्। मानान्तरानधिगतत्वरूपापूर्वतायाः, मानान्तराबाधि-तत्वरूपोपपत्तेः, फलवत्त्वस्य चार्थनिष्ठत्वात्। तत्र अनधिगताबाधितार्थविषयकज्ञानमेव प्रमा भवति इति कृत्वा प्रमाशरीरघटकतया प्रविष्टत्वात् शाब्दप्रमात्वनिर्वाहकत्वात् अपूर्वत्वस्य उपपत्तेश्च सर्वत्र अवश्यापेक्षा अस्ति। तत्परं वचनं यदि क्वचित्प्रकरणे नोपलभ्यते तथापि तत् न अध्याहर्तव्यम्। मानान्तरेण अनधिगतत्वरूपापूर्वतायाः अर्थाबाधरूपयोग्यता परंपरायाः उपपत्तेः च स्वरूपसत्याः कारणत्वात् तदभावनिश्चयस्य प्रमाप्रतिबन्धकत्वमात्राङ्गीकारात् "उपपत्तिर्नास्ति", "अपूर्वता नास्ति" इत्याकरकनिश्चयो न भवेदित्येव नियमः। किञ्चैतल्लिङ्गद्वयस्यापि अर्थनिष्ठत्वात् तत्प्रतिपादकवचनाभावेऽपि न क्षतिः। तस्मादपूर्वत्वमुपपत्तिश्च अवश्यापेक्षिते।

एवमेव प्रमास्वरूपघटकत्वादेव फलवत्त्वमपि अवश्यमपेक्षितम्। यद्यपि नान्यासु प्रमासु नास्ति फलवत्वनियमः तथापि शाब्दप्रमा निष्प्रयोजने अर्थे नैव भवितुमर्हति। यथा प्रत्यक्षेण किञ्चिद्वस्तुनि उपलब्धे किमर्थं मया इदं दृष्टं, यद्येतद्दर्शनेन मम न कोऽप्युपयोगः तर्हि तज्जनकं चक्षुरिन्द्रियमप्रमाणमेव इति न कोऽपि चिन्तयति। परन्तु केनचित् कञ्चित् प्रति किञ्चिदुक्ते सति श्रोता चिन्तयति किमर्थं मां प्रतीदमुच्यते यदि व्यर्थं तर्हि तादृशशाब्दबोधकारणं शब्दः अप्रमाणमेव स्यादिति। अतः प्रयोजनवदर्थज्ञानजनकत्वेनैव शब्दः प्रमाणं भवतीति शब्दप्रमाणस्य विशेषः। अतः प्रमास्वरूपनिर्वाहकत्वेन अर्थनिष्ठं लिङ्गत्रयमपि अवश्यमपेक्षितमेव।

उपक्रमोपसंहारादिशब्दनिष्ठलिङ्गत्रयस्य तु एवं न। तेषां मध्ये यत् किञ्चिदेकमस्ति चेदपि पर्याप्तम्। तेषां अतिप्रसङ्गवारकतया केवलं विनिगमनाप्रदर्शकत्वेनैव उपयोगात्। तथाहि, सर्वत्र अपूर्वत्वाद्यर्थनिष्ठलिङ्गत्रयं कस्मिन्नर्थे इत्येव आदौ परीक्षणीयम्। तेषामेवावश्यापेक्षितत्वात्। एतल्लिङ्गत्रयमपि यदि अनेकेषु अर्थेषु अविशेषेण वर्तते इति प्रतीयते तर्हि किं तात्पर्यविषयीभूतमित्यत्र निर्णयालाभात् तन्नियामकतया उपक्रमोपसंहारादिकम्

* उपक्रमोपसंहाराभ्यासार्थवादरूपलिङ्गत्रयं शब्दनिष्ठमिति

उपकरोति। यथा इन्द्रप्रतर्दनाधिकरणे इन्द्र–मुख्यप्राण–जीव–परमात्मलिङ्गानां सत्वात् सर्वेष्वपि पक्षेषु अपूर्वत्वादीनां त्रयाणामपि प्रतीयमानत्वात् कस्योपासनमत्र विधीयते इति जिज्ञासायां उपक्रमोपसंहारौ नियामकौ कृत्वा प्रकरणस्य परमात्मोपासनाविधिपरत्वं निर्णीयते तर्कविधया। यदि इदं प्रकरणं परमात्मोपासनापरं न स्यात् तर्हि परमात्मविषयकोपक्रमोपसंहारौ न स्यातां इति तर्कः।

एवञ्च उपक्रमोपसंहारादीनां शब्दनिष्ठानां त्रयाणामन्यतमविशिष्टैरेव अपूर्वत्वादिभिः त्रिभिः तादृशस्थले तात्पर्यं गृह्यते। अतः तात्पर्यज्ञानजनकज्ञान–विषयत्वमस्ति उपक्रमादिलिङ्गेषु। विशेषणज्ञानस्य विशिष्टज्ञानं प्रति हेतुत्वात्। अत्र, तात्पर्यज्ञानजनकज्ञानं नाम उपक्रमोपसंहारविशिष्टापूर्वत्वादित्रिकवत् परमात्मोपासनमिति ज्ञानम्। तज्जनकं विशेषणज्ञानं परमात्मविषयकोपक्रमोप–संहारादिज्ञानम्। तद्विषयत्वं उपक्रमोपसंहारयोः वर्तते इति समन्वयः। अतः धूमस्य वह्निव्याप्यत्ववत् उपक्रमोपसंहारयोः तात्पर्यव्याप्यत्वाभावेऽपि वह्निज्ञानजनकज्ञानविषयत्वेन रूपेणापि धूमस्य वह्निलिङ्गत्वव्यवहारो दृष्टः। तत्सदृशं रूपं उपक्रमादिलिङ्गत्रयेऽप्यस्ति इति कृत्वा तेषामपि तात्पर्यलिङ्गत्वव्यवहारः इति सिद्धम्।

प्रेक्षावन्तः स्वप्रमेयोपस्थापनारम्भे प्रधानप्रतिपाद्यमवश्यं स्मरन्ति तत् प्रतिज्ञारूपेणोपस्थापयन्ति। अन्तेपि अवश्यं स्मरन्ति निगमयन्ति चेति लोके दृष्टत्वात् प्रतिज्ञानिगमनसमर्पकतया उपक्रमोपसंहारयोः तात्पर्यगमकत्वम्। अभ्यासस्य तु अभ्यस्यमानेऽर्थे वक्तुरादरसूचकत्वेन तात्पर्यविषयीभूतस्यैव अर्थस्य सर्वैरप्याद्रियमाणत्वात् तात्पर्यगमकत्वम्। ननु अर्थवादस्यापि स्तावकत्वात् प्रतिपाद्यार्थे आदरसमर्पकत्वेनैव तात्पर्यलिङ्गत्वमिति चेत् न। अभ्यासबोध्यं तु प्राशस्त्यम् अर्थान्तरापेक्षया उत्कृष्टुत्वरूपम्। अर्थवादबोध्यं तु बलवदनिष्टाजनकत्वरूपम् इति भेदात्। व्यक्तञ्चैतत्सर्वं लघुचन्द्रिकायाम्।

मानान्तरगम्यस्य तु अर्थस्य मानान्तरेणापि अवगन्तुं शक्यत्वात् तस्य पुनः प्रतिपादनस्य वैयर्थ्यात् अर्थस्य मानान्तराविषयत्वं तत्र तात्पर्यं गमयति। एवमेव प्रतिपाद्यार्थस्य मानान्तरेण बाधशङ्का माभूदित्येतदर्थमेव तत्र उपपत्तिः प्रदर्श्यते। अतः उपपाद्यं तदेवास्मिन् प्रकरणे इति अवगम्यते। एवमेव फलवन्तं ह्यर्थं प्रतिपादयन् वक्ता कृतार्थो भवति इत्यतः फलवदर्थस्य

तात्पर्यविषयत्वमवगम्यते। तदेवं षण्णामपि लिङ्गानां तात्पर्यनिर्णयोपयोगित्वप्रकारो निरूपितः।

तात्पर्यञ्च पदतात्पर्यं वाक्यतात्पर्यं प्रकरणतात्पर्यं शास्त्रतात्पर्यमिति बहुविधम्। एतत्सर्वं भिन्नैरेव न्यायैः निरूपणीयम्। केचन न्यायाः पदतात्पर्यनिर्णयोपयोगिनः। यथा संयोगादयः वाक्यपदीये सङ्गृहीताः अभिधानियामकाः इत्युच्चन्ते। भूयांसो मीमांसान्यायाः वाक्यतात्पर्यनिर्णयो-पयोगिनः यथा "प्रकृतौ" वा "अद्विरुक्तत्वात्" इति। इमानि उपक्रमादीनि तात्पर्यलिङ्गानि तु पदतात्पर्यनिर्णयार्थं वा कस्यचिदेकस्य वाक्यस्य तात्पर्यनिर्णयार्थं वा नोपयुज्यन्ते। किन्तु अनेकवाक्यसमूहात्मकस्य वाक्यैकवाक्यतामापन्नस्य एकस्य प्रकरणस्य तात्पर्यनिर्णयार्थमेवोपयुज्यन्ते। एतदपेक्षया अनेकप्रकरणसमाहाररूपस्य शास्त्रस्य समग्रस्य तात्पर्यग्राहकाः अपि न्यायाः भवन्ति। यथा सर्वशाखाप्रत्ययन्यायः। आदावेवतत्प्रदर्शितं ब्रह्मसूत्रकारैः 'गतिसामान्या' दिति। गतिसामान्यन्यायः अभ्यासरूपतात्पर्य-लिङ्गस्यैव एको विशेषः पौनः पुन्येन कथनरूपत्वादिति केचनाचार्याः मन्यन्ते।

ब्रह्मसूत्रेषु एतेषां तात्पर्यलिङ्गानामुपयोग सर्वत्र कृतः। कानिचिदुदा हरणानि प्रदर्श्यन्ते। इन्द्रप्रतर्दनाधिकरणे वाक्यान्वयाधिकरणे च उपक्रमोपसंहारैकरूप्यं, आनन्दमयोऽभ्यासादित्यत्र अभ्यासः, कार्याख्यानादपूर्व-मित्यादौ अपूर्वता, तन्निष्ठस्य मोक्षोपदेशात्, अस्मिन्नस्य च तद्योगं शास्ति इत्यादौ फलम्, स्वाप्ययात्, तद्धेतुन्यपदेशाच्च इत्यादौ अर्थवादः, ब्रह्मदृष्टिरुत्कर्षात् इत्यादौ उपपत्तिश्च कण्ठत एव उपात्तं सूत्रकारैः निर्णयोपयोगितया। यस्मिन् हि प्रकरणे षडपि लिङ्गानि स्पष्टमुपलभ्यन्ते यथा तत्त्वमसि प्रकरणे तत्र पदवाक्यप्रमाणज्ञानां स्पष्टः तात्पर्यनिर्णयः इति कृत्वा तादृशसन्दर्भः सूत्रभाष्ये न चिन्तितः।

इमानि लिङ्गानि पूर्वमीमांसकानामपि आवश्यकानि। तैश्च तत्र तत्र तात्पर्यनिर्णयार्थमुपयुक्तानि चेति सूक्ष्मेक्षिकया अवगन्तुं शक्यम्। तथाहि, "विधिस्तु धारणे अपूर्वत्वात् (जै. 3.4.15)" इत्यत्र, 'लोहितोष्णीताः ऋत्विजः' इत्यादिषु अपूर्वत्वमुपयुक्तम्। अप्राप्ते शास्त्रमर्थवत् इति मीमांसान्यायः अपूर्वत्वरूपं तात्पर्यलिङ्गमेव दर्शयति। फलवत्सन्निधौ अफलं

तदङ्गम् इति प्राधान्यनिर्णयोपयोगी मीमांसान्यायः फलवत्त्वरूपं लिङ्गमादायैव प्रवृत्तः। 'अक्ताः शर्कराः उपदधाति' इत्यत्र अर्थवादवशादेव निर्णयः अकारि। कृष्णलं श्रपयति इत्यत्र योग्यतारूपामुपपत्तिं समालोच्यैव अर्थनिर्णयः कृतः। अन्यथा श्रपयतेः उष्णीकरणमात्रतात्पर्यकत्वं लक्षणया न स्वीक्रियेत। "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति मीमांसान्यायः उपपत्तिमेव सूचयति। उपांशुयाजाधिकरणे उपक्रमोपसंहारयोः ऐकरूप्यमाश्रित्यैव सिद्धान्तः कृतः। अभ्यासोऽपि आद्रियते। तथा चोक्तं तन्त्रवार्तिके "अस्ति हि लोके द्विवचनादतिरेकेणापि यावत्कृत्वः अभ्यस्ते (सति) विवक्षितार्थप्रकारज्ञानं भवति तावत्कृत्वोऽभ्यासः" इति। परन्तु अयमस्ति विशेषः साध्यपदार्थस्य कर्मणः पुनःपुनरुपदेशः कर्मभेदं गमयति। न तु कर्मैक्यम्। सिद्धपदार्थस्य तु स्वरूपोपदेशः पुनः पुनः क्रियमाणः पूर्वोपदिष्टे एव स्वरूपे दार्ढ्यमापादयति। न तु भेदम्।

कर्मविधिः कर्मणः कृतिविषयत्वं बोधयति। तदुक्तं भाष्यकारेण, "धर्मचोदना तु स्वविषये नियुञ्जाना एव पुरुषमवबोधयति" इति। कृतिः सर्वदा साध्यविषयिणी इति कृत्वा अनेकविधिबोध्यायामनेककृता एकस्यैव कर्मणः साध्यत्वेन अन्वयायोगात् अनन्यपरविधिपुनः श्रवणं कर्मभेदं बोधयति। अन्यथा पुनः श्रवणस्य वैयर्थ्यापत्तेः। "दध्ना जुहोति" इत्यत्र पुनरग्निहोत्रहोमश्रवणेऽपि स्ववाक्योपात्तदधिरूपद्रव्यमादाय विधिः सार्थको भवति इति कृत्वा न कर्मभेदं बोधयति। तदर्थमनन्यपरेत्युक्तम् दध्ना जुहोति अग्निहोत्रपुनः श्रवणस्य सत्वेऽपि तस्य दधिविधानार्थत्वेन अन्यपरत्वात्। अतः विचार्यनिर्णेयतात्पर्यकस्य वाक्यस्य विधिवाक्यत्वं मानान्तरेण निर्णीतश्चेत् अनन्यपरपुनः श्रवणं कर्मभेदं गमयति। अत एव तैत्तिरीयके षड्वारं श्रूयमाणेऽपि 'अपः प्रणयति' इति वाक्ये, आद्यस्यैव विधित्वमाश्रितम्। इतरेषामनुवादत्वेन तत्स्नावकत्वमेव आश्रितम्। द्वितीयादिवाक्यानां विधित्वे मानाभावात्।

सिद्धवस्तुविषयकस्य अभ्यासस्य तु अर्थावबोधमात्रप्रयोजनकत्वात् पुनःपुनरुच्यमाने वस्तुस्वरूपभेदस्य वक्तुमशक्यत्वात् ज्ञानविषयत्वमात्रं पदार्थस्य जायते न कृतिविषयत्वमित्यतः न वस्तुभेदकत्वम्, समानविषयेऽपि बहुवारं ज्ञानस्य उत्पत्तौ विरोधाभावात्। इदं वैलक्षण्यं भाष्यकारैः प्रदर्शितं "ब्रह्मचोदना

तु अवबोधयत्येव केवलम्" इति। ननु पुनरुक्तिरूपो दोष एवायमिति चेत् न। निष्प्रयोजनं पुनः श्रवणस्यैव दोषत्वात्। सुलभगम्ये वस्तुनि पुनःपुनः कथनं जामितारूपं दोषमावहति। दुर्ग्रहे तु न इत्यनुभवसिद्धम्। तदुक्तं शाबरे भाष्ये "न पुनरुक्तता महान् दोषः। ग्रन्थगौरवभयेन पुनरुक्तं नेच्छन्ति। अर्थग्रहणात् बिभ्यतः तु पुनःपुनरभिधीयमानमपि बहु मन्यते एव" इति।

तदेवं संक्षेपेण निरूपितानि षड्विधतात्पर्यलिङ्गानि।

# शाब्दापरोक्षवादनिरासः

डॉ. सुदर्शनन्. एस्

वेदान्तजगति शब्दस्यापरोक्षजानजनने सामर्थ्यमस्ति न वेति महान् विचारः दृष्टिगोचरो भवति। शब्दस्यात्मापरोक्षज्ञानजनने सामर्थ्यं ध्रुवं विद्यत इति अद्वैतवेदान्तसिद्धान्तडिण्डिमः। शब्दस्यापरोक्षज्ञानजननेऽसामर्थ्यम्, भगवत्प्रसादस्यैव तत्सामर्थ्यमिति विशिष्टाद्वैतवेदान्तसिद्धान्तघण्टापथः। तदिदं शास्त्रकाराणां सम्मतं तत्त्वं युक्तियुक्तमत्र लेखे प्रकाश्यते।

## अद्वैतवेदान्तमतस्य स्वरूपं शाब्दापरोक्षवादपक्षश्च

अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःख-सागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायत्मैकत्वविज्ञानप्रतिपादनम् द्वैतवेदान्तहृदयम्।[1] वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पयुक्तं कर्माविद्यानिवृत्तयेऽसमर्थम्, ज्ञानस्यैव तन्निवर्त्यत्वञ्च श्रुतयो ब्रुवन्ति। यथा–

- **अन्तवदेवास्य तद्भवति।**[2] (यज्ञादेः कर्मणः फलं क्षयिष्ण्वेव भवति)
- **तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते।**[3] (लौकिकसेवादिरूपैः कर्मभिरार्जितभोग्यफलक्षयिष्णुवत् वेदोक्तेष्टापूर्तादिपुण्यकर्मलब्धामुष्मिकफलमपि क्षयिष्णु एव भवति।)
- **नह्यध्रुवैः प्राप्यते ध्रुवं कर्मभिः।**[4] (अनित्यफलप्रदातृत्वेनास्थिरत्व-कर्मभिः वेदोक्तैरप्यपरिच्छिनत्वस्थिरसंज्ञकं ब्रह्म न प्राप्यते।)

---

1. अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमितजन्मजरामरणादिसांसारिकदुःख-सागर-निमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपा-दयिषितम्। श्रीभाष्यम्, भगवद्रामानुजविरचितम्, संस्कृतसंशोधनसंसत्, मेलुकोटे, प्रथमसंस्करणम्, 1985, पृष्ठसंख्या 9
2. बृहदारण्यकोपनिषत् 5-8-9
3. छान्दोग्योपनिषत् 8-1-6
4. कठोपनिषत् 2-10

- **प्लवा ह्येते अदृढा यज्ञरूपाः**[5] (केवलयज्ञादिकर्मप्रधानाश्चेतनाः जीर्णतामापन्ननौकावत् स्वस्य संसारार्णतरणेऽशक्ता एव भवन्ति।)

- **ब्रह्मविदाप्नोति परम्।**[6] (सत्यज्ञानानन्तरूपमत्यन्तं बृहद्वस्तु स्वात्मैक्यविज्ञानेन सम्यक् जानन् निरतिशयं ब्रह्मभावमाप्नोति)

- **परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥**

**तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥**[7]

(सम्यगधीतवेदाङ्गस्त्वैवर्णिकः, यागहोमदानादिकर्मसम्पाद्यान् लोकान् भोगांश्च नश्वरत्वेन जानन्, युक्तियुक्तिभिस्तान् अनुपेयान्निति निर्णीयैवमनित्यफलदातृकर्म कथमपि नित्यपरमपुरुषफलदातृ न स्यादिति निश्चयं कुर्यात्, कर्मतत्फलादिषु च वितृष्णतां प्राप्नुयात्। तदनु नित्यं परमात्मानं ध्यानेन साक्षात्कर्तुं श्रोत्रियं ब्रह्मनिष्ठं स्वीयाज्ञाननिवारकत्वेनोपेत्य समिद्धस्तस्तं गुरुमभिगच्छेत्)

**न पश्यो मृत्यु पश्यति।**[8] (ब्रह्मात्मैक्यद्रष्टृविद्वान्, मरणं नैव पश्यति। अर्थात् मृत्युपदपर्यायभूताविद्यानिर्मुक्तो भवति।)

**स स्वराड् भवति।**[9] (भूमशब्दाभिधेयात्मतत्त्वसाक्षात्कारनिष्ठोपासकोऽकर्मवश्यो भवति)

**ब्रह्मवेद ब्रह्मैव भवत।**[10] (यश्चेतनः स्वस्मिन् ब्रह्माभेदं जानाति सः स्वयं ब्रह्मैव भवति)

---

5. मुण्डकोपनिषत् 1-2-7
6. तैत्तिरीयोपनिषत्, आनन्दवल्ली 2-1
7. मुण्डकोपनिषत् 1-1-12/13
8. छान्दोग्योपनिषत् 7-26/2
9. छान्दोग्योपनिषत् 7-25-2
10. मुण्डकोपनिषत् 3-2-8

**तमेव विदित्वाऽतिमृत्युमेति।**[11] (अखिलस्य संसारस्य मिथ्यात्वात्, परमार्थभूतं ब्रह्मैकमेव स्वाभेदेन विदित्वा भेदज्ञानादिरूपाविद्यां मृत्युपर्यायां तरति।)

इत्यादीनि श्रुतिवाक्यान्यात्मज्ञानस्य मोक्षसाधत्वपराणि भवन्ति।

कर्मणां वेदोक्तनामन्तः करणनैर्मल्यद्वारेण ब्रह्मविविदिषायामेवोपयोगः न ब्रह्मज्ञानजनने। तथा च कर्मज्ञानेन विविदिषायामुत्पन्नौ जातायां ज्ञानोत्पत्यन्तरङ्गतां शमादयो वहन्ति। तथा च श्रुतिप्रमाणे–

- **यज्ञेन दानेन तपसा अनाशकेन ब्राह्मणा विविदिषन्ति।**[12] (फलाभिसन्धिरहितयज्ञानुष्ठानेन दानेन तपसा अनाशकेन च त्रैवर्णिकाः ब्रह्म वेत्तुमिच्छन्ति।)
- **शान्तो दान्तः उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्।**[13] इति (ब्रह्मोपासक आन्तरिकबाह्येन्द्रियव्यापारेभ्यो विरतः पुत्रवित्तेत्यादि एषणात्रयनिर्मुक्तः निर्द्वन्द्वः, एकाग्रचित्तः, स्वकार्य–कारणसङ्घात एव स्वयंप्रकाशात्मानं पश्यति।)

यद्यपि,

- **सदैव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।**[14] (हे सोम्य श्वेतकेतो, परिदृश्यमानेदं जगत् सृष्टिकालात् प्राक् सजातीयविजातीयस्वगतभेदविदूरं निर्विशेषं, सत्तामात्रात्मकवस्तुत्वेकमैवासीत्।)
- **सत्यं ज्ञानमनन्तं ब्रह्म।**[15] (अनृतजडपरिच्छिन्नेभ्यो व्यावृत्तं ब्रह्मपदवाच्यं भवति।)
- **अयमात्मा ब्रह्म।**[16] (य एवं देवादिविविधजन्मभाक् संसरति स अशनायाद्यतीतं परं परं ब्रह्म)

---

11. श्वेताश्वतरोपनिषत् 3–8
12. बृहदारण्यकोपनिषत् 6–4–22
13. बृहदारण्यकोपनिषत् 6–4–23
14. छान्दोग्योपनिषत् 6–2–1
15. तैतिरीयोपनिषदानन्दवल्ली 2–1–1
16. बृहदारण्यकोपनिषत् 6–4–5

• **तत्त्वमसि।**[17] (अविद्योपहितयुष्मच्छब्दबोध्यस्त्वम्, सकलोपाधि-शून्यतच्छब्दबोध्यब्रह्माभिन्नोऽसि)

इत्यादि श्रुतिवाक्यानां गुरुमुखाच्छ्रवणसमये यद्यपि जायमानं परोक्षं ज्ञानमविद्यां न निवर्तयति, तथापि श्रवणादिभिर्निरस्तकृत्स्नासम्भव-विपरीतसम्भवाख्यभेदवासनामूलचित्तविक्षेपरहितस्य तदेवाभेदबोधकानि श्रुतिवाक्यानि ब्रह्मापरोक्षज्ञानजनकानि भवन्ति।[18]

**शाब्दापरोक्षवादे विशिष्टाद्वैतवेदान्तमतसिद्धान्तः**

अविद्यानिवृत्तिरूपमोक्षस्य हेतुभूतं वेदान्तवाक्यजन्यज्ञानं किं वाक्यार्थज्ञानमात्रमेवाहोस्वित् तन्मूलमुपासनात्मकं ज्ञानमित्याद्यं विचारणीयम्। वाक्यार्थज्ञानमात्रस्याविद्यानिवृत्तये सामर्थ्यं न विद्यते पुरुषतन्त्रत्वाभावात्। तथैव विधानमन्तरेणापि सिद्धत्वात्, प्रत्यक्षाविरोधाच्च न तत् समर्थम्। श्रवणादिभिरसम्भवविपरीतसम्भवाख्यभेदवासनायाः निरासः, तेन ज्ञानोत्पतिंकथनं न शास्त्रसङ्गतम्, भेदवासनायाः अनादिकालात् विद्यमानत्वावगमात्, अपिरिमितत्वाच्च। किन्तु भेदवासननिरसनभावनायाश्चत्यन्ताल्पत्वावगमात् नानया तन्निवृत्तिरुपयुज्यते।

अत एव श्रवणकाले वाक्यार्थज्ञाने जातेऽपि अनादिवासनया मात्रया भेदज्ञानमनुवर्तते इति वक्तुं न शक्यते। ज्ञानोत्पत्तावपि भेदवासनायाः मिथ्याभूतायाः अनिवृत्तौ तन्निवर्तकान्तराभावात् कथमपि भेदवासनायाः निवृत्तिः न युज्यते। श्रुतयश्च ध्यानोपासनादिशशब्दवाच्यं ज्ञानमेव मोक्ष-साधनमिति समर्थयन्ति, न तु वाक्यार्थज्ञानमात्रस्यापरोक्षज्ञानरूपमोक्षसाधनत्वम्। यथा-

---

17. छान्दोग्योपनिषत् 6-8-7

18. **यदूचिरे - यद्यपि तत्त्वमस्यादिवाक्यश्रवणसमयसम्भवपरोक्षं ज्ञानमविद्यां न निवर्तयति, तथापि श्रवणादिभिर्निरस्तसमस्तभेदवासनामूलासम्भवविपरीत-सम्भवाख्यचित्तविक्षेपलक्षणप्रतिबन्धस्य तदेव वाक्यमविद्यानिवर्तकमपरोक्षं ज्ञानं जनयति। अद्वैतपूर्वपक्षभागः-** शब्दजन्यप्रत्याक्षभङ्गवादः, शतदूषणी, वेदान्त-देशिकविरचिता, चौखम्वा विद्याभवनम्, द्वितीयसंस्करणम्, 1995, पृष्ठसंख्या 133

- **विज्ञाय प्रज्ञां कुर्वीत।**[19] (मोक्षार्थी परं ब्रह्म श्रवणमननाभ्यां सम्यक् सुनिश्चित्य तद्ध्यायेत्)
- **ओमित्येवात्मानं ध्यायथ।**[20] (परमात्मानं तद्वाचकेन ओमिति प्रणवेनैव ध्यायथ)
- **आत्मानमेव लोकमुपासीत।**[21] (आत्मव्यतिरिक्तं सर्वं सन्त्यज्य, उपायभूतमात्मानमेवोपेयफलतया भजेत)
- **आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।**[22] (दर्शनसमानाकारेण ध्यानेन परमात्मा विषयीकार्यः, तत्सिद्धये च यथावस्थितं गुरुमुखाच्छ्रोतव्यः)

इत्यादयः।

अत्र **निदिधसितव्य** इति ध्यानस्यैव साधनत्वविधानात् **विज्ञाय प्रज्ञां कुर्वीत** इत्यादिश्रुतिवाक्यैः वाक्यार्थज्ञानस्य ध्यानोपकारकत्वप्रतिपादनमेव स्वरसम्। मोक्षसाधनञ्च ज्ञानमुपासनात्मकं भवति। **मनो ब्रह्मेत्युपासीत।**[23] इति स्थले ब्रह्मवर्चसेन य एवं वेद।[24], न स वेद, अकृत्स्नो ह्येषः। आत्मेत्येवोपासीत।[25] इत्यादिषु श्रुतिषु च विद्युपास्योः व्यतिरेकोपक्रमत्वेनोपसंहारकत्वेन च दृष्टिगोचरत्वात्। किञ्च- **ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः।**[26] (विजातीयप्रत्ययान्तराव्यवहितशुभाश्रयस्मृतिसन्ततिरूपं ध्यानं ध्रुवास्मृतिः भवति। ध्यानेन च ग्रन्थिशब्दाभिलप्यानामविद्यारागादीनामात्यन्तिकमुक्तिः भवति। इति ध्रुवानुस्मृतेः ध्यानस्यैव साक्षात् मोक्षसाधनत्वमवगम्यते।

---

19. बृहदारण्यकोपनिषत् 6-4-21
20. मुण्डकोपनिषत् 2-2-6
21. बृहदारण्यकोपनिषत् 3-4-15
22. बृहदारण्यकोपनिषत् 6-5-6
23. छान्दोग्योपनिषत् 3-18-1
24. छान्दोग्योपनिषत् 3-18-5
25. बृहदारण्यकोपनिषत् 3-4-7
26. छान्दोग्योपनिषत् 7-26-2

**भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।[27]**

(परावरसमस्तजन्तुशरीरके परब्रह्मणि प्रत्यक्षतापन्नध्यानगोचरे कृते सति, हृदयग्रन्थयो रागादयः नश्यन्ति) इति श्रुतिरपि ध्यानकारणबोधिका।

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्।।[28]**

(परमात्मा स्वप्रीणनवेषत्वरहितैः नियमकृतैरपि श्रवणमनननिदिध्यासनैरुपासकैः नैव प्राप्यते। परमात्मना य उपासकः व्रियते स एव तं प्राप्नोति। तमेव परमात्मा स्वरूपगुणविग्रहादिभिः सह स्वमनुभावयति।) इति श्रुतिः केवलश्रवणमनननिदिध्यासनानामात्मावास्यहेतुत्वमित्युक्त्वा **यमेवैष वृणुते तेन लभ्य** इति परमात्मवरणीयत्वं स्पष्टयति। प्रियतमस्यैव वरणीयत्वं स्वाभाविकम्। भगवान् च स्वयं स्वप्रियतमत्वमवगमयति। यथा–

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।[29] प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।।[30]

(मयि परमात्मनि सततयोगमभीप्सतां, भक्तानां कृते मोक्षोपयुक्तबुद्धियोगमहं वासुदेवो अनुगृह्णामि। तेन बुद्धियोगेनोपासितारः मां प्राप्नुयुः। भगवच्छेषतैकरसत्वेन सर्वं जानतः सर्वचेतनानां भगवत्प्राप्तिरेव परमिति मनुतः चेतनस्याहं वासुदेवोऽत्यर्थप्रियः सश्च चेतनः ममात्यर्थप्रिय इत्यर्थः) तथैव,

**भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन।**
**ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परंतप।।[31]**

(हे परन्तप अर्जुन, दिव्यचक्षुषा दृष्टैवं विधोऽहम्, अनन्यया भक्त्यैव तत्त्वतो ज्ञातुं साक्षात्कर्तुं सयुग्भावेन प्रवेष्टुञ्च शक्यः)

27. मुण्डकोपनिषत् 2-2-9
28. मुण्डकोपनिषत् 3-2-3
29. श्रीमद्भगवद्गीता 10-10
30. श्रीमद्भगवद्गीता 7-17
31. श्रीमद्भगवद्गीता 11-54

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।[32]**

(हे पार्थ, परमपुरुषः मुमुक्ष्णामनन्यभक्त्यैव लभ्यः)

अतः वाक्याद्वक्यार्थज्ञानमात्रं न मोक्षसाधनमपि तनमूलमुपासनात्मकमिति सिद्ध्यति। शब्दापरोक्षज्ञानञ्च भगवत्प्रसादाधीनमिति सुव्यवस्थितम्।

32. तत्रैव तत्रैव 8-22

# मीमांसादिशा शब्दनित्यत्वविमर्शः

डॉ. संगीता खन्ना

**'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्'**[1] इत्यनेन सूत्रेण शब्दो नित्यः, अर्थो नित्यः तयोः सम्बन्धश्च नित्य इति दर्शितं महर्षिणा। शब्दो नित्य इति मीमांसकानां प्रतिज्ञा। मीमांसाशास्त्रस्य प्रथमाध्याये प्रथमपादे श्लिष्टं शब्दनित्यताधिकरणम्। तत्राष्टादशसूत्रैश्शब्दस्य नित्यता प्रतिपादिता। प्रथमसूत्रषट्केन महर्षिजैमिनिना स्वयं पूर्वपक्षत्वेन शब्दानित्यत्वसाधका हेतव उपस्थापिताः, तदनन्तरं द्वितीयसूत्रषट्केन तेषां निराकरणं कृतम्, अन्ते तृतीयसूत्रषट्केन शब्दस्य नित्यता सिद्धान्तीकृता।

**नित्यश्शब्दार्थयोस्सम्बन्ध इति यदुक्तं तदनुपपन्नम्, शब्दस्यानित्यत्वात्। कथं पुनरनित्यश्शब्दः?**[2] इति भाष्यवचनेन पूर्वपक्षः प्रदर्शितः। शब्दानित्यत्वसाधनाय प्रथमो हेतुः सूत्रकारेण प्रदत्तो यत् **'कर्मैके तत्र दर्शनाद्'**[3] इति शब्दोच्चारणप्रयत्नान्तरं दृश्यते शब्दः, अतः कार्यत्वाच्छब्दोऽनित्यः। उच्चारणात्पूर्वं शब्दसद्भावे प्रमाणं नास्ति यतः प्रयत्नात्पूर्वं न दृश्यतेऽसौ। अतः प्रयत्नानन्तर्यात्तेन क्रियत इति गम्यते। कृतको हि सः प्रयत्नेनाभिव्यज्यते' इति कथयितुं न शक्यते। संश्चाभिव्यज्यते, नासन्। अतोऽनित्यश्शब्दः।

विनिगमनाविरहान्नैष दोषः। महर्षिणा **'समं तु तत्र दर्शनम्'**[4] इत्यनेन सूत्रेण निराकृतः प्रथमो हेतुः। प्रयत्नान्तरं शब्दस्योपलब्धेर्न शब्दस्य अनित्यता सिद्ध्यति। शब्दस्यानित्यत्वे यो हेतुः प्रदत्तः प एव हेतुः

---

1. मीमांसासूत्रम्, 1.1.5
2. शाबरभाष्यम् 1.1.5
3. मीमांसासूत्रम्, 1.1.6
4. मीमांसासूत्रम्, 1.1.12

शब्दनित्यत्वेऽपि सावकाशः। प्रयत्नात् पूर्वकाल एव शब्द आसीत्, प्रयत्नानन्तरं तस्याभिव्यक्तिर्भवति। पूर्वतो विद्यमानश्शब्दोऽभिव्यज्यते, न तस्योत्पत्तिर्भवति। प्रयत्नात्पूर्वं नासावासीदिति न। अनभिव्यक्तः सञ्छब्दः प्रयत्नेनाभिव्यज्यते। तस्मादुभयोः पक्षयोः सममेतत्। अतो नित्यश्शब्दः।[5]

शब्दस्यानित्यत्वे द्वितीयो हेतुः **'अस्थानाद्'**[6] इत्यनेन सूत्रेण प्रदर्शितः। अर्थादुच्चरितश्शब्द उच्चारणानन्तरमेव विनश्यति, न क्षणमपि तिष्ठति, अतोऽनित्यश्शब्दः। सन्नोपलभ्यत इति वक्तुं न शक्यते यतोऽनुपलभ्यकारणानां व्यवधानादीनामभावेऽप्यनुपलम्भनात्, स नास्ति=नष्ट इति प्रत्यक्षतो ज्ञायते। न चासौ विषयम् (श्रोत्रेन्द्रियं) अप्राप्त इत्यपि वक्तुं शक्यते, आकाशविषयत्वात्। आकाशो व्याप्तः सर्वत्र तथापि स ग्राहकेन्द्रियमप्राप्त इति न समञ्जसम्। कर्णच्छिद्रेऽप्यनुपलम्भनाच्छब्दः नष्ट इति मन्तव्यः।

अनेन हेतुना शब्दस्य नित्यत्वं न बाधितम्। सञ्छब्दो नोपलभ्यते, अभिव्यञ्जकप्रयत्नानन्तरमपि, तत्र तु विषयानागमादेतद् भवति। महर्षिणा **"सतः परमदर्शनं विषयानागमात्"**[7] सूत्रे उक्तम्। नित्यशब्दस्य कदाचिदुपलम्भं कदाचिदनुपलम्भं दृष्ट्वोपलम्भस्य किञ्चिन् निमित्तं कल्पनीयम् इति हार्दम्। तच्च संयोगविभागसद्भावे सति भवतीति। शब्दं प्रति संयोगविभागावभिव्यञ्जकौ। उपरतयोः संयोगविभागयोर्न श्रूयते। यदि शब्द उपलभ्यते, नूनं नोपरमन्ति संयोगविभागाः। न हि ते प्रत्यक्षाः। अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतो दिक्कान् संयोगविभागानुत्पादयन्ति यावद्वेगमभिप्रतिष्ठन्ते। अनुपरतेषु संयोगविभागेषु शब्द उपलभ्यते, नोपरतेषु। अपि चानुवातं दूरादुपलभ्यते शब्दः। अतश्शब्दो नित्यः।[8]

शब्दस्यानित्यत्वे तृतीयो लोकव्यवहाराश्रितो हेतुः **'करोतिशब्दादित्यनेन'**[9] सूत्रेण उपस्थापितः। लोके दृश्यते यद् व्यवहर्त्तारः 'शब्दं कुरु'

5. शाबरभाष्यम्, 1.1.12
6. मीमांसासूत्रम्, 1.1.7
7. मीमांसासूत्रम्, 1.1.13
8. शाबरभाष्यम्, 1.1.13
9. मीमांसासूत्रम्, 1.1.8

'मा शब्दं कार्षीश्शब्दकार्ययं माणवक इति प्रयुञ्जते। 'कृ' धातुप्रयोगः शब्दस्य कृतकत्वं साधयति। यदि शब्द इति नित्यस्तत्किमर्थं कृधातुप्रयोगः। शब्दकार्ययमिति व्यवहारदर्शनादनित्यश्शब्दः। अपि च व्यवहर्त्तारः नूनं नावगच्छन्ति यत् स एवायं शब्दः यः पूर्वमभिव्यक्तः, यद्येवं स्यात्तर्हि शब्दस्य नित्यता सावकाशा भवितुं शक्येत। किन्तु स एवायं शब्द इति प्रतीतिर्न भवति। अतः भिन्नश्शब्दः कृतक एव, एकत्वानध्यसायात्।

नैष दोषः। **'प्रयोगस्य परम्'**[10] इत्यनेन सूत्रेण महर्षिर्जैमिनिः तृतीयं हेतुं निराकरोति यद्धातवोऽनेकार्थका भवन्तीति 'शब्दं कुरु', 'मा शब्दं कार्षीरित्यादिव्यवहारकाले 'कृ' धातुरुच्चारणार्थको नाभूत्प्रादुर्भावार्थकः। शब्दं कुरु इत्यस्यार्थश्शब्दमुच्चारयेति अथवा शब्दप्रयोगं कुर्विति भविष्यति। व्याकरणमहाभाष्यकारपतञ्जलिना समर्थितम्–'बह्वर्था अपि धातवो भवन्तीति। तद्यथा–... करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते पृष्टं कुरु, पादौ कुरु, उन्मृदाविति गम्यते। निक्षेपणे चापि वर्तते कटे कुरु, घटे कुरु अश्मानमितः कुरु, स्थापयेति गम्यते''। अतः 'कृ' धातुप्रयोगेण शब्दस्य कृतकत्वन्नोपपद्यते। अत्र शबरस्वामिना स्पष्टीकृतम्–'यदपरं कारणमुक्तम्–शब्दं कुरु, [शब्दं] मा कार्षीरिति व्यवहर्त्तारः प्रयुञ्जते यद्यसंशयं नित्यश्शब्दः, शब्दप्रयोगं कुर्विति भविष्यति। यथा गोमयान् कुर्विति संवाहे'।[12] अतश्शब्दो नित्य इति।

शब्दानित्यत्वसाधने चतुर्थो हेतुः **'सत्त्वान्तरे च यौगपद्यादि'**[13] त्यनेन दर्शितः। भिन्नभिन्नस्थानेष्वेकस्य शब्दस्य यौगपद्यान्नित्यत्वमनुपपन्नमिति। असति विशेषे नित्यस्यानेकत्वं न घटते। बहूनां क्रियमाणानां कार्याणां नैकदेशसम्बन्धो दृश्यते किन्तु नहि एको जनः एकस्मिन्काले अनेकत्र दृश्यते। शब्दस्तूपलभ्यते, शब्दस्यैकत्वे नित्यत्वे एष दोषः। तस्माच्छब्दोऽनित्यः नैकत्वादिति।

---

10. मीमांसासूत्रम्, 1.1.14
11. व्याकरणमहाभाष्यम्, 1.3.1
12. शाबरभाष्यम्, 1.1.14
13. मीमांसासूत्रम्, 1.1.9

दोष एषः व्याहन्यते **'आदित्यवद् यौगपद्यमि'**[14] त्यनेन सूत्रेण। नात्र शब्दो नित्य एकश्चेति मीमांसाराद्धान्तहानिः। आदित्य एकः सन्ननेकदेशावस्थित इव लक्ष्यते, तथैव एकस्य शब्दस्य भिन्नभिन्नस्थानेषु लाभे न कापि विप्रतिपत्तिः। यथा दूरत्वादादित्यस्य देशो नावधार्यते, तत्र नानात्वकल्पना व्यामोहमात्रमस्ति, तथैव शब्देऽपि देशस्यानवधारणं व्यामोहाद् भवति। वायवीयाः संयोगविभागाः कर्णशष्कुलीप्रदेशे शब्दमभिव्यञ्जयन्ति, समीचीनमिदम्। किन्तु कर्णप्रदेशबाहुल्याच्छब्दस्य नानात्वन्तु व्यामोह एव। वस्तुतः आकाशदेशश्च शब्द इति। एकञ्च पुनराकाशं, तस्मादेक एव शब्दो नित्यः। अपि च यथा आदित्य एकः सन्ननेकदेशावस्थित इव लक्ष्यते तथैव शब्दे ऐकरुप्ये सति [स एवायमिति] देशे भेदेन देशा एव भिन्नाः, नहि शब्दः भिद्यते। तस्मादयमप्यदोषः, शब्दोऽनित्य इति दिक्।

शब्दस्यानित्यतायां पञ्चमो हेतुः पुरस्कृतः **"प्रकृतिविकृत्योश्च"**[15] इत्यनेन सूत्रेण। यस्याभिप्रायोऽस्ति यत्प्रकृतिविकृत्योरूपदेशादपि शब्दोऽनित्य इति। **"इको यणचि"**[16] इत्यादिसूत्रैः प्रकृतिविकृतिभावोऽयं निर्दिश्यते। यथा 'दधि+अत्र' इत्यत्र इको यणचि इत्यनेन सूत्रेण इकारस्थाने यकारादेशे कृते "दध्यत्र" पदं सिद्धं भवति। अत्रेकारः प्रकृतिर्यकारो विकृतिरित्युपदिशन्ति शास्त्रकाराः। इकारसादृश्यञ्च यकारस्योपलभ्यते। तेन तयोः प्रकृतिविकृतिभावो लक्ष्यते। यथा काष्ठयूपयोः काष्ठत्वसादृश्यं दृश्यते। यद्विक्रियते, तदनित्यमिति। अतो यत्र प्रकृतिविकृतिभावो भवति, न तत्र नित्यत्वं प्रसक्तमिति शब्दोऽनित्यः।

अनेन हेतुनापि शब्दस्यानित्यता नहि कल्पिता। मीमांसासूत्रेण **'वर्णान्तरमविकार'**[17] इत्यनेन ज्ञायते यन्नात्र प्रकृतिविकृतिभावो सम्भवति। 'दध्यत्र' स्थले इकाराद् यकारः वर्णान्तरमस्ति, न विकारः। न हि यकारं प्रयुञ्जाना इकारमुपाददते। यथा–कटं चिकीर्षन्तो वीरणानि (तृणविशेषानि) गृह्णन्ति। सादृश्यमात्रदर्शनेन प्रकृतिविकृतिभावकल्पनमन्याय्यम्। यथा

---

14. मीमांसासूत्रम्, 1.1.15
15. मीमांसासूत्रम्, 1.1.10
16. पाणिनीयाष्टाध्यायी, 6.1.77
17. मीमांसासूत्रम्, 1.1.16

दधिकुन्दपिटकयोः श्वेततासादृश्येण न हि प्रकृतिविकारभावोऽवगम्यते। लोकेऽपि प्रकृतिविकृतिभावस्य नियमोऽस्ति। दृश्यते यद् दुग्धेन दधि भवति, न हि दध्ना दुग्धम्, अयं प्रकृतिविकृतिभावः। अत्र दुग्धं प्रकृतिः, दधि विकारमिति। वर्णेषु एवन्न भवति, तत्रत्त्विकाराद् यकारः, यकाराद् इकारो दृश्यते। नायं विकारभावः, वर्णान्तरमेतद्। तस्मादयमविकारभावः शब्दानित्यत्वं पुष्णाति।[18]

शब्दानित्यत्वे षष्ठोऽन्तिमो हेतुः **'वृद्धिश्च कर्तृभूम्नाऽस्य'**[19] इति मीमांसासूत्रेण उपस्थापितः। उच्चारयितृणां बाहुल्याच्छब्दे वृद्धिर्जायते। यत्र वृद्धिह्रासौ जायेते, तत्रानित्यत्वमापद्यते। वृद्धिह्रासमत्त्वाच्छब्दोऽनित्य इति। तद्यथा लोके बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते, वृद्धिः न स्यात्। अनेन ज्ञायते यत् शब्दो नैवाभिव्यज्यते। 'स यदि अभिव्यज्यते, बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत। अतो मन्यामहे नूनमस्य एकैकेन कश्चिदवयवः क्रियते, यत्प्रचयादयं महानुपलभ्यते।'[20] आशयोऽस्ति यच्छब्दे महत्त्वं जायते वृद्धिर्भवतीत्यनेनानित्यत्वं दृढम्।

नोचितेयं शब्दवृद्धिकथा, या पूर्वपक्षतः उक्ता। वस्तुतः नादस्यैव सा वृद्धिः, न शब्दस्य। अत एव शब्दस्यानित्यत्वं नोपपद्यते। जैमिनि-मुनिना **'नादवृद्धिः परा'**[21] इत्यनेन सूत्रेण विषयोऽयं पुष्टीकृतः। निरवयवो हि शब्दः। अवयवभेदानवगमाद् निरवयवत्वाच्च महत्त्वानुपपत्तिर्भवति। अतः शब्दो न वर्द्धते। यदि एकेन पुंसोच्चार्यते तर्हि मृदुः शब्दोऽसौ भवति। बहुभिस्तूच्चार्यमाणे महान्प्रतिभाति। यतोहि संयोगविभागाः नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्या भवन्ति। तेन नादस्यैषा वृद्धिर्न शब्दस्येति।[22] शब्दोऽभिव्यक्तः स्यादनभिव्यक्तो वा स्यात्, स नित्य एवेति मीमांसाकानां प्रतिज्ञा।

---

18. शाबरभाष्यम्, 1.1.16
19. मीमांसासूत्रम्, 1.1.11
20. शाबरभाष्यम्, 1.1.11
21. मीमांसासूत्रम्, 1.1.17
22. शाबरभाष्यम्, 1.1.17

"शब्दो नित्य" इति सिद्धान्तपरिपुष्ट्यर्थं महर्षिजैमिनिना षडन्ये हेतवः समुपस्थापिताः। तथाहि–

1. **नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्।**[23]
2. **सर्वत्र यौगपद्यात्।**[24]
3. **संख्याऽभावात्।**[25]
4. **अनपेक्षत्वात्।**[26]
5. **प्रख्याभावाच्च योगस्य।**[27]
6. **लिङ्गदर्शनाच्च।**[28]

दर्शनस्य परार्थत्वान्नित्यश्शब्द इति प्रथमो हेतुः शब्दनित्यत्वे। तत्र श्रीशबरस्वामिना स्पष्टीकृतम्–"दर्शनमुच्चारणं तत् परार्थम्, परमर्थं प्रत्याययितुम्। उच्चारितमात्रे हि विनष्टे शब्दे न चाऽन्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात्। अतो न परार्थमुच्चार्येत। अथ न विनष्टः, ततो बहुश उपलब्धत्वादर्थावगम इति युक्तम्।"[29] अग्रे विप्रतिपत्तिनिराकरणपूर्वकं सिद्धान्तीकृतं यत् परप्रतिपत्तये शब्द उच्चार्यते। तस्मान्नित्यश्शब्दः।

शब्दनित्यत्वे द्वितीयो हेतुः प्रदत्तः–'सर्वत्र यौगपद्याद्', अर्थात् गोशब्द उच्चारिते सर्वगवीषु युगपज्ज्ञानं भवति। अत आकृतिवचनोऽयम् आकृत्या नाऽनित्यशब्दस्य संज्ञासंज्ञिसम्बन्धो घटते। कर्ता आकृतिं निर्दिश्य "इयं गौरिति" सम्बध्नीयात्। तदनु गामजानन् बालः वृद्धव्यवहारेण जानाति यद् गौरिति संज्ञा, सास्नादिमान् प्राणी च असौ संज्ञीति। पौनःपुन्येन वृद्धव्यवहारेण अथवा पुनः पुनः गौशब्दश्रवणेन स एवाऽयमित्यनेन ज्ञानेन

---

23. मीमांसासूत्रम्, 1.1.18
24. मीमांसासूत्रम्, 1.1.19
25. मीमांसासूत्रम्, 1.1.20
26. मीमांसासूत्रम्, 1.1.21
27. मीमांसासूत्रम्, 1.1.22
28. मीमांसासूत्रम्, 1.1.23
29. शाबरभाष्यम्, 1.1.18

बालो रङ्गभेदे सत्यपि जानाति यद् इमाः गावः, आसु एका गौत्वन्नाम जातिः भाष्ये स्पष्टीकृतम्–"गोपिण्डे च बव्हीनामाकृतीनां सद्भावाच्छब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति? नित्ये तु सति गोशब्दे बहुकृत्वोच्चरितः श्रुतपूर्वश्चाऽन्यासु गोव्यक्तिष्वन्वयव्यतिरेकाभ्यामाकृतिवचनमवगमिष्यति। तस्मादपि नित्यः।"[30]

शब्दनित्यत्वपरिपुष्ट्यर्थं संख्याभावोऽपि हेतुत्वेन प्रवर्तते। व्यवहारे दृश्यते यद् 'गौः' 'गौः' 'गौः' इत्येवमनेकधोच्चरिते गोशब्दे संख्या न अधिगम्यते। तथाहि–अष्टकृत्वो गोशब्द उच्चारित इति व्यवह्रियते, नहि अष्टौ गोशब्दाः इति। अनेन ज्ञायते यद् भूयो भूय उच्चरितः गोशब्द एक एव। अपि च स एवायं गोशब्दो यः पूर्वमुच्चारित इति प्रतीतिर्भवति[31] अनेन परिपुष्यते शब्दनित्यत्वमिति।

शब्दविनाशकारणस्यानपेक्षत्वाच्छब्दनित्यत्वं समर्थ्यते। जगति येषां विनाशकारणमुपलभ्यते, तेषामनित्यता गम्यते। यद्यपि अनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्षितः स्यात्, तथापि उत्पत्तिकारणनाशात् विनङ्क्ष्यन्तीति प्रकल्प्यते। यथा– पटं दृष्ट्वावगम्यते यत्तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात्तन्तुविनाशाद्वा विनश्यति। न तद्वच्छब्दे। शब्दस्य न किञ्चिदुत्पत्तिकारणमवगम्यते, यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्येत। एवमपेक्षित विनाशकारणाभावान्नित्यः शब्दः।[32]

शब्दे वायवीयावयवानां योगस्य प्रख्याभावादपि शब्दनित्यं दृढम्। भाष्यस्य हार्दमिदमस्ति[33] यत्तु वायुकारणकः शब्दस्स्यादिति, वायुरूद्गतश्शब्दो भवतीति पूर्वपक्षः नोचितः। वायवीयश्चेच्छब्दो भवेत्तर्हि वायोः सन्निवेशविशेष एव स्यात्। तदा तु वायवीयानवयवान् शब्दे सतः स्पर्शनेनोपलभेमहि। किन्तु एवन्न भवति। तस्मान्न वायुकारणकः शब्दः। अतो नित्यः सः।

---

30. शाबरभाष्यम्, 1.1.19
31. शाबरभाष्यम्, 1.1.20
32. शाबरभाष्यम्, 1.1.21
33. शाबरभाष्यम्, 1.1.22

शब्दस्य नित्यत्वं लिङ्गदर्शनादपि सिद्धं भवति। लिङ्ग्यते ज्ञायतेऽर्थोऽनेनेति लिङ्गपदस्य अर्थो भवति सामान्यतः। मीमांसासरण्यां प्रायः दृश्यते यन्मुख्यार्थे भिन्ने सत्यपि अर्थान्तरस्य सूचनार्थं "लिङ्गदर्शनम्" इत्यस्य पदस्य प्रयोगो भवति। भाष्यकारेण शबरस्वामिना भावोऽयं प्रकटीकृतम्[34]–"लिङ्गं चैवं भवति–'वाचा विरुपनित्यया'[35] इति। अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति। तस्मान्नित्यः शब्दः।" 'वाचाविरुपनित्यया' इत्यस्य प्रयोजनन्तु अग्नेः वर्णने पर्यवसति, किन्तु 'नित्यया वाचा' इति श्रौतलिङ्गेन शब्दस्य नित्यतापि द्योतितेति सूत्रसमञ्जसम्। वेदेषु शब्दस्य नित्यत्वप्रख्यापका अनेके मन्त्राः सन्ति।

एभिः षड्भिः हेतुभिः शब्दस्य नित्यत्वं संपुष्टं महर्षिजैमिनिदिशा। शब्दनित्यत्वसमर्थकाः मीमांसकाः वैयाकरणाः नैरुक्ता अपि शब्दार्थयोरपौरुषेयं नित्यं सम्बन्धमभिदधति।

---

34. शाबरभाष्यम्, 1.1.23
35. ऋग्वेद, 5.75.6

# न्यायवैशेषिकदृष्ट्या शब्दविमर्शः

प्रो. हरेरामत्रिपाठी

"मानाधीना मेयसिद्धिः" "प्रमेयसिद्धिः प्रमाणाद्धि" इति नियमात् प्रमेयाणां सिद्धिः प्रमाणैः जायते इति। तत्र नैयायिकानां नये चत्वारि प्रमाणानि भवन्ति। तेष्वन्यतमं प्रमाणं शब्दप्रमाणमिति। शब्दस्य लक्षणन्तु तत्त्वचिन्तामणिकारमते प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः इति। सूत्रकारस्तु "आप्तोपदेशः शब्दः"[1] इति भाष्यकारस्तु आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषा प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तते इति आप्तः। ऋष्यार्थम्लेच्छानां समानं लक्षणमिति। आप्तश्चासौ उपदेशः युक्तम् आप्तोपदेशत्वं शब्दस्य लक्षणम्। अत्र केचन वदन्ति उपदिश्यते अनेन इति उपदेशः वाक्यज्ञानं वाक्यार्थज्ञानं वा अभिधीयते। वाक्यज्ञानप्रामाण्यपक्षे वाक्यार्थज्ञानं फलम् पदार्थस्मृत्यादयस्त्वान्तरालिका इति कर्त्तव्यतया वाक्यार्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम्। परप्रयोजनवद्वचनमात्रविवक्षयोपदेशपदमिति। ऋषीणामार्याणां म्लेच्छानाञ्च वाक्यं शब्दप्रमाणं भवति। मायामोहनिर्मितानां नास्तिकानां वाक्यं न शब्दप्रमाणमिति शब्दस्य विप्रतिपत्तिः त्रिविधा भवति, प्रामाण्यतः, भेदतः, लक्षणतश्च। तत्र प्रथमः कल्पः वचनविरोधादेव निरस्तः, शब्दतत्प्रामाण्यमनभ्युपगम्य विवक्षितार्थस्य प्रतिपादयितुमशक्यत्वात्। व्यावर्तकधर्मयोगादेव भेदव्यवहारोऽपि भवति। अत्र केचन वदन्ति समयबलेन सम्यक्परोक्षानुभवसाधनत्वं शब्दस्य लक्षणम्। केचन शब्दत्वसमवाये सति समयबलेन सम्यक्परोक्षानुभवसाधनत्वमिति लक्षणम्। आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकत्वे सति वाक्यत्वे सति ज्ञानत्वं शब्दस्य लक्षणम्। पदज्ञान[2] करणं

---

1. न्यायसूत्रम् अ. 1 आ. 1 सू. 7
2. पदं ज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
   शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी।।
   कारिकावली।। पृ. 82।। न्या.सि.मु. 356

भवति पदजन्यपदार्थोपस्थितिः अवान्तरव्यापारः शक्तिग्रहः सहकारिकारणं भवति शाब्दबोधः फलमिति। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः सा च अस्मात् [1]शब्दादयमर्थोबोधव्यः इतीश्वरेच्छा रूपा अर्थात् तत्पदजन्य-बोधविषयत्वनिष्ठप्रकारतानिरूपित विशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वं शक्तिरिति। शक्तिग्रहस्तु-व्याकरणादितो भवति।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

यदि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकं वाक्यं शब्दप्रमाणं तदा का आकाङ्क्षा उच्यते– येन पदेन विना[2] यत्पदस्य अन्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षा यथा राजगोपालपदं विना गच्छति वा पठति पदस्य अन्वयाननुभावकत्वम् अतः राजगोपालपदसमभिव्याहृत-गच्छति वा पठति पदत्वरूपाकाङ्क्षा।

अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानमासत्तिः।[3] पदार्थे तत्र तद्वत्ता योग्यता[4] परिकीर्तिता। शब्दः द्विविधो भवति लौकिकः अलौकिकश्च अत एव न्यायसूत्रकारेणोक्तम्–

"स द्विविधो दृष्टादृष्टार्थत्वात्"

प्रत्यक्षतः यः पदार्थः लभ्यते स दृष्टार्थः, अनुमानतः यः पदार्थः उपलभ्यते स अदृष्टार्थो भवति। दृष्टः अर्थो येन स दृष्टार्थः प्रवक्ता, अदृष्टोऽर्थो अनुमितो येन स अदृष्टार्थः। दृष्टार्थाः ऋषयः, मुनयः, अस्मदादयश्च, अनुमितार्थाः अस्मदादयः एव भवन्ति।

वैशेषिकसूत्रकारमते श्रोत्रग्रहणो योऽर्थः स शब्दः[5] इति। श्रोत्रग्राह्य-गुणविभाजकधर्मवत्त्वम् इति शब्दस्य लक्षणम्। अथवा श्रवणेन्द्रियजन्य-

---

1. न्या.सि.मु. पृ. 358
2. यत्पदेन विना यस्याननुभावकता भवेत्। पृ. 421
   आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्।।84काः।।
3. न्या.सि.मु. कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते। पृ. 420
4. कारिकावली 83 न्या.सि.मु. पृ. 420
5. वैशेषिकसूत्रम् अ. 2 आ. 2

लौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वं शब्दस्य लक्षणम्। तादृशी च जातिश्च शब्दरूपा। शब्दस्तु आकाशमात्रवृत्तिः बाह्यैकैकेन्द्रियग्राह्यः द्विक्षणावस्थायी तृतीयक्षणे नश्यति। पृथिव्यादिषु पञ्चसु शब्दस्तिष्ठति इति सांख्यवेदान्तिनश्चाहुः। शब्देन आकाशस्यानुमानं भवति। तथाहि शब्दो न स्पर्शवद्विशेषगुणः[1], प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्, अयावद्-द्रव्यभावित्वात् आश्रयादन्यत्र श्रोत्रदेशे उपलब्धेश्च। शब्दो गुणो भूत्वा आकाशस्य अधिगमे लिङ्गम्। प्रशस्तपादाचार्येणोक्तं-येनोच्चारितेन सास्ना-लाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः। स च शब्दः द्विविधो भवति बुद्धिहेतुकः। स्वाभाविकः काल्पनिकश्च। ध्वन्यात्मकमुभयत्र वर्तते। स्वाभाविकः वर्णविशेषानभिव्यञ्जको हसितरुदितादिरूपः प्राणिमात्र-साधारणः काल्पनिकः शब्दः त्रिविधो भवति। वाद्यादिशब्दः गीतिरूपः, वर्णात्मकश्च। भेरीशब्दादिर्वाद्यादिशब्दः माधवादिरागाभिव्यञ्जकनिषादादि-स्वरशब्दो गीतिरूपः। ध्वनिविशेषसहकृतकण्ठताल्वाद्यभिधातजन्यश्च वर्णात्मकः इति। वर्णस्योत्पत्तिस्तु आत्ममनसोः संयोगात् स्मृत्यपेक्षाद् वर्णोच्चारणेच्छा तदनन्तरं प्रयत्नः, तमपेक्षमाणादात्मवायुसंयोगाद् वायौ कर्म जायते। स च वायुरुर्ध्वं गच्छन् कण्ठादीन् अभिहन्ति। ततः स्थान-वायुसंयोगापेक्षात्स्थानाकाशसंयोगाद् वर्णोत्पत्तिरिति। वैशेषिकसूत्रकारेण शब्दस्य उत्पत्तिः त्रिप्रकारेणोपवर्णिताः।

"संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः"[2] अर्थात् भेरीदण्डसंयोगात् ध्वन्यात्मकः शब्दो जायते। वंशपाट्यमाने सति विभागात् शब्दस्योत्पत्तिर्भवतीति। शब्दादपि शब्दस्योत्पत्तिर्भवति। मीमांसकास्तु शब्दस्य नित्यत्वं स्वीकुर्वन्ति तन्मतं निराकरणाय सूत्रकारोऽपि वदति "लिङ्गाच्चानित्यः शब्दः" अर्थात् वर्णात्मकः शब्दः अनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वात् वीणादिध्वनिवद्। अत्र महर्षिगौतमोऽपि भणति "आदिमत्त्वादैन्द्रियकत्वात्कृतवदुपचाराच्च"[4]

---

1. प्रशस्तपादभाष्यम् आकाशप्रकरणम्
2. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 31
3. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 32
4. न्यायसूत्रम् अ. 2 आ. 2 सू. 16

अर्थात् 1. शब्दः अनित्यः आदिमत्त्वात् घटवत् 2. शब्दः अनित्यः ऐन्द्रियकत्वात् रूपज्ञानवत् 3. शब्दः अनित्यः कृतकत्वात् घटादिवत् उपर्युक्तानुमानैः शब्दस्यानित्यत्वं सिद्ध्यति इति। अत्र मीमांसकाः वदन्ति आचार्याणामन्तेवासिनाञ्च अध्यापनेऽध्ययने च प्रवृत्तिर्दृश्यते। अध्यापनं हि संप्रदानं संप्रदीयते गुरुणा शिष्याय वेदः स यदि स्थिरो भवति तदा तस्य संप्रदानं भवति स्थिरस्य रूपस्याभ्यासो दृष्टः पञ्चकृत्वो रूपं पश्यति, दश कृत्वोऽधीतोऽनुवाकः, विंशतिकृत्वोऽधीत इत्यभ्यासः स्थैर्ये शब्दस्य प्रमाणमिति। मीमांसकमतस्य समर्थने त्रीणि सूत्राणि कणादसूत्रे सन्ति। "द्वयोः प्रवृत्त्योरभावात्"[1] "प्रथमाशब्दात्"[2] "सम्प्रतिभावाच्च"[3] इति। मीमांसकमतं खण्डयन्नाह-कणादः "सन्दिग्धाः सति बहुत्वे" अर्थात् येन हेतुना शब्दस्य नित्यत्वं साध्यते तस्मिन् हेतौ व्यभिचारदोषः विद्यते अतः शब्दः अनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वादिति एव सम्यग् वर्तत इति। अत एव चतुर्भ्यः सूत्रेभ्यः शब्दस्य अनित्यत्वं साधितं कणादेन तदित्थं विद्यत इति।

"सतो लिङ्गाभावात्"[4] "नित्यवैधर्म्यात्"[5] "अनित्यश्चायं कारणतः"[6] "न चासिद्धं विकारात्"[7] अर्थात् शब्दः गुणः किन्तु नित्यः इति न, नित्यस्य शब्दस्य शब्दनित्यतासाधकप्रमाणाभावात् शब्दः अनित्यः इति। नित्येन सह शब्दस्य वैधर्म्यमुपलभ्यते अतः शब्दः अनित्यः। उत्पत्तिमत्त्वात् अनित्योऽयं शब्दो वर्तत इति। तीव्रमन्दादिभावेन शब्दविकारस्य दर्शनात् जन्योऽयं शब्दः इति। वात्स्यायणाचार्यः शब्दस्य व्युत्पत्तिं तु अनेन रूपेण प्रतिपादयति। शब्द्यते अनेन अर्थः इत्यभिधीयते ज्ञाप्यते इति। तत्र वर्णात्मकः शब्दः द्विविधो भवति सार्थकः निरर्थकश्च। सार्थकः त्रिविधो भवति प्रकृतिः, प्रत्ययः, निपातश्चेति। अत एव जगदीशेनोक्तम्

---

1. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 33
2. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 34
3. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 35
4. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 26
5. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 27
6. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 28
7. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 29

**स्वेतरार्थानवच्छिन्न यत्स्वार्थस्यावबोधने।**
**यच्छब्दनिश्चयो हेतुः प्रकृतिः सा तदर्थिका॥**[1]

अर्थात् स्वेतरशब्दवृत्तिज्ञानजन्योपस्थितिप्रयोज्यप्रकारतानिरूपित-विशेष्यताभिन्नयादृशार्थनिष्ठविषयताशालिशाब्दबोधं प्रति अव्यवहितोत्तरत्व-संसर्गावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चय एव हेतुः तादृशानुपूर्वीमत्त्वं तथाविधार्थे प्रकृतित्वम्।

**यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।**[2]
**स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः।**

अर्थात् यादृशार्थकप्रकृतिनिपातभिन्नः यादृशार्थे प्रशस्तशक्तिनिरूढ़-लक्षणात्मकवृत्तिमांश्च यादृशः शब्दः स तादृशार्थबोधकः प्रत्ययो भवति स च चतुर्विध इति। वैशेषिकानां नये अनुमानेनैव शाब्दबोधात्मकज्ञानस्योपपत्तिः भवति तदित्थं वर्तते।

1. "गौः अस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रय-पदस्मारितत्वात् घटवत्"[3]

2. "गौः अस्तितावान् अस्तिपदसमभिव्याहृतगौः पदस्मारितत्वाद्वा[4] चक्षुर्वत्" तन्न; शाब्दबुद्धौ पदजन्यपदार्थोपस्थितिज्ञानमेव कारणं भवति गवादेः पदस्मारित्वाद्यभावग्रहदशायाम् अस्तितावान् गौः इति बोधः न स्यात् इति। मीमांसकाः शब्दे द्रव्यत्वं स्वीकुर्वन्ति परन्तु नैयायिकाः वैशेषिकास्तु गुणत्वं शब्दे स्वीकुर्वन्ति। अत्र कणादैरुक्तम् "एकद्रव्यत्वान्न द्रव्यम्"[5] एकस्मिन् द्रव्ये एव विद्यमानत्वात् न शब्दः द्रव्यमिति अवयविद्रव्यन्तु अनेकेषु द्रव्येषु समवायेन तिष्ठति इति।

---

1. शब्दशक्तिप्रकाशिका कारिका 7 पृ. 33
2. शब्दशक्तिप्रकाशिका कारिका 9 पृ. 43
3. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 23
4. शब्दशक्तिप्रकाशिका मूलगद्य पृ. 13
5. शब्दशक्तिप्रकाशिका पृ. 14

"नापि कर्माऽचाक्षुषत्वात् प्रत्ययस्य"[1] कर्मणः प्रत्यक्षं चक्षुषा जायते शब्दस्य चक्षुषा प्रत्यक्षं न भवति अतः शब्दः न कर्म इति। शब्दत्वं न कर्मवृत्तिः चाक्षुषप्रत्यक्षावृत्तिजातित्वात् रसत्वादिवत्।

गुणस्य सतोऽपवर्गकर्मभिः[2] साधर्म्यादित्यनेन शब्दस्य कर्मत्वमुपपादितं तन्न; लिङ्गाभावात् शब्दः गुणः परन्तु अनित्य एव इत्यलं विस्तरभयेन।

---

1. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 24
2. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 25

# शब्दस्य प्रमाणान्तरत्वे युक्तिप्रदर्शनम्

**डॉ॰ विष्णुपदमहापात्रः**

**'प्रमाणाधीना प्रमेयसिद्धिः'** अर्थात् प्रमाणमन्तरा न प्रमेयस्य सिद्धिर्भवतीत्यतः दार्शनिकैः स्वस्वशास्त्रे प्रमाणतत्त्वं विवेचितम्। तत्र प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणविषये दार्शनिकानां विप्रतिपत्त्यभावेऽपि प्रमाणसंख्याविषये अस्ति महान् मतभेदः। प्रत्यक्षमात्रमेकं प्रमाणमिति चार्वाकाः, प्रत्यक्षानुमानभेदात् प्रमाणद्वयं बौद्ध–वैशेषिकाः, प्रत्यक्षानुमानागमभेदात् प्रमाणत्रयं सांख्ययोगाः, प्रत्यक्षानुमानोपमानशब्दार्थापत्तिभेदात् प्रमाणपञ्चकं प्राभाकराः, प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् प्रमाणषट्कं कौमारिलाः अद्वैतिनश्च, प्रत्यक्षानुमानोपमानशब्दभेदात् च प्रमाणचतुष्टयमामनन्ति नैयायिकाः।

तत्र पदविशेषोपस्थितेन पदार्थेन सह अन्वयार्थं यो हि संसर्गः संकल्पितः तादृशसंसर्गावगाहिशाब्दबोधं प्रति पदज्ञानस्य करणत्वं पदार्थोपस्थितेश्च व्यापारत्वं भवतीति नैयायिकैः अभ्युपेयते। प्रत्यक्षस्य इन्द्रियार्थसन्निकर्षजन्यत्वात्, अनुमितेः व्याप्तिज्ञानपरामर्शादिजन्यत्वात्, उपमितेः सादृश्यादिज्ञानजन्यत्वात्, शाब्दीप्रमायाश्च शब्दज्ञानजन्यत्वाच्च "कारण-वैचित्र्यात् कार्यस्य वैचित्र्यम्" इति नियमानुरोधेन शाब्दीप्रमायाः शब्दप्रमाणस्य वा प्रमान्तरत्वं प्रमाणान्तरत्वं वा सिद्ध्यतीति नैयायिकानामाशयः। एवं च तदर्थविषयकसंसर्गावगाहिशाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेः नियन्त्रितत्वात् शाब्दीप्रमा प्रत्यक्षादिविलक्षणा इति नैयायिकानां सिद्धान्तः। उक्तं च तर्कालङ्कारेण–

**'साकांक्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्नप्रत्यक्षं न चानुमा।। इति।**[1]

---

1. शब्दशक्तिप्रकाशिका कारिका 3

तत्र केचन इत्थं प्रलपन्ति पदज्ञानाधीनपदार्थोपस्थित्यनन्तरं तत्तदर्थविषयकसंसर्गावगाहि यो बोधो भवति तस्य बोधस्य स्मृतित्वस्वीकारे न काऽपि हानिः। यतः विनिगमनाविरहात् पूर्वानुभूतपदार्थस्मरणमन्तरा विजातीयान्वयबोधस्य नैवोत्पत्तिरिति यथा अन्वयवादीनामभिप्रेतं, तथैव वृत्तिविशिष्टपदज्ञानरूपोद्बोधकद्वारा उद्बुद्धः यो हि संस्कारः तादृशसंस्कारबलाद् "गौरस्ति" इत्यत्र अस्तित्वप्रकारकगोविशेष्यकबुद्धेरुत्पत्तिदर्शनाच्च शाब्दीप्रमायाः स्मृत्यतिरिक्तत्वं नास्तीति ये वदन्ति तन्नानुमतमिति मे भाति। यतः स्मृतेः संस्कारमात्रजन्यत्वात् **"संस्कारमात्रजन्यं ज्ञानं स्मृतिः"**[2] शाब्दबोधस्य च वृत्तिज्ञानाधीनपदार्थोपस्थितिकारणजन्यत्वाच्च शाब्दीप्रमा स्मृत्यतिरिक्ता एव। एवं च तत्तत्प्रकारकतत्तद्विशेष्यकस्मृतित्वावच्छिन्नं प्रति तत्तप्रकारकतत्तद्विशेष्यकसंस्कारस्य कारणत्वात् शाब्दबोधं प्रति च तद्विलक्षणकारणतायाः सापेक्षितत्वाच्च शाब्दीप्रमा नैव स्मृतिः। उक्तं च जगदीशेन – **"न चासौ स्मृतिः समानाकारसंस्काराप्रभवत्वात्"**[3]।

तत्र अन्ये केचन इत्थं जल्पन्ति भवतु नाम शाब्दीप्रमायाः स्मृतिविलक्षणत्वं परन्तु तस्याः औपनायिकप्रत्यक्षस्वीकारे का हानिः? यतः न्यायमते अलौकिकसन्निकर्षः सामान्यलक्षणाज्ञानलक्षणायोगजलक्षणाभेदात् त्रिविधो भवति। त्रिविधेषु अलौकिकसन्निकर्षेषु ज्ञानलक्षणासन्निकर्षः सामान्यलक्षणसन्निकर्षाद्भिन्नो भवति। यतः आश्रयविषयकज्ञानस्योत्पत्तिरेव सामान्यलक्षणसन्निकर्षस्य फलम्। ज्ञानलक्षणायां च तत्प्रकारकज्ञानस्य तद्विशेष्यकज्ञानस्योत्पत्तिरेव वा फलमिति। **'विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणा'**[4] इति ज्ञानलक्षणायाः लक्षणं विश्वनाथैः प्रतिपादितम्। "सुरभिचन्दनम्" इत्यत्र चन्दनांशे सौरभस्य यथा ज्ञानलक्षणासन्निकर्षजन्यप्रत्यक्षं भवति तथैव साकांक्षपदैः उपस्थितस्य पदार्थस्य ज्ञानलक्षणासन्निकर्षवशाद् उपनीतभानात्मकं यद् अस्तित्वविशिष्टगोविशेष्यकज्ञानं तस्य ज्ञानस्य तत् प्रकारकतद्विशेष्यकावगाहित्वात् शाब्दीप्रमा ज्ञानलक्षणात्मिका स्यात्।

शाब्दीप्रमायाःज्ञानलक्षणान्तर्गतत्वम् इति यत् साधितं तन्न युक्तं, यतः ज्ञानलक्षणासन्निकर्षजन्यप्रत्यक्षे आकांक्षादिनामुपयोगः नास्ति। शाब्दबोधे

2. तर्कसंग्रहः स्मृतिप्रकरणम्
3. शब्दशक्तिप्रकाशिका पृ॰ 8
4. कारिकावली कारिका 65

च आकांक्षादिनामुपयोगित्वात् शाब्दीप्रमा ज्ञानलक्षणातिरिक्ता एव। उक्तं च **"औपनायिकप्रत्यक्षे आकांक्षादिनामुपयोगः नास्तिः"**[5] इति। यदि च शाब्दीप्रमा ज्ञानलक्षणासन्निकर्षजन्या भवेत् तर्हि शाब्दबोधानन्तरं यथा 'शाब्दयामि' इत्याकारकानुव्यवसायो भवति तथैव 'साक्षात्करोमि' इति अनुव्यवसायः भवेत्, तथा न संभवति। उक्तं च जगदीशेन - **"न चेष्टा-पत्तिरनुभवविरोधात्, तदुत्तरं तथाविधानुव्यवसायापत्तेश्च"**[6] इति। एवं च "पर्वतो वह्निमान् धूमाद्" इत्यत्र पर्वतीयवह्नीतरवह्न्यभाववत्पर्वतो वह्निव्याप्यधूमवांश्च इत्याकारकबाधसहकृतसामान्यपरामर्शात् वह्निसामान्या-नुमित्यभावेऽपि येन प्रकारेण पर्वते पर्वतीयवह्निमात्रस्यानुमितिः भवति तथैव प्रकृतस्थले 'घटेन जलमाहर' इत्यत्र साकांक्षपदज्ञानात् घटस्य-करणत्वस्य-जलस्य-कर्मत्वस्य-आहरणस्य-कृतिरूपस्य च पदार्थसमूहानामुपस्थतिकाले **"सच्छिद्रो घटो जलाहरणायोग्यः जलाहरणं न सच्छिद्रघटकरणकम्वा"** इत्याकारकायोग्यताज्ञानात्मकबाधनिश्चयस्य सत्त्वेऽपि छिद्रेतरघटकरणक-जलाहरणविषयकान्वयबोधो भवति, तदनन्तरं च तद्विषयकानुव्यवसायस्य दर्शनात् शाब्दीप्रमा न साक्षात्काररूपा। उपनीतभानप्रत्यक्षे विशेषणविशेष्यभावस्य कामचारात् शाब्दबोधे च तथाभावात् शाब्दीप्रमायाः तत्करणस्य च विलक्षणत्वं सिद्धं भवति।

तत्र प्राचीनाः वैशेषिकाः शब्दस्य अनुमानान्तर्गतत्वसाधनावसरे इत्थं प्रपञ्चयन्ति पक्षधर्मताज्ञानव्याप्तिस्मरणाभ्यामतीन्द्रियेऽर्थे यथाभवत्यनुमानम्, तथा समानविधित्वात्"[7] शब्दादिभ्योऽपि अनुमानमेव। उक्तं च **"शब्दोऽनु-मानं व्याप्तिबलेनार्थप्रतिपादकत्वात् धूमवत्"**[8] इति। एतेन ज्ञायते यत् मितेन लिङ्गेन धूमेन यथा अप्रत्यक्षस्य साध्यस्य बह्नेः पश्चान्मीयते इत्यनुमानं तथैव अनुपलभ्यमानस्यार्थस्य ज्ञातेन शब्दलिङ्गेन पश्चान्मीयत इत्यतः अनुमानं शब्द एव। अतः शब्दस्य प्रमाणान्तरत्वे नैयायिकैः यत् शब्दप्रमाणलक्षणं 'आप्तोपदेशः शब्दः' इति प्रतिपादितं तत् सर्वथा अरुचिकरमिति। वैशेषिकमतं पूर्वपक्षरूपेणाभ्युपगत्य सूत्रकारैः उच्यते

5. कृष्णकान्तिः पृ॰ 6
6. शब्दशक्तिप्रकाशिका पृ॰ 8
7. प्रशस्तपादभाष्यम्। बुद्धिप्रकरणम्
8. न्यायकन्दली बुद्धिप्रकरणम्

"**शब्दोऽनुमानम् अर्थस्यानुपलब्धेरनुमेयत्वात्**"[9] इति। एवञ्च शब्दानुमानयोरुपलब्धेः एकप्रकारत्वात् समानविधित्वाच्च शब्दस्य लिङ्गविधया बोधत्वात् यथा 'चैत्रो घटविषयकाभिप्रायवान् उच्चारकत्वसंबंधेन घटमानयेति वाक्यविशिष्टत्वात् मैत्रवद्' इत्येवं वाक्यार्थस्यानुमेयत्वेन वाक्यस्य चानुभावकत्वेन शब्दानुमानयोः प्रमेयबोधस्यैकप्रकारत्वं सिद्धं भवति। उक्तञ्च – '**उपलब्धेरद्विप्रवृत्तित्वात्**[10] इति। अद्विप्रवृत्तित्वं च प्रकारभेदरहितमिति बोध्यम्। संबन्धदृष्ट्यापि शब्दस्य अनुमानान्तर्गतत्वं प्रसिद्ध्यति। यतः "**संबन्धाच्च**"[11] अर्थात् संबन्धयोर्लिङ्गलिङ्गिनोः परस्परं व्याप्यव्यापकसंबन्धप्रतीतौ सत्यामेव लिङ्गोपलब्धौ जातायां लिङ्गिग्रहणं भवति, तथैव शब्दार्थयोरपि परस्परं संबन्धयोरेव वाच्यवाचकभावसंबन्धज्ञाने जाते एव शब्दप्रत्यक्षेण तदर्थस्य ग्रहणं भवतीत्यनुमानसमानत्वादनुमानमेव शब्द इति।

वैशेषिकैः शब्दस्य अनुमानान्तर्गतत्वमिति यत् साधितं तन्न युक्तं, यतः "**आप्तोपदेशसामर्थ्यात् शब्दादर्थसम्प्रत्ययः**"[12] अर्थाद् अपारे संसारे स्वर्गः अप्सरादिपदार्थानां सत्यामपि प्रत्यक्षाग्राह्यत्वात् न केवलं शब्दमात्रात् तेषां सम्प्रत्ययो भवति, किन्तु तादृशपदार्थप्रतिपादकानि आप्तवाक्यानि आप्तवाक्यत्वेन निबन्ध्य तथाभूतात् शब्दात् स्वर्गादीन् प्रतिपद्यते। यदि शब्दमात्रात् शब्दार्थबोधः स्यात् तर्हि धूमेन वह्निरिव शब्दार्थस्यानुमेयत्वं स्याद्, न चैवमस्ति "अयं घटशब्दः आप्तैर्घटबोधनार्थप्रयुक्तः" इति ज्ञानात् किं वा "घटशब्दः कम्बुग्रीवादिमत्पदार्थवाचकः" इति यद् आप्तैरुक्तं तत्सामर्थ्यादेव घटशब्दात् घटपदार्थस्य बोधो भवति। अनुमितौ अनुमाने वा तथाभावात् शब्दप्रमाणस्य विलक्षणत्वमिति।

किञ्च 'गौरस्ति" इति "अस्तितावान् गौः" इत्याकारकान्वयबोधार्थं शाब्दीप्रमायाः अनुमित्यतिरिक्तत्वं यन्नैयायिकैः साधितं तं परित्यज्य तत्र "गौरस्तितावान् योग्यतावत्त्वात्" इति योग्यतावत्त्वानुपाकहेतुना शाब्दबोधस्य अनुमेयत्वं स्वीकार्यमिति यदि वैशेषिकैरुच्यते तदपि नानुमतम्। यतः

9. न्यायसूत्रम् 2-1-49
10. न्यायसूत्रम् 2-1-50
11. न्यायसूत्रम् 2-1-51
12. न्यायसूत्रम् 2-1-52

**"एकपदार्थेऽपरपदार्थवत्ता योग्यता"**। गौरस्ति इत्यत्र गोधर्मिणिअस्तित्ववत्ता, अस्तित्वाश्रयता वा योग्यता। अनेन प्रकारेण गोगतास्तित्वहेतुना गोपक्षकास्तित्व-साधकानुमितौ हेतुसाध्योरभिन्नत्वात् "अस्तित्वव्याप्य अस्तितावान् गौ" इत्याकारकपरामर्शकाले पक्षांशे अस्तित्वनिश्चयस्य सत्त्वात् सिद्धसाधनापत्तिः। एवञ्च तादृशहेतुं परित्यज्य आकांक्षावत्त्वहेतुना अनुमितित्वं साधयितुं प्रयासः क्रियते चेत् तर्हि सोऽपि प्रयासः नैव युक्तः। यतः आकांक्षायाः पदवृत्तित्वात् उक्तपक्षे आकांक्षावत्त्वहेतोरविद्यमानत्वात् भवति स्वरूपासिद्धिः। यदि च अनयोः सम्मेलने अर्थात् "गौरस्तितावान् आकांक्षावत्त्वे सति योग्यतावत्त्वात्" एतादृशानुमापकहेतुनापि अनुमातुं नैव शक्यते। यतः आकांक्षापदनिष्ठा भवति, योग्यता च अर्थनिष्ठा भवति, उभयोः सामानाधिकरण्याप्रसिद्ध्या हेतुत्वमेवासंभवि। एवञ्च योग्यतासंशये अनुमित्यभावात् शाब्दबोधस्य च दर्शनात् शाब्दीप्रमा विलक्षणा एव। उक्तञ्च **"योग्यतामात्रलिङ्गक-संसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वापातात्, योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभवि-कत्वाच्च"**[13] इति। अतः शाब्दीप्रमायाः शब्दप्रमाणस्य च विलक्षणत्वं सिद्ध्यति। उक्तं च जगदीशेन-

**"योग्यतार्थगताकांक्षा शब्दनिष्ठानुभाविका।**
**प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः"**[14]।।

शब्दप्रमाणस्य अनुमानान्तर्गताङ्गिकर्तृभिः नव्यवैशेषिकैः उच्यते भवतु नाम योग्यतादिहेतुना शाब्दबोधस्य यद्यपि नानुमित्यन्तर्गतत्वं तथापि मात्रपदस्मारितत्वहेतुना गोधर्मिणि अस्तित्वसाधने अस्तित्वशून्यः अतीतादि-घटादौ तादृशहेतोरविद्यमानत्वाद् व्यभिचारसंभवेऽपि **"गौरस्तितावान् स्वधर्मि-कास्तित्वान्वयबोधानुकूलाकांक्षाश्रयपदस्मारितत्वात् घटवत्"** इत्याकार-कानुमानेन शाब्दबोधस्य अनुमितित्वं साधयितुं शक्यते। तत्र व्यभिचाराद् आकांक्षाश्रयपदजनितस्मृतिविषयत्वमात्रं न हेतुः। वस्तुतः पदस्मारित्वमात्रं हेतुः, अन्यत् सर्वं परिचायकमुपलक्षणं वा बोध्यम्। सामान्यव्याप्तिमूलकानुमानेन यथा शाब्दस्य अनुमित्यन्तर्गतत्वं तथैव

---

13. शब्दशक्तिप्रकाशिका पृ॰ 12
14. शब्दशक्तिप्रकाशिका का 4

विशेषव्याप्तिबलेनापि तथा साधयितुं शक्यते। उक्तं च – **''गौरस्तितावान् अस्तिपदसमभिव्याहृतगोपदस्मारितत्वात् चक्षुर्वदिति'**। यदि च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचारः इति यदि नैयायिकैरुच्यते तदपि नैव सत्यं, यतः स्वार्थानुमाने स्वरूपसत् कारणस्याग्राह्यत्वात्, एवं च एकविधव्यभिचारनिश्चयसत्त्वदशायाम् अन्यविधव्याप्तिनिश्चियादनुमितेः सम्भवाच्च शाब्दीप्रमा न अनुमितिव्यतिरिक्ता इति।

तत्र नैयायिकाः इत्थं प्रवदन्ति नव्यवैशेषिकैः शाब्दीप्रमायाः अनुमित्यन्तर्गतत्वमिति यत् साधितं तन्न युक्तं, यतः पदजन्यपदार्थस्मृतिः स्वरूपसत्त्येव शाब्दबोधे कारणं भवति न तु ज्ञाता सति, पदस्मारित्वा-भावग्रहदशायां शाब्दोधस्यादर्शनात् अनुमितेश्च दर्शनात् शाब्दीप्रमा न अनुमित्यन्तर्गता। एवञ्च वाक्यार्थबोधस्यानुमितित्वे तत्रापि साकांक्षपदत्वादि-लिङ्गकत्वं कल्पनीयम्। तादृशं लिङ्गमप्रसिद्धं प्रमाणाभावात्। उक्तं च **''वस्तुतो वाक्यार्थबोधस्यानुमितित्वे सत्येव साकांक्षपदत्वादिलिङ्गकत्वं कल्प्यं, तदेव त्वसिद्धं प्रमाणाभावात्''**[15]। यदि शाब्दीप्रमा अनुमितिः स्यात् तर्हि अनुमित्यनन्तरं यथा अनुमिनोमि इत्यनुव्यवसायः भवति तथैव शाब्दबोधानन्तरमपि तादृशानुव्यवसायः भवेत्, तथा न भवति। एवञ्च शाब्दीप्रमा यदि अनुमितिरूपा तर्हि अनुमितौ पदजन्यत्वं प्रकल्प्यान्वयबोधत्वं किमिति न रोचये। किञ्च समानविषयकप्रत्यक्षसामग्र्याः यथा प्रतिबन्धकत्वं समानविषयकानुमितौ, तथैव समानविषयकशाब्दसामग्र्याः अपि प्रतिबन्धकत्वं स्वीक्रियते तस्यानुपपत्तिः स्यात्। किञ्च 'घटादन्य' इति वाक्याद् घटप्रतियोगिताकान्यत्वप्रकारकनिरवच्छिन्नविशेष्यताकान्वयबोधस्य प्रसिद्धत्वात्, निरवच्छिन्नविशेष्यताकानुमितेरप्रसिद्धत्वाच्च शाब्दीप्रमायाः प्रमान्तरत्वं तत् करणस्य शब्दप्रमाणस्य च प्रमाणान्तरत्वं सिद्धमिति नैयायिकानां सिद्धान्तः।

---

15. शब्दशक्तिप्रकाशिका पृ॰ 17

# सांख्यन्याययोः शब्दप्रमाणविषये वाचस्पतिमिश्रमतचिन्तनम्

डॉ॰ जवाहरलालः

**"प्रमेयसिद्धिः प्रमाणाद्धि"**[1] अर्थात् प्रमाणमन्तरा प्रमेयस्य सिद्धिर्न भवतीति धिया प्रमेयसिद्ध्यर्थं प्रायशः सर्वे दार्शनिकाः एव स्वानुरूपं प्रमाणं व्यवस्थापयन्ति। प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणविषये दार्शनिकानां वैमत्याभावेऽपि प्रमाणस्य संख्याविषये दार्शनिकानां मतभेदः दरीदृश्यते। वस्तुतः चार्वाकस्य प्रत्यक्षमात्रस्य बौद्ध-वैशेषिकनये प्रत्यक्षानुमानद्वयस्य प्रमाणत्वेऽपि अन्येषां सांख्यादीनां नये शब्दप्रमाणस्य प्रमाणान्तरत्वसद्भावात् अत्र शब्दप्रमाणविषये किञ्चिदुपस्थाप्यते। अत्रेदमवधातव्यं यदास्तिकानां सर्वस्वमेव शब्दाख्यं प्रमाणमन्यथा वेदानामपि प्रामाण्यं नावतिष्ठेत। ततश्च अतीन्द्रियाणां धर्माधर्मादीनां निर्णये आस्तिकस्य जगतः स्वरूपमेव विलीयेत। प्रत्यक्षादिभिस्तु धर्मादीनां निर्णयोऽशक्य एव, अपितु वेदैरेव। प्रतिपादितञ्च-

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते,**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।**

आस्तिकशिरोमणिना भगवता पतञ्जलिनाऽपि स्वकीये महाभाष्ये पस्पशाह्निके इत्थं प्रतिपादितं- **शब्दप्रमाणका वयं यच्छब्द आह- तदस्माकं प्रमाणमिति।** किञ्च लौकिकोऽपि सर्वविधो व्यवहारः शब्दाधीन एव। निगदितं भर्तृहरिणा

**"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते"**[2]।

---

1. सांख्यकारिका 4
2. वाक्यपदीयम्

**"इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया,**
**यो पूर्वाहितसंस्कारो बालोऽपि प्रतिपाद्यते"[3]॥**

एतेन ज्ञायते यत् सर्वेषु ज्ञानेषु अर्थेषु च शब्दतत्त्वमनुस्यूतमस्ति इति निश्चप्रचं वक्तुं शक्यते। एवञ्च वैशेषिकास्तु शब्दस्य पृथक्प्रामाण्यं नाङ्गीकुर्वन्ति, अपि तु अनुमानविधमेव ते शब्दप्रामाण्यं स्वीकुर्वन्ति। प्रतिपादयन्ति च-

**"शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम्॥[4]**

वैशेषिकास्तु शब्दस्य पृथक् प्रमाणत्वं नाभ्युपगच्छन्ति। अपितु अनुमान एव तमप्यन्तर्भावयन्ति। तथाहि शब्दः अनुमानम्, व्याप्तिबलेनार्थप्रतिपादकत्वात् धूमवदिति। **"शब्दादीनामपि अनुमानेऽन्तर्भावः समानविधित्वात्। यथा प्रसिद्धसमयस्य असंदिग्धलिंगदर्शनप्रसिद्ध्यनुस्मरणाभ्यां अतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपि"[5]**। अतः शब्दः न पृथक् प्रमाणम्, अनुमानेऽन्तर्भावादिति तेषां मतम्। सप्तपदार्थ्यामपि शिवादित्येनानुमानविषयत्वेन व्याप्तिबलेन च शब्दोऽनुमानमेवेति समसाधि। **"शब्दस्याप्यनुमानविषयत्वेन अविनाभावोपजीवकत्वेन वा अनुमानत्वम्"[6]**। वैशेषिकैः यदुक्तं तन्नानुमतं यतः अनुमितौ व्याप्तिज्ञानस्य कारणत्वात् शाब्दबोधे च व्याप्तिज्ञानस्य अकारणत्वात् शब्दज्ञानस्य च कारणत्वात् शब्दप्रमाणं भिन्नं तस्य शाब्दबोधार्थं साक्षादुपयोगित्वं विद्यते। तत्र **"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"[7]** इति न्यायेन यद्यपि प्रमाणस्य चातुर्विध्यं विद्यते, तथापि उपमानस्य शाब्दान्तर्गतत्वात् उपमानस्य प्रमाणान्तरत्वं नाभ्युपगच्छन्ति सांख्याः। उक्तं च सांख्यकारिकायां-

**"दृष्टमनुमानमाप्तवचनञ्च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धिः"[8]॥**

---

3. वाक्यपदीयम्
4. न्यायसिद्धान्तमुक्तावली का. 140
5. प्रशस्तपादभाष्यम् 107
6. सप्तपदार्थी 72
7. न्यायसूत्रम् 1-1-3
8. सांख्यकारिका 4

सांख्यमतमिव योगसूत्रकारैरपि **"प्रत्यक्षानुमानागमाः प्रमाणानि"**[9]। पूर्वमीमांसकैः उत्तरमीमांसकैश्च शब्दस्य प्रमाणान्तरत्वमङ्गीक्रियते। एतेन ज्ञायते यद् व्यवहारार्थं शब्दस्यावश्यकता विद्यते एव। शब्दस्य प्रमाणान्तरत्वं यत् दार्शनिकैः साधितं तस्य प्रमाणस्य किं स्वरूपं? तत्र च वाचस्पतिमिश्राणां क आशयः? इत्यादि जिज्ञासानिराकरणाय शब्दप्रमाणस्वरूपं प्रतिपादयति न्यायसूत्रकारः– **"आप्तोपदेशः शब्दः"**[10] इति। अस्य सूत्रस्य व्याख्यानावसरे भाष्यकारः इत्थं प्रवदति– **"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः तया प्रवर्तत इत्याप्तः**[11]" सूत्रकारैः शब्दप्रमाणस्य यल्लक्षणं प्रतिपादितं तच्च ऋष्यार्य-म्लेच्छानां समानमिति भाष्यकाराणामाशयः। उक्तं च **"ऋष्यार्यम्लेच्छानां समानं लक्षणं तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते"**[12]। अर्थादिदं च आप्तलक्षणं सर्वेषां समानमेव। एवञ्च ऋषिष्वार्येषु म्लेच्छेषु च ते एव आप्ता ये पदार्थस्य यथार्थस्वरूपं साक्षात्कृत्यैवोपदिशन्ति न तु भ्रान्त्या। आप्तोपदेशेन हि सर्वेषां जनानां व्यवहाराः प्रवर्तन्ते न तु भ्रान्तवञ्चकाद्युपदेशेन, भ्रान्तवञ्चकाद्युपदेशेन व्यवहारे कृतेऽपि फलोपलब्धिर्न संभवति इति।

तत्रेदं चिंतनीयं – **"आप्तोपदेशः शब्दः"** इति सूत्रकारीयलक्षणे आप्तस्य उपदेशः इति षष्ठी समासः भाष्यकारैः स्वीकृतः। अर्थात् आप्तवाक्यं शब्दप्रमाणमिति वृत्तिकारो विश्वनाथस्तु **"आप्तो यथार्थोपदेशः शाब्दबोधो यस्मात्**[13]" इति सूत्रवाक्यस्य व्याख्यां कृतवान्, तेन ज्ञायते शाब्दबोधस्य करणं शब्दप्रमाणम्। यतो हि **"आप्तोपदेशसामर्थ्यात् शब्दादर्थसम्प्रत्ययः"**[14] इति न्यायसूत्रस्यापि अयमेवाभिप्रायः। एवञ्च साक्षात्कृतधर्मा इति भाष्यपङ्क्तेर्व्याख्यानावसरे भाष्यकारस्याशयं विवृणोति तात्पर्यटीकाकारो वाचस्पतिमिश्रः **"सुदृढप्रमाणेनावधारिताः साक्षात्कृताः धर्माः पदार्थाः हिताहितप्राप्तिपरिहारार्था येन"**[15] इति।

9. योगसूत्रम् 7
10. न्यायसूत्रम् - 1-1-7
11. न्यायभाष्यम् पृ. 28
12. न्यायभाष्यम् पृ. 28
13. न्यायसूत्रवृत्तिः शब्दप्रकरणम्
14. न्यायसूत्रम् 2-1-52
15. न्यायवार्तिकतात्पर्यटीका शब्दलक्षणप्रकरणम्

अभिप्रायस्तु सुदृढप्रमाणैः पदार्थस्य निश्चय एव साक्षात्कारतुल्यः इति भाष्यकारैः साक्षात्कारशब्दस्य प्रयोगो विहितः। अनुमानेन शब्दप्रमाणेन वा तत्त्वनिर्णीय यदि तादृशं तत्त्वं प्रतिपादयन्ति, ये च प्रतिपादयन्ति ते आप्तपदवाच्या भवन्तीति टीकाकाराणामाशयः। **''यथादृष्टार्थस्य चिख्यापयिषया इति''** भाष्यकारैः यत् प्रयुक्तं तेषामयमाशयो यः पदार्थो येन रूपेणावधारितः तेनैव रूपेण तस्य ख्यापनेच्छा भवेत् किन्तु यथा दृष्टार्थस्य ख्यापनेच्छा सम्भवेऽपि आलस्यादिवशतः तस्योपदेशः यदि प्रयत्नं न भवेत्तर्हि तादृशः पुरुषो नैव आप्तः। अत एव यथा दृष्टार्थस्य चिख्यापयिषया प्रयुक्त इत्यत्र प्रयुक्तशब्दस्य उपपादनं भाष्यकारैः कृतम्। प्रयुक्तशब्दस्य कोऽर्थः इति जिज्ञासायां मिश्राः प्रतिपादयन्ति **''उत्पादितप्रयत्नः इत्यलसत्वं तथापि स्थानकरणपाटवाऽभावेन वर्णनिष्पादनासामर्थ्येन प्राप्तः प्रसज्येत इति''**[16]। तद्वारणाय उपदेष्टृशब्दस्य प्रयोगो भाष्यकारैः कृतः। उपदेष्टा नाम स्थानकरणपाटववानिति टीकाकारः। आप्तलक्षणस्य व्यापकत्वमस्ति न वा? इति जिज्ञासायां भाष्यकारैः ऋष्यार्यम्लेच्छानां समानमिति भाष्यकारैर्भाषितं तदर्थं परिष्करोति वाचस्पतिमिश्रः - दर्शनात् ऋषिः करतलामलकफलवत्साक्षात्कृतत्रैकाल्यवर्तिप्रमेयमात्र-आराद् यतः पातकेभ्यो इत्यार्यो। मध्मयो लोकः म्लेच्छप्रसिद्धः। म्लेच्छा अपि हि परिपथमवस्थिताः पन्थानमपहृतसर्वस्वानां मार्गाख्याने हेतुदर्शनशून्या भवन्त्याप्ता इति। सांख्यशास्त्रेऽपि **''आप्तश्रुतिराप्तवचनं तु''**[17] इति कारिकायाः व्याख्यानावसरे वाचस्पतिमिश्रैः एकं नवीनं चिंतनं प्रतिपादितं यत् प्रयोज्यवृद्धशब्दश्रवणानन्तरं प्रयोजकवृद्धस्य गवानयनम् उपलभ्य पार्श्वस्थो व्युत्पित्सुबालः इत्थमाकलयति इयमस्य प्रवृत्तिज्ञानपूर्विका स्वतन्त्रप्रवृत्तित्त्वात् मदीयप्रवृत्तिवत्। तदनु चायं प्रवर्तकः प्रत्ययः आचार्योच्चरितवाक्यजन्यः तदनन्तरभावित्वाद् इत्येवं स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्वञ्चानुमाय शब्दान्तरभाविनी तस्मिन् शब्दस्य शक्तिं गृह्णाति इति। एतेन ज्ञायते शब्दस्य अनुमानपूर्वकत्वाद् अनुमाननिरूपणानन्तरं शब्दं लक्षयति। ''आप्तश्रुतिराप्त-वचनन्तु इति''[18]। तत्र आप्तवचनं यत् शब्दस्य लक्षणं कृतं तत्र -

---

16. न्यायवार्तिकतात्पर्यटीका, शब्दलक्षणप्रकरणम्
17. सांख्यकारिका 5
18. सांख्यतत्त्वकौमुदी पृ.75

**"आप्ता चासौ श्रुतिश्च आप्तश्रुतिः, वाक्यजनितं वाक्यार्थज्ञानं भवतीति"**[19]। वाक्यजनितं वाक्यार्थज्ञानं तत् स्वतः प्रमाणमिति उद्घोषयन्ति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः। तथाहि–**"अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति"**[20]। अभिप्रायस्तु वाक्यजन्यं ज्ञानं द्विविधं–एकमन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थमाम्नायवाक्यजन्यं स्वतःप्रमाणम्, अपरं चाम्नायरूपमूलप्रमाणसापेक्षस्मृत्यादिवाक्यजन्यं परतः–प्रमाणम्। तत्र स्वतःप्रमाणस्य युक्तत्वे हेतुमाह–**"सकलदोषाऽऽशङ्का–विनिर्मुक्तेः"** इति। सकला ये भ्रमप्रमादविप्रलिप्साकारणापाटवादयः पुन्दोषास्तेषां तेषां याऽऽशंका = सम्भावनामात्रेण प्रसक्तिः तस्याः विनिर्मुक्तेः = विरहाद्, अयुक्तत्वापादकपुन्दोषराहित्यादित्यर्थः। कुतः पुन्दोषशंका–कलङ्कविमोक इत्यपेक्षायां हेतुमाह– "अपौरुषेयवेदवाक्यजनितत्वेन" इति, सांख्यन्याययोः पर्यालोचनेन इत्थं ज्ञातुं शक्यते यत् न्यायदर्शने यथा आप्तः प्राप्तो इति यद् व्याख्यानं कृतं टीकाकारैः सांख्यतत्त्वकौमुद्यामपि तथैव व्याख्यानं कृतमिति नात्र विशेषः।

विशेषस्तु शब्दस्य पौरुषेयत्वापौरुषेयत्वनिर्वचने दृश्यते। कौमुद्यां यद्यपि टीकाकारैः शब्दस्यापौरुषेयत्वं साधितं तथापि न्यायशास्त्रे न्यायमतमनुसृत्य अर्थात् वेदस्य पुरुषकर्तृत्वं व्यवस्थाप्य तस्य पौरुषेयत्वं साधितम्। उक्तञ्च– **"तस्मात् पुरुषस्यैव आप्तस्य उपदेशः आप्तोपदेश इति साधुव्याख्यानं भाष्यकारीयमिति"**[21]।

उपदेशस्य कोऽर्थः इति जिज्ञासायाम् – उपदिश्यते अनेन इति उपदेशः इति व्युत्पत्तिं स्वीकृत्य जयन्तभट्टैः उपदेशस्य लक्षणं प्रतिपादितं यत्–

**"धर्ममित्युपदेष्टव्यः कश्चिदर्थो विवक्षितः।**
**साक्षात्करणमेतस्य यथार्थमुपलम्भनम्"**[22]।

टीकाकारैरपि उपदेशपदस्य तादृशोऽर्थः स्वीकृतः। **"उपदिश्यते**

19. सांख्यतत्त्वकौमुदी प
20. सांख्यतत्त्वकौदी पृ. 77
21. न्यायवार्तिकतात्पर्यटीका, शब्दलक्षणप्रकरणम्
22. न्यायमञ्जरी, शब्दप्रमाणप्रकरणम्

**अनेन इति उपदेशो वाक्यज्ञानं वा तदर्थज्ञानं वेत्यभिधीयते इति''**[23]। आचार्यवाचस्पतिमिश्रस्योभयग्रन्थविवेचनेनेदमेव तत्त्वमायाति यत् सांख्यशास्त्रे आप्तश्रुतिराप्तवचनं शब्दः इति शब्दलक्षणमादृत्य शब्दस्य अपौरुषेयत्वं साधितं तदनुसारञ्च शब्दलक्षणं व्याख्यातमिति। न्यायदर्शने च आप्तोपदेशः शब्द इति शब्दप्रमाणलक्षणमभ्युपगत्य वेदपौरुषेयत्वञ्च स्वीकृत्य तदनुसारं शब्दलक्षणं विमृश्य दृष्टादृष्टार्थभेदात् शब्दस्य द्वैविध्यं प्रतिपादितमिति टीकाकाराणां मिश्राणामस्ति शास्त्रेषु शास्त्रान्तरेषु च महद्वैलक्षण्यमिति निश्चप्रचं वक्तुं शक्यते इति। तथा हि - शब्दः द्विविधः दृष्टादृष्टभेदेन **''स द्विविधः दृष्टादृष्टार्थत्वात्**[24]। दृष्टार्थः लौकिकः, अदृष्टार्थस्तु प्रायशः वैदिकशब्दः। द्विविधोऽपि शब्दः प्रमाणम्। वक्तृभेदेनापि शब्दः द्विविधः दृष्टादृष्टार्थप्रवक्तृकत्वात्[25]। प्रत्यक्षतः उपलब्धः अर्थः दृष्टार्थः। अनुमानेनोपलब्धः अर्थः अदृष्टार्थः, दृष्टः अर्थः येन सः दृष्टार्थः प्रवक्ता। एवं अदृष्टः अर्थः येन सः अदृष्टार्थः। एवम् च दृष्टादृष्टार्थरूपलौकिकवैदिकभेदः शब्दे नैयायिकानामिष्ट इति।

---

23. न्यायवार्तिकतात्पर्यटीका
24. न्यायदर्शनम् 1-1-8
25. न्यायवार्तिकम् 381

# सांख्ययोगमते शब्दप्रमाणम्

प्रो॰ महेशप्रसादसिलोड़ी

"प्रमेयसिद्धिः प्रमाणाद्धि" इति वचनानुसारेण प्रमीयते तदिति प्रमेयम्। प्रमेयस्य सिद्धिः प्रमेयसिद्धिः, प्रमीयतेऽनेनेति प्रमाणम्, प्रमाणमेकमेव यतो हि बुद्धेरेकत्वाभ्युगमात्, उपाधिभेदेन भिन्नमाश्रीयते प्रत्यक्षमनुमानमित्यादि। अत एव "प्रमाणम्" एकवचनमाश्रीयते। अत्र प्रश्नः समुदेति - कथम्? शकां समाधते यथा ब्रीह्यादिवत् ब्रीह्यादिप्रमेयं प्रस्थादिना प्रमाणेन परिच्छिद्यते एवमिहापि व्यक्तादिप्रमेयं प्रत्यक्षादिप्रमाणेन परिच्छिद्यत इति।

बहूनि प्रमाणानि आचार्यैरभ्युपगम्यन्ते परं तेषु त्रिविधं प्रमाणं स्वीक्रियते, लिखितमस्ति - "त्रिविधं प्रमाणमिष्टम्"[1] त्रिविधं - विधानं विधा, तिस्रो विधा तत् त्रिविधं त्रिप्रकारकम्। कथितमस्ति - एकमेव बुद्धिलक्षणं सत्त्वं निमित्तान्तरानुग्रहोपजनिताभिः कार्यविशेषपरिच्छिन्नभेदरूपाभिः शक्तिभिरुपकाराद् भिन्नमिव प्रत्यवभासमानं दृष्टादिशब्दवाच्यं भवति। अपरं उदाहरणं प्रददाति यथा - शब्दस्पर्शरूपरसगन्धानामेकद्रव्यसन्निवेशेऽपि भिन्नभिन्नग्राहकेन्द्रियैः पृथक्-2 बोधो भवति, अपरे निर्दर्शयन्ति - यथा-कर्तृकरणाधिकरणसम्प्रदानापादानकर्मलक्षणानां शक्तीनामेकद्रव्य-सन्निवेशेऽपि कार्यविशेषपरिच्छिन्नानि स्वरूपाणि न संकीर्यन्ते, तद्वदिदं द्रष्टव्यम्। पुनः शंकामादत्ते-कथं पुनरेतद् गम्यते, यथा त्रिविधमेव प्रमाणं न पुनरनेकविधमपीति। न्यायमते चतुर्विधम्, मीमासायां पञ्चविधम्, वेदान्ते षड्विधप्रमाणं स्वीकुरुते, तथैव अन्येषु दर्शनेष्वपि पृथक् पृथक् प्रमाणानां संख्याः दृग्गोचराः भवन्ति।

परमत्र सांख्यवादिनः मते त्रिषु प्रमाणेष्वेव अन्यप्रमाणानामन्तर्भावः स्वीक्रियते। अत एव तस्मिन्नेव "त्रिविधं प्रमाणमेव सर्वप्रमाणसिद्धत्वात्" अङ्गीक्रियते।

अग्रे उपस्थापयन्ति-किम्पुनस्तत् त्रिविधं प्रमाणम्। उच्यते- "दृष्टमनुमानमाप्तवचनं च" इति दृष्टम्-उपात्तविषयेन्द्रियवृत्युनुपाती योऽध्यवसायः। अनुमानम्-द्वयोरविनाभाविनोरेकः प्रत्यक्षेण प्रमाणं तत्पूर्वकं सम्बन्ध्यन्तरे यत् पश्चान्मानं भवति। आप्तवचनम्-आप्तवचनं तु प्रमाणभूतशब्दद्वारकोऽत्यन्तपरोक्षेऽर्थे निश्चयः। आप्तवचनस्य किं लक्षणमिति-उच्यते-"आप्तश्रुतिः आप्तवचनम्" आप्तो नाम रागादिवियुक्तस्या गृह्यमाणकारणपर्याया व्याहृतिः। श्रवणं श्रुतिः। आप्ता चासौ श्रुतिराप्तश्रुतिः। आप्तेभ्यः श्रुतिराप्तश्रुतिः। अपुरुषबुद्धि-पूर्वकाम्नायः स्वतन्त्रः पुरुषनिःश्रेयसार्थं प्रवर्तमानो निःसंशयं प्रमाणमिति। द्वितीयं इदमेव सिद्धं भवति-मन्वादिनिबन्धनानां च स्मृतीनां वेदाङ्गतर्केतिहासपुराणानां शिष्टानां नाना शिल्पाभियुक्तानां चा दुष्टमनसां यद्वचस्तत् प्रमाणमिति सिद्धं भवति। अक्षसन्निकर्षभाजामर्थानां प्रत्यक्षेणोपलब्धिः। असन्निकर्षभाजामपि चोपलब्धसम्बन्धानामनुमानेन। ये त्वतीन्द्रिया भावास्तेषामुभयवैलक्षण्यन्नास्ति, यतो हि प्रत्यक्षानुमानाभ्यामुपलब्धिः, अत एव आगमिकत्वे सर्ववादसिद्धिप्रसंग इति स्वीक्रियते।

लिखितञ्चास्ति -

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रसिद्धिरनुमानात्।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्॥**[1]

अत्र पूर्वपक्षिनः कथयन्ति - सामान्यतोदृष्टप्रमाणैरेव आप्तप्रमाणमस्ति, परं सामान्यतोदृष्टादनुमानाद् यन्न सिद्धयति प्रत्यक्षग्राह्यमपि स्वयं दृष्टं कारणान्तरप्रतिबद्धविषयभावमत्यन्तपरोक्षं वा स्वर्गापवर्गदेवतादिधर्मसामान्य-रहितं तदाप्तागमात् साध्यं अङ्गीकृतम्।

पूर्वपक्षी वदति - सर्ववादसिद्धिप्रसङ्गादप्रमाणमिति चेत् स्यादेतत् - यदि तस्यागमः प्रमाणीक्रियते तेन प्रतिशास्त्रं येऽभियुक्तास्तेषां प्रामाण्य-मित्यवश्यमभ्युपगन्तव्यम्। एवं सर्वाचार्यप्रामाण्यादनेकविकल्पविचित्रातर्कवृत्तिः परिनिश्चितत्त्वाद् भ्रान्तिः प्रसज्येत।

शास्त्रकारः समाधत्ते - तच्चायुक्तम्, कस्मात्? आप्तलक्षणस्यानव-धारितत्वात्। व्यपगतरागादिदोषाणामसन्दिग्धमतीन्द्रियार्थदृष्टानामीश्वरमहर्षीणा-माप्तत्वमाचक्ष्महे न सर्वेषाम्। यदि चान्योऽप्येवं धर्मोऽस्ति, भवतु प्रमाणं

1. सांख्यकारिका 6,

नैव काचिद् विप्रतिपत्तिः। परन्तु युक्त्यपेक्षाल्लिङ्गादागमोऽर्थान्तरमिति। विशेषः न हि वयं वृक्षादीनामागमत्वमाचक्ष्महे, किं तर्हि स्वर्गादीनामत्यन्त-परोक्षविषयाणामिति। अत एव आप्तवचनं सर्वप्रमाणेषु श्रेष्ठतरम्। योगसूत्रे-तत्त्ववैशारद्यामागमस्य लक्षणमाहतत्त्वदर्शन- कारुण्यकरणपारगामिसम्बन्ध आप्तिः तया सह वर्तत इत्याप्तः, आप्त चित्तवर्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तये उपदिश्यते श्रोतृहिताहितप्राप्ति-परिहारोपायतया प्रज्ञाप्यते। नन्वेवं मन्वादीनामप्यागमः प्लवेत यथाहुः -

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।**
**स सर्वोऽभिहितौ वेदे सर्वज्ञानमयो हि सः।।**

उक्तं विज्ञानभिक्षुणा - आगमाख्यम् - भ्रमप्रमादविप्रलिप्सा करणा-पाटवादिदोषरहितम्। अर्थात् स्वबोधसंक्रान्तये स्वबोधसदृशबोधोत्पत्तिः। आप्तोक्तार्थविषयिणी शब्दजन्या वृत्तिः एव प्रमाणम्। शब्दविषये महर्षिणा पतञ्जलिना प्रणीते योगशास्त्रे सूत्रविरचितमस्ति ''शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"। तद्यथा - गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानां ग्रहणं दृष्टम्। विभज्यमानाश्चान्ये शब्दधर्मा अन्येऽर्थधर्मा अन्ये ज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः। "प्रणवः" इत्यक्षरेऽपि ब्रह्मणः स्वरूपं दृश्यते। अनेन योगसूत्रेणापि शब्दः क्रियत इति ब्रह्मणः चर्चा शम्।

# साङ्ख्ययोगदृष्टौ आप्तप्रमाणम्

डॉ॰ रविशङ्करशुक्लः

कस्याऽपि विषयस्यासन्दिग्धत्वं ज्ञानमनुभवो वा यथार्थप्रमाणम्। प्रमोत्पत्तेः त्रिविधं तथ्यं – प्रमातृप्रमेयप्रमाणानि। विषयज्ञाता प्रमाता, प्रमेयो विषयो भवति, ज्ञानसाधनं प्रमाणमुच्यते। प्रमाणं विना प्रमेयज्ञानमसंभवम्। अतस्तदुपत्तये प्रमेयवस्तूनां सिद्धये प्रमाणप्रयोजनम्।[1] प्रमाणमभिनव ज्ञानोत्पादकमतः प्रमाणप्रमेयकारणमुच्यते।[2] प्रमाणसंख्याविप्रतिपत्तौ भारतीयदर्शनेषु विभिन्नानि मतानि। तानि प्रमाणानि – प्रत्यक्षानुमानोपमानाप्तार्थापत्त्यनुपलब्धि-इत्यादीनि। किन्तु सांख्ययोगशास्त्रे प्रत्यक्षानुमानाप्तप्रमाणेषु समेषां प्रमाणानामन्तर्भावः। तदाह –

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं....................................॥[3]**

सांख्यशास्त्रे पञ्चविंशतिस्तत्त्वानि सन्ति[4] एषां त्रयाणां व्यक्ता-व्यक्तज्ञत्रयाणां तत्त्वानां कैः प्रमाणैः सिद्धिर्भवति। साङ्ख्यशास्त्रीयपञ्चविंशति-तत्त्वरूपप्रमेयसाधकानि त्रीणि प्रमाणानि[5] एवमेषां व्यक्ताव्यक्तज्ञानां त्रयाणां पदार्थानां कैः, कियद्भिः प्रमाणैः, केन कस्य वा प्रमाणेन सिद्धिर्भवति? इह लोके प्रमेयवस्तु प्रमाणेन साध्यते। यथा– प्रस्थादिभिर्व्रीह्यः तुलया चन्दनादि। तस्मात् प्रमाणमभिधेयम्। दृष्टमिति दृष्टं यथा– श्रोत्रं त्वक् चक्षुर्जिह्वा

---

1. प्रमीयतेऽनेनेति प्रमाणमित्यर्थात्। तथा च प्रमाकरणं प्रमाणमिति फलितम् – साङ्ख्यकारिका अभिनवराज्यलक्ष्मीभाष्यटीका
2. प्रमेयसिद्धिः प्रमाणाद्धि – सां॰–4
3. सां॰ – 4
4. व्यक्ताव्यक्तज्ञविज्ञानात् सां॰ – 2
5. दृष्टमनुमानमाप्तवचनं......... सां॰ 4

घ्राणमिति पञ्च बुद्धीन्द्रियाणि, .......एतद् दृष्टमित्युच्यते प्रमाणम्। प्रत्यक्षेणानुमानेन वा योऽर्थो न गृह्यते, स आप्तवचनाद् ग्राह्यः। यथेन्द्रो देवराजः उत्तराः कुरवः, स्वर्गेऽप्सरस इत्यादि। प्रत्यक्षानुमानाऽग्राह्य-मप्याप्तवचनाद् गृह्यते। अपि चोक्तम् -

**आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः।**
**क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्॥**
**स्वकर्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः।**
**पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः॥ ( रागद्वेषपा० )**

साङ्ख्ययोगनये विचारितं ग्रन्थदिशा उपस्थाप्यते। सांख्ये सिद्धान्त-पोषकः ग्रन्थः साङ्ख्यतत्त्वकौमुदी, योगे च पातञ्जलयोगदर्शनमेभिरेव ग्रन्थैः साङ्ख्यसिद्धान्तस्य योगसिद्धान्तस्य च पुष्टिर्भवति।

तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनन्तु[2] आप्ताः = आचार्या ब्रह्मादयः। श्रुतिर्वेदः। आप्ताश्च श्रुतिश्च आप्तश्रुतिः, तदुक्तम् आप्तवचनमिति।[3] प्रयोजकवृद्धगुर्वादिप्रयुक्तगामानयेत्यादिवाक्यश्रवणानन्तरं प्रयोज्यवृद्ध- शिष्यादि-प्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थशक्तिग्रहस्य, शक्तिज्ञानसहकृतस्यैव च शब्दस्यार्थबोधजनकत्वाच्छब्दस्य अनुमानेन सहोपजीव्योपजीवकभावसम्बन्ध ादनुमाननिरूपणानन्तरं शब्दप्रमाणं लक्षयति आप्तश्रुतिराप्तवचनन्तु इति। आप्ता निर्दुष्टा, श्रुतिः = (लक्षणया) वाक्यजन्यं वाक्यार्थज्ञानं (= वाक्यार्था-कारा बुद्धिवृत्तिरेव) आप्तवचनं = आप्तवाक्यजन्यं ज्ञानं शब्दप्रमाणमिति तदर्थः। पौरुषेयो बोधश्च फलं प्रमा। तत्करणं वाक्यार्थाकाराचित्तवृत्तिः शब्दप्रमाणम्। तदुक्तं -

**पदज्ञानन्तु करणं, द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी इति।**

पदज्ञानम् = आप्तवाक्यजन्यं ज्ञानम्, करणं = शाब्दबोधक-रणत्वाच्छब्दप्रमाणम्, पदार्थधीः = वृत्त्या पदजन्यपदार्थोपस्थितिश्च, तत्र द्वारं = व्यापारः, शक्तिज्ञानं न प्रमाणान्तरम्। तन्मते हि यथा गौस्तथा गवय

1. गौडपादभाष्यम् - का० 4
2. सां० का०
3. गौडपादभाष्यम् का० 5
4. सां० का० 5 अभिनवराज्यलक्ष्मीभाष्यभाषाटीका

इति वाक्यजन्यं यज्ज्ञानं तत्तु आगमप्रमाणमेव, सांख्यमते हि वाक्यजन्य-ज्ञानस्यैव (चित्तवृत्तिविशेषस्यैव) आगमप्रमाणत्वात्।[1] तथैव अर्थापत्तिरपि न प्रमाणान्तरम् अनुमाने एव तस्या अन्तर्भावात्। तथैव ऐतिह्यादि न प्रमाणानन्तरम्। अपि च तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम्।[1] यथेन्द्रो......... परोक्षमाप्तवचनात् सिद्धम्।[2] अनुमानेन च असिद्धं यत् परोक्षमतीन्द्रियं नरकादिकं न सिद्धं तत् आप्तागमात् = श्रुतिस्मृतिपुराणाद्याप्तवाक्यात् प्रतीति विषयो भवति यथा यजेतेत्यादिश्रुतयः। तथा च **इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परः मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः** शब्दं विना जागतिकव्यवहारोऽपि न भवितुमर्हति[3] तस्मादस्तिशब्द-प्रमाणस्यावश्यकता। आप्तप्रमाणं हि आगमप्रमाणशब्देनाख्यायते। भ्रमरहितः सत्पदार्थज्ञाता महापुरुष एव आप्त आख्यातः। शास्त्रप्रमाणं वेदप्रमाणं च आगमप्रमाणशब्देनात्र प्रोक्तमवधेयम्। त्रिविधैः प्रमाणैरेव सर्वपदार्थज्ञानाधि गम इति योगदर्शनसिद्धान्तः। आगमप्रमाणं लक्षयति- उच्यते

यद् वाक्यात् श्रोतुरविचारसिद्धो निश्चयो जायते स तस्य श्रुतिराप्तः, तादृशेनाप्तेन दृष्टोऽनुमितो धर्मः = प्रत्यक्षानुमानाभ्यां ज्ञातो विषयः परत्र स्वबोधसङ्क्रान्तय-आप्तस्य शब्देन वाक्येन अन्येनाकारादिना संकेतेन उपदिश्यते। साक्षाच्छब्दश्रवणात्, शब्दार्थविषयाः शब्दार्थज्ञाननिबन्धना न तु ध्वनिज्ञाननिबन्धना, श्रोतुश्चेतसि या वृतिरूत्पद्यते स आगमः, वक्ता श्रोता चास्यागमप्रमाणस्य द्वे भावने' इति विवेच्यम्, यथा प्रत्यक्षमिन्द्रियदोषादिना दूष्यते, अनुमानञ्च हेत्वाभाषादिना दूष्यते, तथा तत्सजातीयागमोऽपि प्लवते, कथन्तदाह - यस्येतिमूलवक्तरीति। दुष्टानुमितार्थे निर्विप्लवः स्यात् आगमः, आगमप्रमाणमूला ग्रन्था अप्यागमशब्देन लक्ष्यन्ते, न च तदागमप्रमाणमूला ग्रन्था अप्यागमशब्देन लक्ष्यन्ते, न च तदागमप्रमाणम् अनधिगतयथार्थज्ञानं प्रमा, प्रमायाः करणं प्रमाणमिति सर्वप्रमाणानां साधारणं लक्षणम्।।[4]

मूलवक्तरि' इत्यत्र विज्ञानभिक्षुरपि सावधानेन चेतसा वदति आप्तेनेति - भ्रमप्रमादविप्रलिप्साकरणपाटवादिदोषरहितेन तादृशेनाप्तेन यद् उपदिष्टम्

---

1. सां॰ का॰ 6
2. गौडपादभाष्यम् - 6
3. वाक्यपदीयम् - द्रष्टव्यः नसोऽस्ति............ शब्देनैव भासते।।
4. पातञ्जलयोगदर्शनम्, भास्वतीटीका, सूत्रम् सं. 07

यथार्थवाक्यजनितं ज्ञानं तदेव प्रमाणम्। केचिद् संदिहानास्तर्कयन्ति – "बौद्धादिप्रणीतश्चागमः, आगमाभासो, नत्वागमः"[1] अत एव न प्रमाणभूत आगम इति। यथार्थस्य लक्षणं क्रियते योगाचार्यैः– यथार्थन्नाम – यथा दृष्टं यथाऽनुमितं यथा श्रुतं तथा वाङ्मनश्चेति, परत्र स्वबोधसंक्रान्तये या वागुक्ता सैव प्रमाणभूता।

एतादृशवाक्यार्थजन्यज्ञानमेव आगमशब्देनाऽभिधीयते तदागमप्रमाणम्। साङ्ख्ययोगदर्शनाभ्यामेतत्सूत्रोक्तं प्रमाणत्रैविध्यमेव स्वीक्रियते। सूक्ष्मेक्षिकया विचार्यमाणे दर्शनान्तरप्रोक्तानि षड्विधप्रमाणानि एतत् त्रितयविस्तारमात्राणि। उपर्युक्तैस्त्रिविधैः प्रमाणैरेव सर्वपदार्थज्ञानाधिगम इति सांङ्ख्ययोगदर्शनराद्धान्तः।

**इति शम्**

---

1. पातञ्जलयोगदर्शनम्, भास्वतीटीका, सूत्रम् सं. 24

# सांख्यदर्शनरीत्या शब्दप्रमाणस्वरूपम्

डॉ॰ मारकण्डेयनाथतिवारी

"प्रमेयसिद्धिः प्रमाणाद्धिः' इत्यनुसारेण प्रमायाः करणमिति प्रमाणम्। यथार्थानुभवः प्रमा। यथार्थज्ञानस्य साधनमिति प्रमाणम्। सांख्यशास्त्रे प्रमाणानि त्रिविधानि प्रोक्तानि -

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥1**

यथार्थवक्तुः पदसमूहात्मकं वाक्यं शब्दप्रमाणमित्युच्यते। यथोच्यते आप्तवाक्यं शब्दः। अत्र पदद्वयं वर्तते। यथा - 1. आप्तः, 2. वाक्यम्। आप्तस्य लक्षणं भवति - "आप्तस्तु यथार्थवक्ता इति। आप्तस्य लक्षणमुक्तं पुनः -

**आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः।**
**क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्॥**
**स्वकर्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः।**
**पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः॥[1]**

'आप्तश्रुतिराप्तवचनन्तु'[2] आप्ता चाऽसौ श्रुतिः आप्तश्रुतिः। श्रुतिर्नाम वाक्यजनितं वाक्यार्थज्ञानम्। आप्तं यथार्थं वाक्यजनितं वाक्यार्थज्ञानं शब्दप्रमाणं तेन वेदतन्मूलकश्रुतिस्मृतीतिहासपुराणादिवाक्यजन्यं ज्ञानं युक्तमुपपद्यते अथवा श्रुतिरित्यस्य श्रूयते सा श्रुतिः श्रवणविषयीभूतशब्द इत्यर्थः। आप्ता यथार्था तथा च यथार्थशब्दत्वलक्षणमुपपन्नं तेन वेदतन्मूलकवाक्यानां यथार्थशब्दत्वात्प्रमाणत्वम्।

---

1. सांख्यकारिका 4 कारिका
2. सांख्यकारिका 5 कारिका

आप्तो नाम रागादिवियुक्तस्यागृह्यमाणकारणपरार्थाव्याहृतिः। श्रवणं श्रुतिः। आप्ताऽस्यास्तीति आप्तः। अकारो मत्वर्थीयः तद्यथा तुन्दो घट इति। आप्तेभ्यः श्रुतिराप्तश्रुतिः, सरूपाणामित्येकशेषः। तत्र पूर्वेणाप्तश्रुतिग्रहणेनैवं– प्रतिपादयति – अपुरुषबुद्धिपूर्वक आम्नायः स्वतन्त्रः पुरुषनिःश्रेयसार्थम् प्रवर्तमानो निःसंशयं प्रमाणमिति।[1]

द्वितीयेन मन्वादिनिबन्धानां च स्मृतीनां वेदाङ्गतर्केतिहासपुराणानां शिष्टानां नानाशिल्पाभियुक्तानां चादुष्टमनसां यद्वचः तत्प्रमाणमित्येतत् सिद्धं भवति। 'तु' शब्दोऽवधारणार्थः।

वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्यामुल्लिखितम्2 यत् आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः। तथा चावट्यजैगीषव्यसंवादे भगवान्जैगीषव्यो दशमहाकल्पवर्तिजन्मस्मरणमात्मन उवाच –

"दशसु महाकल्पेषु विपरिवर्तमानेन मया विवेकजं ज्ञानं प्रादुरभूद् इत्यादिना योगिनः "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" लभन्ते।

आप्तेन दृष्टानुमितो वार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते। शब्दात्तदर्थविषयावृत्तिः श्रोतुरागमः। यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते। मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात्।

---

3. युक्तिदीपिका – 2/5
4. सा. त. को. – 5 का॰
5. यो॰ सू॰ 1/7

# प्रमाणांशः शब्दनयः

डॉ॰ अनेकान्तकुमारो जैनः

'प्रमाणनयैरधिगमः'[1] – इति तत्त्वार्थसूत्रस्य सूत्रेण श्रीमदुमास्वामि-महोदयैः पदार्थाधिगमहेतुत्वेन निर्दिष्टयोः प्रमाणनययोः प्रमाणं व्याख्यातं जैनदर्शने।

नयो हि प्रमाणविकल्पः तस्य विकलादेशत्वात्। तथा चोक्तम्–सकलादेशः प्रमाणाधीनो विकलादेशो नयाधीनः।[2] प्रमाणतो वस्तु परिग्रह्य परिणतिविशेषापेक्षाऽर्थावधारणं नयस्य प्रयोजनम्। एतदेव स्पष्टयितुं शास्त्रकारैस्तस्यानेकानि लक्षणानि निरुक्तानि। तेषु प्रमुखानि लक्षणानि–

1. **वस्तुन्यनेकान्तात्मन्यविरोधेन हेत्वर्पणात् साध्यविशेषस्य याथात्म्य प्रापणप्रवणप्रयोगो नयः।[3]**
2. **श्रुतप्रमाणविकल्पो नयः।[4]**
3. **ज्ञातुरभिप्रायो नयोः।[5]**
4. **प्रमाणांशो नयः।[6]**
5. **वक्तुरभिप्रायो नयः।[7]**

---

1. तत्त्वार्थसूत्रम् – 1/6
2. सर्वार्थसिद्धिः, 1/6/24, पृ॰ 15
3. सर्वार्थसिद्धिः, 1/33/241, पृ॰ 100
4. आलापपद्धतिः, 9 तथा च श्लोकवार्तिकम्– 2/1/6 श्लो॰ 27/367
5. लघीयस्त्रयम्, द्वितीयो नयप्रवेशः, कारिका–30, स्वविवृत्तिः
6. आलापपद्धतिः, 9
7. प्रमाणनयतत्त्वालंकारः, 7/1

प्रमाणं हि द्रव्यपर्यायात्मकं सामान्यविशेषात्मकं वा वस्तु विजानाति। नयस्य तु न तादृशं सामर्थ्यम्। स हि वस्तु विजानन् केवलं तस्य द्रव्यत्वांशं विजानीयात् पर्यायत्वांशं वा। तत्तु न सकलं वस्तु, तादृशांशस्य विकलत्वात् सकलं तु वस्तु द्रव्यपर्यायात्मकम्। अत एव प्रमाणस्य सकलादेशत्वं नयस्य च विकलादेशत्वं सुप्रसिद्धम्। विकलादेशो हि न वस्तु नाप्यवस्तु, अपितु वस्त्वंशः। यथा समुद्रैकदेशो न समुद्रो नाप्यसमुद्रः अपितु तस्यैकदेशः। तन्मात्रो यदि समुद्रः तर्हि शेषांशोऽसमुद्रः स्यात्, समुद्रबहुलता वा भवेत् तस्या समुद्रत्वे तु क्व समुद्रवाग्विज्ञानप्रवृत्तिः।

नयो द्विविधो द्रव्यार्थिकः पर्यायार्थिकश्चेति। द्रव्यार्थिकस्य त्रयो भेदाः–नैगमः संग्रहो व्यवहारश्चेति।

शब्दनयस्य गणना पर्यायार्थिकनये भवति। राजवार्तिककारैः उच्यते– शपत्यर्थमाह्वयति प्रत्याययतीति शब्दः। उच्चरितः शब्दः कृतसंगीतेः पुरुषस्य स्वाभिधेये प्रत्ययमादधाति इति शब्दः।[8] त्रयः शब्दनयाः 1. शब्दनयः 2. समभिरूढ़नयः 3. एवंभूतनयः इति। त्रयः शब्दनयाः शब्दप्रधानत्वात्। शब्दप्रधानत्वं च शब्दापेक्षयाऽर्थप्ररूपकत्वम्।

1. शब्दनयः–लिङ्गसंख्याकालादीनां भेदाच्छब्दस्य भेदकथनं शब्दनयः दाराः भार्या कलत्रमित्यत्र लिङ्गभेदात् त्रयाणां भिन्नत्वम्। जलमापो वर्षाऋतु इत्यादौ संख्याभिन्नत्वाद् भिन्नत्वम्। विश्वदृश्वाऽस्य पुत्रो जनिता भाविकृत्यमासीदित्यादौ कालभिन्नत्वाद् भिन्नत्वम्। पूज्यपादाचार्यानुसारेण लिङ्गसंख्यासाधनादिव्यभिचारनिवृत्तिपरः शब्दनयः। तत्र लिङ्गव्यभिचारः– पुष्यस्तारका नक्षत्रमिति। संख्याव्यभिचारः– जलमापः, वर्षा ऋतुः, आम्रवनम्, वरणा नगरमिति। साधनव्यभिचारः– सेना पर्वतमधिवसति। पुरुषव्यभिचारः– एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्ते पितेति। कालव्यभिचारः– विश्वदृश्वाऽस्य पुत्रो जनिता। भाविकृत्यमासीदिति। उपग्रहव्यभिचारः– संतिष्ठते प्रतिष्ठते विरमत्युपरमतीति। एवं प्रकारं व्यवहारमन्याय्यं मन्यते; अन्यार्थस्यान्यार्थेन संबन्धाभावात्।[9]

8. तत्त्वार्थराजवार्तिकम्, आचार्य-अकलंकदेवः, 1/33/8, पृ॰ 98, भारतीयज्ञानपीठम्, देहली।
9. सर्वार्थसिद्धिः, आचार्यपूज्यपादः, 1/33/246, पृ॰ 102, भारतीयज्ञानपीठम्, देहली।

2. समभिरूढ़ः–पर्यायभेदात्, पदार्थनानात्वनिरूपकः समभिरूढ़नय–शब्दभेदश्चेदस्ति अर्थभेदोऽपि अवश्यं भवितव्यम्, अन्यथा शब्दभेदस्य निरर्थकत्वं स्यात्। इन्दनादिन्द्रः, शकनाच्छक्रः, पूर्दारणात् पुरन्दरः इत्यादिषु शब्दभेदादर्थभेदोप्यस्त्येव। अथवा नानाऽर्थान्समतीत्यैकमर्थमाभिमुख्येन रूढः, समभिरूढः, यथा गोरित्ययं शब्दो यद्यपि वागाद्यनेकार्थेषु वर्तते तथापि पशुविशेषे रूढः। यथा सर्वार्थसिद्धिः टीकायां उक्तवन्तः आचार्याः 'नानार्थशमभिरोहणात्समभिरुढः। यतो नानार्थान्समतीत्यैकमर्थमाभिमुख्येन रूढः सभिरूढः। गौरित्ययं शब्दो वागादिष्वर्थेषु वर्तमानः पशावभिरूढः। अथवा अर्थगत्यर्थः शब्दप्रयोगः। तत्रैकस्यार्थस्यैकेन गतार्थत्वात्पर्याय–शब्दप्रयोगोऽनर्थकः। शब्दभेदश्चेदस्ति अर्थभेदेनाप्यवश्यं भवितव्यमिति। नानार्थसमभिरोहणात्समभिरूढः। इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरदर इत्येवं सर्वत्र। अथवा यो यत्राभिरूढः स तत्र समेत्याभिमुख्येनारोहणात्समभिरूढः। यथा क्व भवानास्ते? आत्मनीति। कुतः? वस्त्वन्तरे वृत्त्यभावात्। यद्यन्यस्यान्यत्र वृत्तिः स्यात् ज्ञानादीनां रूपादीनां चाकाशे वृत्तिः स्यात्।[10]

3. एवम्भूतः – क्रियाश्रयेण भेदप्ररूपणमेवम्भूतः एतन्नयापेक्षया स्वाभिधेय– क्रियापरिणतिक्षण एव स शब्दो युज्यते नान्यदा। यो यदेन्दति तदैवेन्द्रो नाभिषेचको न पूजकः। यदैव गच्छति तदैव गो न स्थितो न शयित इति। येनात्मना भूतस्तेनैवाध्यवसाययतीति एवंभूतः। स्वाभिप्रेतक्रियापरिणतिक्षणे एव स शब्दो युक्तो नान्यदेति। ....येनात्मना येन ज्ञानेन भूतः परिणतस्तेनैवाध्यवसाययति। यथेन्द्राग्निज्ञानपरिणत आत्मैवेन्द्रोऽग्निश्चेति।''

एते सर्वेऽपि नयाः पूर्वपूर्वमहाविषयाः उत्तरोत्तराल्पविषयाश्चेति। तथाहि नैगमनयात् संग्रहोऽल्पविषयः सन्मात्राऽहित्वात्तस्य। नैगमस्तु भावाभावविषयत्वाद् बहुविषयः। यथैव नैगमस्य भावे सङ्कल्पस्तथाऽभावेऽपि। व्यवहारः संग्रहादपि अल्पविषयः तद्भेदप्रभेदविषयत्वात्, संग्रहस्तु बहुविषयोऽभेदगोचरत्वाद्। ऋजुसूत्रस्ततोऽप्यल्पविषयो वर्तमानपर्यायमात्र–

---

10. तत्रैव, 1/33/247, पृ॰ 103

विषयत्वात्, व्यवहारस्तु त्रिकालविषयत्वाद् बहुविषयः। ऋजुसूत्रे लिङ्गादिभेदे सत्यपि नार्थभेदः स्वीक्रियतेऽतः शब्दनयस्तस्मादल्पविषयः। ऋजुसूत्रस्तु बहुविषयः।

पर्यायभेदेनाभिन्नमर्थं प्रतिपादयतः शब्दाद् बहुविषयात् समभिरूढः सूक्ष्मविषयः। स हि पर्यायभेदेन भिन्नमर्थं व्यनक्ति। क्रियाभेदेऽपि चाभिन्नमर्थं कथयतः समभिरूढान्नैवम्भूतो बहुविषयः तस्य ततोऽल्पविषयत्वात्। एते नया गुणप्रधानतया परस्परतन्त्राः सम्यग्दर्शनहेतवो भवन्ति। इत्यलम्।

11. तत्रैव, 1/33/248, पृ॰ 103-104

# जैनदर्शने शब्दप्रमाणम्

डॉ॰ कुलदीपकुमारः

नयप्रमाणयोराधारेण जैनन्यायः सुस्थितोऽस्ति। यथोच्यते – **'नयप्रमाणात्मको न्यायः'**। सर्वेषु दर्शनेषु प्रमाणानां विवेचनं न्यायान्तर्गतत्वेनोपलभ्यते। किन्तु जैनन्यायस्य इयं विशेषता यत् प्रमाणविवेचनेन सह नयस्यापि विवेचनं जैनन्याये एव समुपलभ्यते इति। न्यायशास्त्रस्य प्रमुखः विषयः प्रमाणविवेचनमित्यत्र सर्वेषां दार्शनिकानां नास्ति मतभेदः। जैनदर्शनेऽपि प्रमाणविवेचकाः शताधिकाः ग्रन्था उपलब्धाः सन्ति। प्रमाणं दार्शनिकजगतो महत्त्वपूर्णविषयोऽस्ति। मानवः सर्वदा ज्ञानप्राप्त्यर्थं यतते। ज्ञानप्राप्त्यर्थं यत्साधनं तत्प्रमाणमिति सर्वेषां दार्शनिकानामैकमत्यम्। तत्रापि यथार्थानुभवसाधनमेव प्रमाणम्।

प्रमाणशब्दस्य व्युत्पत्तिलभ्यार्थोऽस्ति, प्रमीयते येन तत्प्रमाणम्। तात्पर्यमस्ति यद् येन पदार्थानां ज्ञानं भवति तत् प्रमाणं कथ्यते। प्रमाणलक्षणञ्च विभिन्नदर्शनेषु भिन्नं भिन्नमस्ति। न्यायमते ज्ञानस्य करणमिन्द्रियार्थसन्निकर्षः। तस्मात् तस्य मते इन्द्रियसन्निकर्ष एव प्रमाणम्। मीमांसका ज्ञातृव्यापारमेव प्रमाणं स्वीकुर्वन्ति यतः तेनैव पदार्थानां ज्ञानं भवति। सांख्यदर्शने इन्द्रियवृत्तिरेव प्रमाणं मन्यन्ते। बौद्धाः निर्विकल्पकप्रत्यक्षज्ञानं प्रमाणं स्वीकुर्वन्ति। जरन्नैयायिकजयन्तभट्टाः कारकसाकल्यमेव प्रमाणं निगद्यन्ते। चार्वाकाः केवलं प्रत्यक्षमेव प्रमाणं प्रचक्षन्ते।

जैनदर्शने तु सम्यक्ज्ञानमेव प्रमाणमिति स्वीक्रियते। यथा – **'सम्यग्ज्ञानं प्रमाणम्।'**[1] मतमिदम् आचार्योस्वामिभिः प्रतिष्ठापितमिति प्रतीयते। तत्त्वार्थसूत्रग्रन्थे प्रतिपादितं यत् – **'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्।**

---

1. न्यायदीपिका, आचार्य अभिनवधर्मभूषणयतिः, 1/8

**तत् प्रमाणे। आद्ये परोक्षम्। प्रत्यक्षमन्यत्**'[2] इति। तथा च मति-श्रुत-अवधि -मनःपर्यय-केवलज्ञानं चैतानि पञ्चज्ञानानि सन्ति। तत्र आद्यज्ञानद्वयं मनसः साहाय्येन भवतीति परोक्षं प्रमाणम्। अवशिष्टं त्रयं तु ज्ञानम् आत्मनः सहयोगेन भवतीति प्रत्यक्षं तत्। एवं प्रतीयते यत् जैनग्रन्थेषु स्वतन्त्ररूपेण प्रमाणलक्षणं आचार्यसमन्तभद्रेण प्रतिपादितम्। यथा –

**तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम्।**
**क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतम्।।**[3]

तेषां मतानुसारेण तत्त्वस्य यथार्थज्ञानमेव प्रमाणमस्ति। तत्त्वस्य यथार्थज्ञानं तेषामनुसारेण स्याद्वादनयसंस्कृतमस्ति। अस्मिन् विषये रत्नकरण्डश्रावकाचारग्रन्थेऽपि आचार्यैः उल्लिखितं यत् –

**अन्यूनमनतिरिक्तं याथातथ्यं विना च विपरीतात्।**
**निःसन्देहं वेद यदाहुस्तज्ज्ञानमागमिनः।।**[4]

तत्पश्चादाचार्यवरेण सिद्धसेनेन स्वकीये ग्रन्थे प्रमाणलक्षणे 'बाध वर्जितमिति' पदं योजयित्वा प्रमाणस्य लक्षणमेतत्कृतम् – **'प्रमाणं स्वपराव-भासि ज्ञानं बाधवर्जितम्।**[5] अत्र स्वावभासिज्ञानस्वज्ञानम्। परावभासिज्ञानं पराभासिज्ञानं यत् पदार्थविषयकम्। संशयविपर्ययानध्यवसायरहितं ज्ञानं बाध विवर्जितम्।

तदनन्तरमाचार्यवरेण अकलङ्कदेवेन प्रमाणलक्षणे अविसंवाद्यनधि गतार्थग्राह्यौ पदौ योजयित्वा प्रमाणस्वरूपं सुष्ठुरूपेण सुसंस्कृतं कृतम् –**'प्रमाणमविसंवादिज्ञानमनधिगमलक्षणत्वात्।'** अर्थात् अविसंवादि अर्थस्य अनधिगतार्थस्य च ज्ञानम् एव प्रमाणम्। एकवारं ज्ञातवान् पुनः तस्य ज्ञानं करोति, तद् प्रमाणं नास्ति, अज्ञातार्थस्य ज्ञानं प्रमाणम्। एतेन प्रकारेण जैनदर्शने प्रमाणस्य अनेकाः परिभाषा उपलब्धाः भवन्ति, किन्तु जैनदर्शने प्रमाणस्यातिप्रसिद्धरूपं माणिक्यनन्दिरचिते परीक्षामुखसूत्रनामके जैनन्यायस्य

2. तत्त्वार्थसूत्र, आचार्योमास्वामी, अध्याय-1, सूत्र- 9-12
3. आप्तमीमांसा, कारिका-101
4. रत्नकरण्डकश्रावकाचारः, श्लोक 42
5. अष्टशती, पृ. 174

अतिमहत्त्वपूर्णे ग्रन्थे लिखितमस्ति- **'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्।**[6]

प्रमाणलक्षणमिव प्रमाणसंख्याविषयेऽपि विभिन्नदार्शनिकानां मत-भेदोऽस्ति। यथा चार्वाकदर्शने एकमेव प्रमाणम् – प्रत्यक्षप्रमाणम्। सांख्यदर्शने त्रीणि प्रमाणानि स्वीकृतानि – प्रत्यक्षम्, अनुमानम्, आगमश्चेति। बौद्धदर्शने प्रमाणद्वयमङ्गीकृतम् – प्रत्यक्षम्, अनुमानञ्च। वैशेषिकदर्शनेऽपि प्रमाणद्वयमेव स्वीकृतम् – प्रत्यक्षम्, अनुमानञ्च। न्यायदर्शने चत्वारि प्रमाणानि स्वीकृतानि – प्रत्यक्षम्, अनुमानम्, आगमः, उपमानञ्चेति। मीमांसादर्शने प्रभाकरमते पञ्चप्रमाणानि वर्तन्ते–प्रत्यक्षम्, अनुमानम्, आगमः, उपमानम्, अर्थापत्तिश्चेति। भाट्टमते षड्प्रमाणानि स्वीकृतानि – प्रत्यक्षम् अनुमानम्, आगमः, उपमानम्, अर्थापत्तिः, अभावश्चेति। पुराणेषु नवप्रमाणानि अङ्गीकृतानि – प्रत्यक्षम्, अनुमानम्, आगमः, उपमानम्, अर्थापत्तिः, अभावः, सम्भवः, एतिह्यं, प्रातिभश्चेति। जैनदर्शनानुसारं तु प्रमाणं द्विविधम् – प्रत्यक्षम्, परोक्षञ्चेति। न्यायदीपिकायां प्रत्यक्षप्रमाणस्य लक्षणम् – **'विशदप्रतिभासं प्रत्यक्षम्'**[7] इति निरूपितम्। विशदं स्पष्टम्। तदुक्तं परीक्षामुखसूत्रे– **'प्रतीत्यन्तराव्यवध ानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम्'** इति।

इतः पर्यन्तं मया प्रत्यक्षप्रमाणं निरूपितम्। इतश्च परोक्षप्रमाणं निरूप्यते। यतोहि मम शोधालेखस्य प्रमुखविषयः परोक्षप्रमाणान्तर्गते आगमप्रमाणं (शब्दः) वर्तते।

**'अविशदप्रतिभासं परोक्षम्'**[9] अर्थात् अविशदं ज्ञानं परोक्षप्रमाणं भवति। अस्य परोक्षज्ञानस्य पञ्चभेदाः सन्ति – स्मृतिः, प्रत्यभिज्ञानं, तर्कः, अनुमानमागमश्चेति। यथोक्तम् – **'प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानु-मानागमभेदम्'।**[10]

तेषां सर्वदा काचित् सापेक्षता वर्तते। यथा स्मृतिं प्रति प्राक्तनानुभवः

---

6. परीक्षामुखसूत्रम्, अध्याय-1, सूत्र-1
7. परीक्षामुखसूत्रम्, 2/3, न्यायदीपिका- 2/1
8. परीक्षामुखसूत्रम् – 2/4
9. न्यायदीपिका, पृ. 130
10. परीक्षमुखसूत्रम्, 3/2

कारणं प्रत्यभिज्ञानं प्रति स्मृतिः अनुभवश्च, तर्कं प्रति अनुभवस्मृतिप्रत्यभिज्ञानानि, अनुमानं प्रति लिङ्गदर्शनव्याप्तिग्रहणादि, आगमं प्रति शब्दश्रवणसङ्केतग्रहणादि च कारणम्। अतः प्रत्ययान्तरसापेक्षत्वात् एतेषां परोक्षत्वसंज्ञा। प्रत्ययान्तरनिरपेक्षत्वात् च तद् इतरस्य प्रत्यक्षत्वसंज्ञा।

## आगमप्रमाणम्

परोक्षप्रमाणस्यान्तिमो भेदः आगमप्रमाणं वर्तते। जैनागमपरम्परायामस्य प्राचीन नामं श्रुतं वर्तते। यथा जैनागमपरम्परायाः मतिज्ञानं जैनतार्किकपरम्परायां सांव्यवहारिकप्रत्यक्षनाम्नाऽभिहितमभवत् तथैव श्रुतमपि आगमनाम्ना अभिहितमभवत्। एवं तु जैनागमः श्रुतप्रमाणं वा दर्शनान्तराणां शब्दप्रमाणस्यैव स्थानापन्नं वर्तते। आगमः श्रुतज्ञानं शब्दज्ञानं वा विलसति। उपचारेण आप्तवचनं द्रव्यश्रुतं वा आगमः कथ्यते किन्तु निश्चयेन आगमः तत् ज्ञानमस्ति यत् श्रोतारं पाठकं वा आप्तस्य मौखिकवाण्या लिखितवाण्या वा भवति।

जैनदर्शने श्रुतज्ञानस्य क्षेत्रमतीव व्यापकमस्ति। एतत् सर्वम् असर्वज्ञप्राणिसु यत् ज्ञानं भवति वाच्यवाचकसम्बन्धात्मकं ज्ञानमस्ति, यत् शब्दसङ्केतादिभिः माध्यमैः भवति। अन्यदर्शनेषु परिगणितम् आगमप्रमाणं शब्दप्रमाणं वा एतस्यैकः अवयवः वक्तुं शक्यते।

चार्वाकदर्शनानुसारं कोऽपि आप्तः नास्ति, अवञ्चकः नास्ति अतः कस्यापि वचनं प्रमाणं नास्ति। वैशेषिकदर्शनानुसारं बौद्धदर्शनानुसारञ्च शब्दप्रमाणम् अनुमानस्यैव रूपमस्ति। जैनदर्शने एते द्वे मते न स्वीकृते। पूर्वाभ्यासस्थितौ शब्दज्ञानव्याप्तिः निरपेक्षा भवति। तम् ऊहापोहस्यावश्यकता न भवति। एवमेव शब्दज्ञानाय अप्यस्ति। शब्दमाकर्ण्य एव तस्यार्थावगम्यते। तं घटशब्दं श्रुत्वा घटशब्दे घटपदार्थे च व्याप्तिसम्बन्धयोजनस्यावश्यकता न भवति अतः शब्दः स्वतन्त्रप्रमाणमस्ति, अनुमानाधीनं नास्ति। शब्दं श्रुत्वा यदि अर्थावबोधः न भवेत्, तदर्थं व्याप्तेः साहाय्यं स्वीकरणं भवेत् तर्हि शब्दप्रमाणं कथनमेव नोचितं वस्तुतः तत्तु अनुमानप्रमाणमेव वर्तते। एवं प्रकारेण व्याप्तिनिरपेक्षे सति आगमप्रमाणम् अनुमानान्तर्गते नैव गणयितुं शक्यते। जैनदर्शनानुसारम् आगमः पौरुषेयः आप्तप्रणीतश्च भवति। आप्तः द्विविधः 1. लौकिकः, 2. लोकोत्तरः।

लौकिकदृष्ट्या यः यस्मिन् समये यस्य विषयस्य यथार्थज्ञानं एवञ्च यथार्थवक्ता भवति स आप्तोऽस्ति। तस्य वचनं लौकिकः आगमः वर्तते। लोकोत्तरविषयाः – आत्मनः कर्मणः पुनर्जन्मनः यथार्थज्ञाता तथा च यथार्थवादीमहापुरुषः लोकोत्तराप्तः कथ्यते। तेन प्रतिपादिताः सत्यं लोकोत्तरागमस्य विषयाः सन्ति। वस्तुतः जैनदृष्ट्या पुस्तकं, ग्रन्थः चेत्यादयः तस्य ज्ञानस्य साधनत्वात् उपचारेण आगमः वर्तते, प्रधानागमः तु स्वयमाप्त एव वर्तते। अत आगमः पुरुषोऽस्ति ग्रन्थः नैव। येषु ग्रन्थेषु प्रत्यक्षं युक्तिः तर्कश्च न चलितुं शक्यन्ते, तेषु परोक्षेषु अहेतुगम्यविषयेषु च केवलम् आगम एव ज्ञानस्य साधनमस्ति। अतः आगमप्रमाणं न स्वीकर्तारः दार्शनिकाः प्रस्थानां समक्षे विषयान् ज्ञातुं कोऽपि आधारः नास्ति। एवं प्रकारेण परोक्षप्रमाणस्य स्मृतिः, प्रत्यभिज्ञानं, तर्कः, अनुमानम्, आगमश्च एते पञ्चभेदाः सन्ति। एतेषु परोक्षसामान्यस्य लक्षणम् – 'अविशदत्वम्'। समानरूपेण प्राप्यते। अतः अवान्तरसामग्र्यां भिन्ने सत्यपि एतानि सर्वाण्यपि परोक्षप्रमाणान्तर्गते समागच्छन्ति।

आप्तवचनात् उत्पद्यमानं ज्ञानमागम इति कथ्यते। यथोक्तम् – **'आप्तवचनादिनिबन्धनमर्थानामागमः'**। अत्र प्रश्न उदेति यत् क आप्तः? किञ्च तस्य स्वरूपम्? अस्मिन् प्रसङ्गे जैनाचार्यैः सम्यक्तया प्रतिपादितम् – यो यत्रावञ्चकः सः तत्राप्तः, यो यत्र अविसंवादकः स तत्राप्तः।[12] आप्तः शङ्कारहितः। शङ्का हि सकलमोहरागद्वेषादयः। आप्तवचनादिभिः यदर्थज्ञानं भवति तस्यैव नाम आगमः कथितः। अत्र आदिशब्देन हस्तसङ्केतादीनां ग्रहणं भवति।[13] यथा आदिशब्देन हस्तसंज्ञादिपरिग्रहः।

**आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम्।**
**तत्त्वोपदेशकृत्सार्वं शास्त्रं कापथघट्टनम्॥**
**आप्तेनोत्सन्नदोषेण सर्वज्ञेनागमेशिना।**
**भवितव्यं नियोगेन नान्यथा ह्याप्तता भवेत्॥**[14]

---

11. परीक्षमुखसूत्रम्, 3/95
12. प्रमेयरत्नमाला, 3/95, अष्टशती, 78
13. प्रमेयकमलमार्तण्ड, 3/99
14. रत्नकरण्डश्रावकाचारः, समन्तभद्रः, श्लो. 9 एवं 5

यः वीतरागी अर्थाद् मोहरागद्वेषादिभिः रहितः सर्वज्ञः परमहितोपदेशकश्च विलसति स एव आप्तः। आप्तपदप्रयोगः अत्र अत्यन्तावश्यकः वर्तते यतोहि आप्तवचनैः यदर्थज्ञानं भवति तस्य नाम आगमः। केनापि पुरुषेण उत वा सुप्त–उन्मत्तादिपुरुषवचनैः यदर्थज्ञानं भवति तद् अप्रामाणिके सति आगमः नैव कथयितुं शक्यते। यथा – **'वाक्यनिबन्धनमर्थज्ञानमित्युच्यमानेऽपि यादृच्छिकसंवादिषु विप्रलम्भवाक्यजन्येषु सुप्तोन्मत्तादिवाक्यजन्येषु वा नदीतीरफलसंसर्गादिज्ञानेष्वतिव्याप्तिः अत उक्तमाप्तेति।'**[15] अत्र प्रश्न उदेति यत् आप्तवचनानि आगमः नैव वक्तुं शक्यते। वक्तुमपि शक्यते उच्यतेऽपि च परन्तु तत् कारणे कार्यस्य उपचारं कृत्वा एव अवगन्तव्यम्, यथा – **'शब्दो हि प्रमाणकारणकार्यत्वादुपचारत एव प्रमाणव्यपदेशमर्हति'**[16] परमार्थेन तु आगमः वचनरूपो नास्ति, ज्ञानरूपः एव वर्तते अतः आगमस्य सम्पूर्णं समीचीनं लक्षणम् इदमेव स्वीकरणीयं यत् आप्तवचनादिभिः यदर्थज्ञानं भवति, स एव आगमः वर्तते।

जैनदर्शने शब्दः पुद्गलस्य पर्यायः रूपान्तरं वा स्वीकृतम्। शब्दस्योत्पत्तिः स्कन्धात् भवति। परमाणूनां बन्धः स्कन्धः कथ्यते। स्कन्धेषु परस्परसंघर्षणे शब्दस्योत्पत्तिर्पार्यते। यतो हि लोकेऽस्मिन् पुद्गलरूपातिसूक्ष्ममव्याहतशब्दवर्गणानां सर्वत्र सद्भावो विद्यते। अस्मिन् सन्दर्भे कुन्दकुन्दाचार्येणोक्तम् –

**सद्दो खंधप्पभवो खंधो परमाणुसंगसंघादो।**
**पुट्ठेसु तेसु जायदि सद्दो उप्पादिगो णियदो।।**[17]

अर्थात् बाह्यश्रवणेन्द्रियावलम्बितो भावेन्द्रियपरिच्छेद्यो ध्वनिशब्दः। स खलु स्वरूपेणानन्तरपरमाणूनामेकस्कन्धो नाम पर्यायः। बहिरङ्गसाधनीभूतमहास्कन्धेभ्यः तथाविधपरिणामेन समुत्पद्यमानत्वात् स्कन्धप्रभवः, यतो हि परस्पराभिहतेषु महास्कन्धेषु शब्दः उपजायते। किं च स्वभावनिर्वृत्ताभिरेवानन्तपरमाणुमयीभिः शब्दयोग्यवर्गणाभिरन्योन्यमनुप्रविश्य समंततोऽभिव्याप्य

15. न्यायदीपिका, 3/73
16. प्रमेयकमलमार्तण्ड, 3/99
17. पञ्चास्तिकायः, गाथा–79

पूरितेऽपि सकले लोके यत्र-यत्र बहिरङ्गकारणसामग्री समुदेति तत्र-तत्र ताः शब्दत्वेन स्वयं व्यपरिणमत इति शब्दस्य नियतमुत्पाद्यत्वात् स्कन्ध प्रभवत्वमिति। अनया गाथया स्पष्टं भवति यत् शब्दः पुद्गलस्य पर्यायो वर्तते, अत एव पुद्गलस्वरूपः भवति शब्दस्योत्पत्तिः स्कन्धानां परस्परसंघर्षणाद् भवति। तत्त्वार्थसूत्रे उमास्वामिनाप्युक्तम् - **'स्पर्शरसगन्धवर्णवन्तः पुद्गलाः, शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाऽऽतपोद्द्योतवन्तश्च'**[18] इति।

जैनदर्शने शब्दो न वैशेषिकमतवद् गुणः, अपि तु पुद्गलपरिणामः निमित्तभेदाद् अनेकभेदवन्तः। यथा भाषाततविततघनशुषिरसंघर्षादिभेदेन अनेके शब्दाः सन्ति। ततः मृदङ्गादेः शब्दः, विततः वीणादिशब्दः। घनः घण्टादिनादः। संघर्षः काष्ठादिसंयोगविभागजः। एवञ्च शब्दः परमाणु-परिणामो द्रव्यमेव। पुद्गलाः **'अणवः स्कन्धाश्च'**[19] इति द्विभेदाः। स्कन्धपुद्गलोः द्रव्यमेव समुदायरूप इति।

तत्र पुद्गलश्चतुर्विधो भवति रूप-रस-गन्ध-स्पर्शभेदात्। यथोक्तम् - **'स्पर्शरसगन्धवर्णवन्तः पुद्गलाः'**। शब्दः स्पर्शगुणस्य विकारादुत्पद्यते। पुद्गलरूपभाषावर्गणा तु पौद्गलिकासु भाषावर्गणासु पुद्गलस्य रूपादि-चत्वारोऽपि गुणाः भवन्त्येव, तथापि स्पर्शगुणस्य परिवर्तनात् शब्दोत्पत्तिर्जायते। इदमेव कारणं यत् शब्दः कर्णेन्द्रियेण सह स्पर्शे सति अर्थबोधस्य कारणं भवति।

जैनदर्शने विभिन्नदार्शनिकविचाराणां समीक्षणानन्तरं शब्दस्य नित्यानित्यात्मकत्वमङ्गीकृतम्। यतो हि जैनदर्शने चिन्तनस्य द्वे पद्धती वर्तेते-द्रव्यार्थिका द्रव्यदृष्टिर्वा, पर्यायार्थिका पर्यायदृष्टिर्वा। द्रव्यदृष्ट्या शब्दः कथञ्चित् नित्यो भवति, यतोहि द्रव्यरूपशब्दः सर्वदैव तिष्ठति। पर्यायदृष्ट्या शब्दः कथञ्चित् अनित्यो भवति, यतोहि शब्दोच्चारणे सति अथवा शब्दोच्चारणानन्तरं नष्टो भवति।

18. तत्त्वार्थसूत्रम्, 5/23-24
19. तत्त्वार्थसूत्रम्, 5/25

जैनदार्शनिकैः अर्थे वाच्यरूपा शब्दे च वाचकरूपा एका स्वाभाविक-योग्यता स्वीकृता। अनया सहजयोग्यतया सङ्केतवशात् शब्दो यथार्थं प्रतिपादयति – **'सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः।'**[20]

जैनदार्शनिकाः शब्दार्थयोः तादात्म्यसम्बन्धं नाङ्गीकुर्वन्ति। दर्शनेऽस्मिन् सम्बन्धोऽयं स्वाभाविकः तथा च कथञ्चिद् नित्यानित्यात्मकः अङ्गीकृतः। अनयोः प्रतिपाद्य-प्रतिपादक-शक्तिर्विद्यते। अस्मिन् प्रसङ्गे प्रभाचन्द्रादिजैन-दार्शनिकैः नित्यसम्बन्धस्य, अनित्यसम्बन्धस्य, सम्बन्धाभावस्य च गम्भीरं समीक्षणं कृतम्।

इत्थं जैनदर्शने शब्दस्य महत्त्वपूर्णं स्थानं वर्तते। यतो हि शब्देन विना प्रमाज्ञानं न भवितुं शक्नोति तथा प्रमां विना सर्वज्ञवचनानामप्रामाण्यप्रसङ्गः तथा सर्वज्ञवचनानामप्रामाण्याद् आगमस्याप्रामाण्यं तिष्ठति।

---

20. परीक्षामुखसूत्रम्, 3/96

# न्यायदर्शने शब्दस्वरूपविचारः

डॉ. महानन्दझाः

योऽर्थः श्रोत्रग्राह्यो भवति सः शब्दः। सोऽयं शब्दः द्विप्रकारको भवति– ध्वन्यात्मको वर्णात्मकश्च। वर्णात्मकश्चापि शब्दो द्विप्रकारको भवति–सार्थको निरर्थकश्च।

तत्र सार्थकाः शब्दाः संज्ञा–सर्वनाम क्रिया–विशेषणादिकानां भेदात् अनेकप्रकारकाः भवन्ति। एतेषु सार्थकेषु शब्देषु अर्थविशेषस्य प्रकाशिका शक्तिर्भवति। यथा–अश्व इति शब्दोच्चारणेन पशुविशेषस्य ज्ञानं भवति। गमनम् इति कथनेन क्रियाविशेषस्य च ज्ञानं भवति।

शब्देषु अर्थप्रकाशिका शक्तिः कुत आयाति? मीमांसकमतानुसारेण सेयं शब्दस्य शक्तिर्नैसर्गिकी नित्या च। किन्तु नैयायिकमतानुसारेण तु शब्दाः इच्छाकृतसंकेतमात्रास्सन्ति। सा चेच्छा ईश्वरस्याथवा मनुष्यस्य भवति।

## संकेतस्य भेदद्वयम्–

संकेतो हि द्विप्रकारको भवति–आजानिकः आधुनिकश्च। अज्ञातकालतः प्रवर्तमानः संकेतः आजानिक इत्यभिधीयते। यथा घटशब्दस्य कम्बुग्रीवादिमति व्यक्तौ प्रयोगः कस्मात् कालात् प्रारब्धोऽभूदिति कश्चनापि नहि जानाति।

कस्यचन पुरुषस्येच्छामात्रेण प्रवर्तमानः संकेतः आधुनिक इति कथ्यते। यथा रमेश इति पदस्य व्यक्तिविशेषे संकेतः।

## पदम्–

नैयायिकमतानुसारेण शक्तिमान् शब्द एव पदमित्यभिधीयते। यस्मिन् शब्देऽर्थविशेषस्य द्योतनस्य शक्तिर्भवति स एव शब्दः पदमित्यभिधीयते।

अत्रायं प्रश्नोदेति यत् पदं कीदृशमर्थं बोधयति–(1) व्यक्तिविशेषम् (2) जातिविशेषम्, (3) अथवा आकृतिविशेषम्?

न्यायदर्शनानुसारेण एतासां व्यक्त्याकृतिजातीनां स्वरूपं निम्नप्रकारक-मस्ति–

**"व्यक्तिर्गुणविशेषाश्रयो मूर्तिः।**

गुणाश्रयं मूर्तिवद् द्रव्यमेव व्यक्तिरित्यभिहितं भवतीत्यर्थः।

**"समानप्रसवात्मिका जातिः।[1]"**

भिन्नासु व्यक्तिषु विद्यमानापि समानैव प्रतीयते सा जातिरिति कथ्यते इति भावः। यथा सर्वेषु घटेषु समानरूपेण विद्यमाना घटत्वजातिः।

**"आकृतिर्जातिलिङ्गाख्या।[2]"**

गौतममतानुसारेण शब्दः जात्याकृतिविशिष्टं व्यक्तिं बोधयति। तथा च न्यायसूत्रम्–

**"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः[3]।"**

अतएवाह गौतमः स्पष्टरूपेण–

**"व्यक्त्याकृतिजातयस्तु पदार्थः[4]।"**

इत्ययमेव नैयायिकानां सिद्धान्तः।

**अवयवार्थसमुदायार्थयोः विवेचनम्–**

नैयायिकमतानुसारेण केचन शब्दास्तथाविधाः भवन्ति येषां व्युत्पत्तिलभ्योऽर्थो भवति। यथा पाचकः पाकस्य कर्त्तेत्यर्थः अस्य शब्दस्य

---

1. न्या. सू. 2/2/68
2. तदेव 2/2/67।
3. तदेव 2/2/63।
4. न्या. सू. 2/2/65

शक्तिः धात्ववयवोरुभयोरधीना वर्तते। अतएवायमवयवार्थमित्यभिधीयते।

केचन शब्दास्तथाविधाः भवन्ति येषामर्थाः व्युत्पत्तिलभ्या नहि स्वीक्रियन्ते। तेषां शब्दानां तु समुदायार्थ एव गृह्यते। गौरिति शब्दः। गम् धातोः डोस् प्रत्यये कृते सति गौ शब्दो व्युत्पद्यते-गच्छतीति गौः इत्यस्मिन् अर्थे। अस्यामवस्थायां गमनकर्तारः सर्वेऽपि जीवाः गौरिति शब्देनाभिधीयेरन्। गौरपि स्वयं स्वापवेलायामगौः स्यादिति गौशब्दस्य व्युत्पत्तिलभ्योऽर्थो न स्वीक्रियते। अपि तु गौः इति वर्णसमुदायस्य गोत्वावच्छिन्न व्यक्तिरूपोऽर्थः स्वीक्रियते।

**पदानां भेदाः–**

नैयायिकाः पदानां भेदत्रयं स्वीकुर्वन्ति (1) रूढपदम्, (2) यौगिकपदम्, (3) योगरूढपदञ्चेति।

**(1) रूढपदम्–**

यस्य पदस्य प्रवृत्तिः व्युत्पत्त्यनुकूला नहि भवति तत् रूढपदं भवति। यथा–घट-पट-जलादिकाः शब्दाः।

**(2) यौगिकपदम्–**

यस्य पदस्य प्रवृत्तिः व्युत्पत्त्यनुकूला भवति तत् पदं यौगिकमित्यभिधीयते। यथा–दाता। दा धातोः कर्तरि तृचि प्रत्यये कृते दातेति पदं व्युत्पद्यते दानकर्तरि अर्थे।

**(3) योगरूढपदम्–**

यस्य पदस्य कस्यचनांशो व्युत्पत्तिलभ्यः कस्यचनांशश्च समुदायलभ्यः स्वीक्रियते तत् पदं योगरूढमित्यभिधीयते। यथा-पङ्कजम्। पङ्कात्–कर्दमात् जायते–उत्पद्यते इति व्युत्पत्तिलभ्यानुसारेणार्थो भवति। किन्तु पङ्काज्जायमानेषु–कमल–सैवाल–जलौकादिषुपङ्कजमितिपदं कमले एव रूढमिति पङ्कजपदस्य योगरूढत्वं सिद्धं भवति।

**वाक्यम्–**

आकांक्षायोग्यताऽसत्तियुक्तानां पदानां समूह एव वाक्यमित्यभिधीयते। तथा चोक्तमपि–"वाक्यं पदसमूहः[5]" इति। पदसमूहे वाक्यत्वव्यवहाराय त्रीणि वस्तून्यपेक्षितानि भवन्ति–आकांक्षायोग्यतासन्निधिनामानि।

**(1) आकाङ्क्षा–**

वाक्ये कस्यचन पदस्यापरस्य पदस्यापेक्षा भवति। सैवापेक्षाकांक्षेत्य-भिधीयते। यथा–"गौश्चरति इति वाक्ये" गौरिति पदस्याकांक्षा वर्तते। तस्या आकांक्षायाः पूर्तिः चरतीति पदेन भवति अत इदं वाक्यम्। आकांक्षायाः स्वरूपं निरूपयता तर्कसंग्रहकारेणाभिहितम्–

पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् आकांक्षा[6]।" इति। तथा च भाषापरिच्छेदनामके ग्रन्थेऽभिहितम्–

**यत्पदेन विना यस्याननुभावकता भवेत्।**

**आकांक्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्[7]॥**

**(2) योग्यता–**

वाक्यसमूहस्य वाक्यत्वाय पदानां योग्यता द्वितीया अपेक्षिता विशेषता भवति। यथा–अग्निना सिञ्चति इति समूहः। अग्निस्तु दहनक्रियाकर्मण्येव क्षमः न तु सेचनक्रियायां करणतास्वीकाराभावात्, अस्मिन् पदसमूहे योग्यताया अभावः। योग्यतायाः स्वरूपम्–"अर्थाबाधो योग्यता[8]" इत्याह तर्कसंग्रहकारः।

**(3) आसत्तिः–**

वाक्यस्थानां पदानामासत्तिरप्यावश्यकी भवति। पदानामविलम्बे-नोच्चारणमेव सन्निधिरित्यभिधीयते। पदानामुच्चारणे व्यवधानं मा भूत्। इयं पदानामव्यवहितासत्तिरेव शाब्दबोधस्य साधनम्। तथा चोक्तम्–"यत्पदार्थस्य

---

5. तर्कसंग्रहे।
6. तर्कसंग्रहः
7. तदेव
8. तर्कसंग्रहः।

यत्पदार्थेनान्वयोऽपेक्षितः तयोरव्यवधानेनोपस्थितिः कारणम्[9]" इति।

## (4) तात्पर्यम्–

नव्याः नैयायिकाः शाब्दबोधाय तात्पर्यबोधस्याप्यनिवार्यतां स्वीकुर्वन्ति। वक्ता केनाऽभिप्रायेण कस्य शब्दस्य प्रयोगं करोतीति ज्ञानमावश्यकं भवति। भोजनावसरे "सैन्धवमानय" इति वाक्यस्य लवणमानय इति वक्तुरभिप्रायो भवितुमर्हति, किन्तु युद्धे गमनवेलायां तस्य वाक्यस्याश्वमानयेति अभिप्रायो भवितुमर्हति।

## शब्दस्य शक्तिः–

नैयायिकाः शब्दस्य शक्तिद्वयी स्वीकुर्वन्ति–अभिधाशक्तिः–लक्षणाशक्तिश्च। शब्दस्य यो हि मुख्योऽर्थो भवति सः शब्दस्याभिधया शक्त्या प्रकाश्यते। शक्तिज्ञानस्य साधनानां निर्देशं कुर्वद्भिराचार्यैरभिहितम्–

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**

**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः[10]।"**

शब्दस्य यया वृत्त्या मुख्यार्थोनुपपत्तौ प्रयोजनवशात् मुख्यार्थेन सम्बन्धः मुख्यार्थव्यतिरिक्तश्चार्थो ज्ञायते सेऽयं शब्दस्य लक्षणा अथवा गौणी शक्तिर्भवति। यथा–गङ्गायां घोषः, "अग्निरयं माणवकः।" इत्यादौ गङ्गापदं गङ्गातटरूपम्, अग्निपदञ्च तेजस्वितासम्पन्नम् इत्यादिकं अर्थं बोधयति।

लक्षणेयं द्विप्रकारवती भवति–जहल्लक्षणा अजहल्लक्षणा च। यत्र शब्दः स्वमुख्यार्थं जहाति तत्र जहल्लक्षणा भवति। यत्र च शब्दः मुख्यार्थं स्वम् अपरित्यज्य अन्यार्थमप्युपादत्ते तत्राजहल्लक्षणा भवति। तद्यथा–"कुन्ताः प्रविशन्ति" अस्य वाक्यस्य कुन्तशब्दः लक्षणया शक्त्या वाक्येऽन्वयसिद्धये कुन्तधारिणं पुरुषमाक्षिपति।

---

9. न्या. सि. मु.।
10. न्या. सि. मु.।

**शब्दस्य प्रमाणता–**

नैयायिकाः शब्दनामकं स्वतन्त्रं प्रमाणं स्वीकुर्वन्ति। सर्वे शब्दाः यस्मात् प्रमाणं नहि भवितुमर्हन्ति अतएव शब्दप्रमाणं लक्षयन् महर्षिः गौतमः प्रावोचत्–"आप्तोपदेशः शब्दः[11]" इति। अस्य सूत्रस्य भाष्ये अभिहितम्–

"आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः उपदेष्टा। साक्षात्करणमर्थस्याप्तिः तया प्रवर्तते इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्।[12]"

अन्नम्भट्टानुसारेण तु–

**"आप्तस्तु यथार्थवक्ता[13]।"**

**शब्दप्रमाणस्य भेदद्वयम्–**

शब्दप्रमाणं द्विविधं भवति–दृष्टार्थमदृष्टार्थञ्च। यस्य शब्दस्योपलब्धिरस्मिन् लोके भवति तत् शब्दप्रमाणं दृष्टार्थं भवति।

यस्य च शब्दप्रमाणस्य सम्बन्धः पारलौकिकेन विषयेण सह भवति तत् शब्दप्रमाणं पारलौकिकं भवति। वैदिकानां वाक्यानामर्थाः पारलौकिकाः सन्ति। अत एव वैदिकानि वाक्यानि अलौकिकशब्दप्रमाणानि सन्ति। गौतमेनाभिहितं यत् येन प्रकारेण मन्त्रशास्त्रस्य आयुर्वेदशास्त्रस्य च वाक्यानि प्रामाणिकानि सन्ति तेनैव प्रकारेण वेदानामपि वाक्यानि प्रमाणभूतानि सन्तीति। तथा सूत्रम्–

**"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्[14]"** इति।

---

11. न्या. सू. 1/1/7।
12. न्या. सू. भा. 1/1/7।
13. तर्कसंग्रहः।
14. न्या. सू. 2/1/69।

**वैदिकवाक्यानि–**

वैदिकानि वाक्यानि त्रिप्रकारकाणि भवन्ति (1) विधिवाक्यम्, (2) अर्थवादवाक्यम्, (3) अनुवादवाक्यम्।

**(1) विधिवाक्यानि–**

वेदानामाज्ञासूचकानि वाक्यानि विधिवाक्यशब्देनाभिधीयन्ते। यथा–**"स्वर्गकामोऽश्वमेधेन यजेत।"**

**(2) अर्थवादवाक्यानि–**

इमानि वाक्यानि वर्णनात्मकानि भवन्ति। अर्थवादवाक्यानां चत्वारो भेदाः भवन्ति–

**(क) स्तुतिवाक्यानि–**

एतादृशानि वाक्यानि विहितानां कर्मणां फलानि बोधयित्वा तेषां कर्मणां प्रशंसां कुर्वन्ति।

**(ख) निन्दावाक्यानि–**

वेदप्रतिषिद्धानां वाक्यानां दुष्परिणामं बोधयित्वेमानि वाक्यानि तेषां कर्मणां निन्दां कुर्वन्ति।

**(ग) प्रकृतिवाक्यानि–**

मनुष्यकृतेषु कर्मसु विरोधं प्रदर्शयन्ति एतादृशानि वाक्यानि।

**(घ) पुराकल्पवाक्यानि–**

एतादृशानि वाक्यानि ऐतिहासिकमथवा परम्पराप्राप्तमर्थंबोधयन्ति।

**(3) अनुवाद वाक्यानि–**

एतादृशानि वाक्यानि पूर्वं प्रोक्तस्यार्थस्य अनुवादं कुर्वन्ति। अनुवादवाक्यान्यपि द्वेधा भवन्ति। अर्थानुवादवाक्यानि, शब्दानुवादवाक्यानि।

(क) अर्थानुवादवाक्यानि–पूर्वमुक्तस्यार्थस्य अर्थतोऽनुवादं कुर्वन्ति।

(ख) शब्दानुवादवाक्यानि–पूर्वमुक्तस्य अर्थस्य शब्दशोऽनुवादकराणि वाक्यानि शब्दानुवाक्यानि कथ्यन्ते।

नैयायिकाः वैशेषिकाश्च सर्वे विद्वांसः वेदस्य सम्पूर्णस्य प्रामाणिकतां स्वीकुर्वन्ति इति।

तमिमं सिद्धान्तं मनसि निधाय वाक्यप्रमाणं लक्षयति– 'यस्य वाक्यस्येति।' संसर्ग इति प्रायिकाभिप्रायम्। न तु वाक्यसामान्यस्य संसर्गविषय-कत्वमावश्यकमित्यभिप्रायः। तेन 'मानान्तराऽबाधिततात्पर्यविषयार्थानुभावक-वाक्यत्वं वाक्यप्रमाणत्वं।' अत्र 'मानान्तरपदेन' वेदान्तेतरप्रमाणस्य परिग्रहः। तेन 'घटमानय' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवाक्यानां न असंग्रहः।

तद्वाक्यं प्रमाणम्–व्यापारवत्तासम्बन्धेन प्रमायाः असाधारणकारण-मितियावत्। अत्र वाक्यशब्दः न वाक्यसामान्यपरः, किन्तु आकांक्षा-योग्यतादिमद्वाक्यविशेषपरः, तेन आकांक्षायोग्यतादिकमपि कारणता-वच्छेदकत्वेन विवक्षितम्। अतः वाक्यजन्यज्ञाने वाक्यस्य कारणत्वमुक्त्वा पुनराकांक्षादीनां कारणत्वोक्तिरनुपपन्नेति शङ्काया अनवकाशः। कारणानि सहकारिकारणानीत्यर्थः। यथा अभिहितान्वयवादे परम्परया शब्दस्योपयोगित्वात् शाब्दबोध इति व्यवहारः, तथा आकांक्षादिजन्यस्यापि ज्ञानस्य शाब्दबोध इति व्यवहारः कुतो नोपपद्यते? उपपद्यत एवेति यावत्। एतेनानुमानविधया शब्दप्रामाण्यवादः परास्तः। न हि अनुमितौ आकांक्षा- योग्यतासत्तीनां तात्पर्यज्ञानस्य वा कारणत्वमस्ति। एवमत्र शब्दप्रमाणस्य स्वरूपं वेदान्तदर्शनदिशा प्रतिपादितम्।

# शब्दप्रमाणम्

प्रदीपकुमारः

विभिन्नदर्शनेषु प्रमाणानां संख्या भिन्ना भिन्ना। यथा–न्यायदर्शने चत्वारि प्रमाणानि सन्ति, सांख्यमते त्रीणि, परं वेदान्तिनां मते प्रमाणानां संख्या षट् अस्ति। यथा– प्रत्यक्षम्, अनुमानम्, उपमानं, शब्दः, अर्थापत्तिः, अनुपलब्धिश्च एतानि षट् प्रमाणानि। एषु प्रमाणेषु शब्दोऽन्यतमः। वेदान्तदर्शने शब्दप्रमाणम् आगमनाम्नाऽपि व्यवह्रियते।

प्रमाकरणं प्रमाणमिति प्रमाणस्य सामान्यलक्षणं सर्वेषामभिमतम्। तत्र लोकव्यवहारेण अनुभवः कर्तुं शक्यते यत् प्रमाणस्य कीदृशं महत्त्वं शास्त्रेषु अपि सर्वत्रैव "प्रमेयसिद्धिः प्रमाणाद्धि" इति प्रतिपादितम्। यथा– मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात्।

यत्रैव प्रत्यक्षादिप्रमाणानां गतिः न भवति तत्रैव आगमप्रमाणेन आस्तिकसमाजे अनुपमकार्यं सिद्ध्यति। स आगम पौरुषेयोऽपौरुषेयो द्विविधः। सृष्टेः आरम्भे परमेश्वरप्रणीतवेदः अपौरुषेयो मन्यते। किन्तु स्वतन्त्ररूपेण निर्मिता भारतादीतिहासपुराणधर्मशास्त्रादयः पौरुषेया आगमा मन्यन्ते। तथापि वेदानुकूत्वकारणात् वेदस्य तात्पर्यं स्पष्टतया ख्यापयन्ति, अतः पौरुषेया आगमा अपि प्रामाणिका मन्यन्ते। 'शब्द' एतादृशं प्रमाणमस्ति यस्य यदा कदा आपाततः प्राप्तेन अर्थेन तात्पर्यार्थः सर्वथा भिन्नः भवति। अतः शब्दस्य अर्थः यदा सिद्ध्यति तदा आवश्यकमस्ति यदपेक्षया प्रमाणान्तरेण आपाततः प्राप्रस्यार्थस्य बाधः भवितुं शक्यते। किन्तु तात्पर्यार्थस्य तु अन्यप्रमाणेन बाधः न भवति, एतादृश्यां स्थितौ आप्तवाक्यं प्रमाणं मन्यते।

वाक्यार्थज्ञाने आकांक्षायोग्यतासत्तितात्पर्यज्ञानं कारणं मन्यते। वाक्ये अनेकानि पदानि भवन्ति। तेषु क्रियावाचकम्। एवं कारकवाचकम् पदं भवति। अर्थवाचकपदेषु क्रियाश्रवणेन कारकस्य, कारकश्रवणेन च क्रियार्थस्य

जिज्ञासा भवति। यथा 'घटमानय' अस्य वाक्यस्य 'आनय' पदश्रवणेन क्रियापदार्थस्य बोधकारकपदार्थश्रवणस्य जिज्ञासाकारणात् कारके जिज्ञासाविषयत्वमागच्छति एवं 'घटम्' इति पदश्रवणेन यदा पदार्थबोधो भवति तदा क्रियाश्रवणस्य जिज्ञासाविषयत्वं आनेतुम् आकांक्षा कथिता। अत्रः कः विशेषः? यदा जिज्ञासा न भवति तदापि व्युत्पन्नव्यक्तिः वाक्येन वाक्यार्थ जानाति। अतः आकांक्षाया उक्तलक्षणे योग्यत्वपदमपि दत्तम्। अर्थात् पदार्थेषु परस्परजिज्ञासाविषयत्वयोग्यत्वम् आकांक्षा इति कथनीयम्। उक्तयोग्यतायाः निश्चयात्मकभेदः संसर्गस्थले क्रियात्वं कारकत्वादयः सन्ति एवं ससर्गस्थले समानविभक्तिकपदप्रतिपाद्यत्वमस्ति। अनेन कथनेन 'तत्त्वमसि' इत्यादिमहावाक्ये अव्याप्तिर्नास्ति। एवं गौः अश्वः इत्यादिस्थले अतिव्याप्तिरपि नास्ति।

तात्पर्यार्थस्य बाधाभावः भवति स एव योग्यतास्ति। अत एव 'अग्निना सिञ्चति' अस्मिन् वाक्ये अग्निना सिञ्चनरूपार्थस्य बाधकारणात् योग्यता न सिद्ध्यति। अतः "स प्रजापतिरात्मनो वपामुदखिदत्" अस्मिन् वाक्ये तात्पर्यविषये पशुयागस्य प्रशंसारूपयोग्यता वर्तते। 'तत्त्वमसि' इत्यादिमहावाक्यस्य तात्पर्यं जीवस्य ईश्वरस्य च साक्षादभेदं न बोधयति। तत्र वाच्यार्थस्य अभेदस्य बाधकारणादपि लक्ष्यार्थस्य बाधाभावात् योग्यता वर्तते।

पदपदार्थयोः मानसिकोपस्थितिरव्यवधानेन स्यात्, सैव आसत्तिः कथ्यते। प्रत्यक्षादिप्रमाणेन अर्थस्य उत्पत्तिः कारणादपि स पदार्थस्य अन्वयबोधः शाब्दज्ञाने न भवति। अपितु एतादृशस्थले पदस्य अध्याहारो भवति। तथा अध्याहृतस्य पदार्थस्य एव श्रौतपदार्थेन सह अन्वयो भवति। यथा 'द्वारं' इत्यादि स्थले 'पिधेहि' पदस्य अध्याहारः क्रियते।

शक्यलक्ष्यभेदेन च पदार्थः द्विविधः भवति। लक्षणायाः विचारे परिभाषाकारः जहदजहल्लक्षणायाः प्रसिद्धोदाहरणे 'सोऽयं देवदत्तः इत्युदाहरणं' तत्त्वमसीत्यादिलक्षणातः पृथक् करोति। शक्तिवृत्त्या द्वयोःविशेषभागयोः अभेदः अनायासेन सिद्ध्यति। परिभाषाकारः धर्मराजाध्वरीन्द्रः कथयति यत् तात्पर्यस्य सिद्धिकरणाय लक्षणा क्रियते। अत एव यत्रैव तात्पर्यार्थो न

सिद्ध्यति, तत्र यथासम्भवं: जहदजहत् भागत्यागलक्षणया तात्पर्यार्थो सिद्ध्यति तात्पर्यं वक्तुरिच्छाधीनो न भवति किन्तु पदस्य स्वभावोऽस्ति। अत एव सर्वथा अबोधव्यक्त्या उच्चारणेन अपि व्युत्पन्नव्यक्तेः शाब्दबोधः भवति, केवलानां पदानां शक्तिग्रहकाले आप्तव्यक्तेः। एव शक्तिग्रहः करणीयः।

वस्तुतः शब्दज्ञानं शाब्दबोधस्य कारणमस्ति। शब्दज्ञानं श्रोत्रेण स्यात् अथवा लिपिसङ्केतं दृष्टवा स्यात् उभयप्रकारेण शब्दज्ञानं शाब्दबोधस्य कारणमस्ति। शब्दस्य श्रोत्रेन्द्रियेण श्रवणं एकः पक्षः अस्ति। तस्य अर्थज्ञानं अपरः पक्षोऽस्ति। श्रौतशब्दस्य साक्षात्कारो भवति एवमर्थज्ञानं तदनन्तरं भवति। शब्दश्रवणादनन्तरं सम्प्रति पदार्थज्ञानं तस्यैव भविष्यति यस्य शब्दार्थे पूर्वतः शक्तिग्रहः विद्यमानः स्यात्।

शब्देन परोक्षज्ञानम्, अपरोक्षज्ञानञ्च भवति किन्तु देशकालात् अव्यवहितपदार्थस्य शब्देन अपरोक्षज्ञानमेव भवति यथा दशमस्त्वमसि अनेन शब्देन दशमपुरुषस्य अपरोक्षज्ञानं जायते। सम्यक्रूपेण साधनचतुष्टयसम्पन्नः प्रमाता 'अस्ति ब्रह्म' अनेन वाक्येन ब्रह्मणः परोक्षज्ञानं करोति, 'तत्त्वमसि' इति श्रोत्रियब्रह्मनिष्ठसद्गुरुमुखात् श्रवणेन 'अहं ब्रह्मास्मि' एतादृशमपरोक्षं ज्ञानं भवति। अन्यथा अपरोक्षभ्रमस्य निवृत्तिः परोक्षज्ञानात् न भवितुं शक्यते। अत एव ब्रह्म औपनिषदपुरुषः कथ्यते, यतोहि स केवलमुपनिषदा ज्ञायते। इत्त्थं वेदवाक्यरूपशब्दप्रमाणेन जगतः मिथ्यात्वनिश्चपूर्वकब्रह्मणः त्रिकालाबाधितत्वं स्वात्मरूपत्वञ्च निश्चीयते।

# शिखामणिटीकादृष्ट्या प्रत्यक्षपरिच्छेदः

सुब्रह्मण्यः एम्

वेदान्तपरिभाषा तावत् श्रीमद्धर्मराजाध्वरीन्द्रप्रणिता। शिखामणिटीका-कारस्तावत् गन्थकर्तुः पुत्रः श्रीरामकृष्णाध्वरी। शिखामणौ तावत् मूले अविद्यमानाः काश्चित् चिन्ताधाराः वर्तन्ते इति वैशिष्ट्यम्। वेदान्तपरिभाषायाः मङ्गलश्लोको भवति–

**यदविद्याविलासेन भूतभौतिकसृष्टयः।**
**तन्नौमि परमात्मानं सच्चिदानन्दविग्रहम्॥**

शिखामणौ तावत्–

**नैदाघभानुकिरणेष्विव वारिपूरः**
**सर्वो विभाति यदबोधवशात्प्रपञ्चः।**
**मालाफणीव च निमीलति यत्प्रबोधा**
**त्तद्ब्रह्म नौमि सुखमद्वयमात्मरूपम्॥**

परिभाषाकारः ततः परं नृसिंहाख्यं यतीन्द्रं तथा श्रीमद्वेङ्कटनाथाख्यान् जगद्गुरून् च प्रणमति। परिभाषाकारेण चिन्तामणेः काचित् तर्कचूडामणिनामिका विशिष्टा टीका कृता विद्यते। विषये–स्वकीयग्रन्थस्य निःश्रेयसप्रयोजनवत् शारीरकमीमांसया सङ्गतिं दर्शयितुं करिष्यमाणप्रमाणनिरूपणस्य परम्परया निःश्रेयसोपयोगं दर्शयन् शास्त्रस्य प्रथमं तत्साधनतां साधयति इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः **न स पुनरावर्तते** (छान्दोग्योपनिषत्) इत्यादिश्रुत्या तस्य नित्यत्वावधारणात् इति।

ननु काम्यमानत्वं धर्मादीनाम् अपि अविशिष्टम् न च अनित्यत्वात्

ततः विरक्तिः एव अस्य इति वाच्यम्। तेषाम् अपि पुरुषार्थत्वादिना नित्यत्वानुमानात् इति आशङ्क्यवह्न्यनौष्ण्यानुमानवत् बाधितविषयं तत्।

ननु अस्तु वेदान्तविचारस्य ब्रह्मज्ञानद्वारा निश्रेयसहेतुत्वं तथापि प्रमाणनिरूपणस्य तदुपयोगाभावान् न शास्त्रसङ्गतिः इति आशङ्क्य यतः शास्त्रप्रतिपाद्यं ब्रह्म तत्प्रयोजनं च मोक्षसाधनब्रह्मज्ञानञ्च प्रमाणाधीनम् अतः परम्परया निःश्रेपसोपयोगीति प्रमाणनिरूपणं शास्त्रसङ्गतम् इति अभिप्रायेण तन्निरूपणं शिष्यावधानाय प्रतिजानीते इति ब्रह्म तत् ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते। प्रमाणनिरूपणं प्रतिज्ञाय तल्लक्षणम् आह तत्र प्रमाकणं प्रमाणम्। प्रमालक्षणम् आह तत्र स्मृतिव्यावृत्तं प्रमात्वम् अनधिगताबाधितार्थ-विषयकज्ञानत्वं स्मृतिसाधारणं तु अबाधितार्थविषयकज्ञानत्वम्। ननु एकस्मिन् घटे प्रत्यक्षेण यदा निरन्तराणि ज्ञानानि उत्पद्यन्ते तत्र द्वितीयादिज्ञानेषु पूर्वपूर्वज्ञानविषयीकृतार्थेषु प्रथमलक्षणस्य अव्याप्तिः इत्यतः आह नीरूपस्य अपि कालस्य इन्द्रियवेद्यात्वाभ्युपगमेन धारावाहिकबुद्धेः अपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयत्वेन न तत्र अव्याप्तिः। न च सुरभिचन्दनम् इति प्रत्यक्षे सौरभस्य इव आकाशे बलाका इत्यादौ आकाशस्य ज्ञानान्तरोपनीतस्य भानात् तदंशे परोक्षवृत्तेः वा अभ्युपगमान् अचाक्षुषत्वं तस्य अस्तु इति वाच्यम् तर्हि तद्वदेव सर्वप्रत्यक्षे अपि कालभानोपपत्तेः न चाक्षुषत्वं तस्य इति अरुचेः आह–किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावत् घटस्फुरणं तावत् घटाकारान्तः करणवृत्तिः एका एव। एवकारव्यवच्छेद्यम् आह न तु नाना वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात्। ननु एवम् अपि स्वोत्तरवृत्त्यौदासीन्यसमयादीनां कथं विरोधित्वम् अनुगतविरोधितावच्छेदकाभावात् इति चेन्, न। मण्यादीनाम् अनुगतप्रतिबन्धकतावच्छेदकाभावे अपि मणित्वादिना दाहप्रतिबन्धकतास्वीकारात्। सर्वत्र च विरोध्यनुगमस्य अदोषत्वात्। द्वितीयं निरस्यति तथा च तत्प्रतिफलितचैतन्यरूपं घटादिज्ञानम् अपि तत्र तावत्कालीनम् एकम् एव इति न अव्याप्तिशङ्का अपि।

इदानीं लक्षणद्वयस्य अव्याप्तिम् आशङ्कते ननु सिद्धान्ते घटादेः मिथ्यात्वेन बाधितत्वात् कथं प्रमाणम् इति। प्रमात्वं लक्ष्यं न भवति इति अर्थः। घटादिज्ञानम् अपि लक्ष्यम् एव प्रमात्वव्यवहारात् तद्व्यवहारार्थम्

एव अत्र लक्षणप्रणयनात् इति आशयेन आह उच्यते सिद्धान्ते घटादि ज्ञानस्य अपि लक्ष्यत्वेन तत्र अव्याप्तिः दुर्वारा तद्विषयशुक्तिरूप्यवत् बाधितत्वात् इति, आशङ्क्य तद्वत् संसारदशयां घटादिप्रपञ्चस्य न बाध इति आह ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः **"यत्र त्वस्य सर्वम् आत्मा एव अभूत् तत्र केन कं पश्येत्** (बृहदारण्यकोपनिषत्) इति श्रुतेः। ननु नेह नानास्ति इत्यादिश्रुत्या कालत्रये घटादेः बाधावगतेः कथं संसारदशायाम् अबाधः इति आशङ्क्य पारमार्थिकत्वावच्छिन्नतदत्यन्ताभावा-वगमे अपि अध्यासविरोधिनः स्वोपादाननिवृत्तिलक्षणबाधस्य मुक्तिदशायाम् एव अवगमात् इति आह न तु संसारदशायां बाधः, **यत्र हि द्वैतम् इव भवति तदितर इतरं पश्यति** इति श्रुतेः। ननु एवम् अपि अबाधितपदेन कालत्रयाबाध्यत्वस्य अर्थविशेषणत्वेन उक्तत्वात् तद्घटितलक्षणाव्याप्तिः तदवस्था इत्यतः आह तथा च अबाधितपदेन संसारदशयाम् अबाधितत्वं विवक्षितम् इति न घटादिप्रमायाम् अव्याप्तिः।

उक्तघटादिज्ञानप्रामाण्यम् अभियुक्तवचनेन अपि प्रथयति–

**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥**

लौकिकप्रमाणस्य आत्मनिश्चयेन अनुत्पाद्यत्वात् अज्ञाप्यत्वात् च पञ्चम्यनुपपत्तिः इति अतः आह आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्यन्तम् इति अर्थः। लौकिकम् इति घटादिज्ञानम् इति अर्थः। सामान्यलक्षणाधीनो विभागः इत्यतः प्रमाणं लक्षयित्वा विभजते तानि प्रमाणानि षट् प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात्।

प्रत्यक्षस्य ज्येष्ठत्वात् प्रथमं तन्निरूपयति तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम्। ततः च प्रत्यक्षप्रमाणं दुर्निरूपम् इति आशङ्क्य आह प्रत्यक्षप्रमा तु अत्र चैतन्यम् एव। आत्मनः प्रत्यक्षत्वे प्रमाणम् आह **'यत् साक्षात् अपरोक्षात्** (बृहदारण्यकोपनिषत्) इति श्रुतेः ब्रह्मणः प्रमाणव्यापारद्वारकप्रत्यक्षत्वं व्यावर्तयितुं श्रुतौ साक्षात् इति विशेषणम्, अपरोक्षप्रमाणमन्तरा तस्य उत्पत्तिज्ञप्त्योः अभावात् इत्यतः आह–अपरोक्षात् इत्यस्य अपरोक्षम् इति अर्थः। ननु चैतन्यम् अनादि तत्कथं चक्षुरादेः

तत्करणत्वेन प्रमाणत्वम् इति। उच्यते चैतन्यस्य अनादित्वे अपि तदभिव्यञ्जकान्तःकरणवृत्तिः इन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यम् आदिमत् इति उच्यते ज्ञानावच्छेदकत्वात् च वृत्तौ ज्ञानत्वोपचारः।

न च अयम् अपसिद्धान्तः इति आह विवरणे अन्तःकरणवृत्तौ ज्ञानत्वोपचाराद् इति। नैयायिकः शङ्कते–ननु निरवयवस्य अन्तःकरणस्य परिणामात्मिका वृत्तिः कथम् इति। अन्तःकरणं परिणामि सावयवत्वात् मृद्वत् इत्यनुमानेन बाधात् अपरिणामित्वानुमानं न युक्तमिति आह न तावत् अन्तःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात्। तव मते अपि अनुमानस्य एव मनसि प्रमाणत्वेन अनुसरणीयतया तेन च लाघवात् अनादित्वेन एव सिद्धेः विशेषणासिद्धः हेतुः इति आशङ्क्य मन्मते मनसः सिद्धौ तत्सादित्वे च श्रुतिरेव भगवती प्रमाणम् इति आह सादित्वं च तन्मनोऽसृजत इत्यादिश्रुतेः।

न च तद्भिन्नत्वविशेषितं तत्परिणामे हेतुः अन्तःकरणस्य अन्त्यावयविभिन्नत्वे प्रमाणाभावात् सादिद्रव्यत्वस्य घटादौ व्यभिचारेण तत्र अप्रमाणत्वात् इति अस्वरसात् आह वृत्तिरूपज्ञानस्य मनोधर्मत्वे च कामः सङ्कल्पो विचिकित्सा श्रद्धा धृतिः अधृतिः धीः भीः इत्येतत्सर्वं मन एव इति श्रुतिः मानम्। धीशब्दस्य ज्ञानशब्दपर्यायत्वम् अजानानां प्रति आह धीशब्देन वृत्तिरूपज्ञानाभिधानम्। न च श्रुतिविरोधः मनोजन्यपरतया अपि तदुपपत्तेः इति आशङ्क्य मृद्घटः इत्यादिवत् सामानाधिकरण्यश्रुतिः उपादानपरः। अत एव दृष्टान्तः साध्यविकलः ननु कामादेः अन्तःकरणधर्मत्वे अहमिच्छामि अहं जानामि अहं बिभेमि इत्याद्यनुभवः आत्मधर्मत्वम् अवगाहमानः कथम् उपपद्यते।।

ननु एवम् अपि अहं मनः इति अभेदव्यवहारात् न तादात्म्याध्यासः इति आशङ्क्य अहं दुःखी सुखी इत्यादिव्यवहारः अपि अयः दहति इतिवत् तादात्म्यव्यवहारत्वात् आत्माध्यासपूर्वकः एव, अन्यथा तादात्म्यव्य वहारानुपपत्तेः।

ननु एवमपि न अहङ्कारमिश्रस्य आत्मन अहंप्रत्ययविषयत्वं तस्य इन्द्रियत्वेन अतीन्द्रियत्वाद् इति चोदयति ननु अन्तःकरणस्य इन्द्रियतया

अनिन्द्रियत्वात् कथं प्रत्यक्षविषयता इति। अस्ति इन्द्रियत्वे प्रमाणम् इति चेत् किं मनसः इन्द्रियत्वे श्रुतिः प्रमाणम् उत स्मृतिः अनुमानं वा। नाद्यः तथाविधश्रुतेः अनुपलम्भात् द्वितीयपक्षे **'मनः षष्ठानि इन्द्रियाणि'** इति भगवद्गीतावचनं प्रमाणमिति चेन् न अनिन्द्रियेण अपि मनसा षट्त्वसंख्यापूरणाविरोधात्। किञ्च मनः इन्द्रियम् इन्द्रियगतषट्त्वसंख्या-पूरकत्वात् इति अनुमाने विशेषव्याप्तिः मूलम् उत सामान्यव्याप्तिः वा। न आद्यः दृष्टान्ताभावात् इति आह न हि इन्द्रियगतसंख्यापूरणमिन्द्रियेण एव इति नियमः। ननु यद्यद्गतसंख्यापूरकं तत्तज्जातीयं यथा पशोः प्रतिप्रस्थातृषष्ठाः ऋत्विज इत्यत्र ऋत्विग्गतसंख्यापूरकः प्रतिप्रस्थाता ऋत्विग्जातीयः इति सामान्य- व्याप्तिपक्षम् आशङ्क्य निराकरोति यजमानपञ्चमाः इडां भक्षयन्ति इत्यत्र ऋत्विग्गतपञ्चत्वसंख्यायाः अनृत्विजा अपि यजमानेन पूरणदर्शनात्।

ननु अर्थाध्याहारवादिमते यजमानपञ्चमाः इडां भक्षयन्ति इत्यत्र यजमाने हेतोः एव अभावात् न व्यभिचारः इति आशङ्क्य असन्दिग्धव्यभिचारम् आह वेदान् अध्यापयामास महाभारतपञ्चमान् इत्यादौ वेदगतपञ्चत्वसंख्यायाः अवेदेनापि भारतेन पूरणदर्शनान्। ननु सुखाद्यनुपलब्धिः इन्द्रियजन्या प्रत्यक्षत्वात् रूपादिप्रत्ययवत् इति अनुमाने मनसः इन्द्रियत्वे प्रमाणम् अन्यथा सुखादिज्ञानस्य साक्षात्त्वं न साक्षात् इति आशङ्क्य निराकरोति न चैवं मनसः अनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्कारत्वं न स्यात्। इन्द्रियजन्यत्वाद् इति वाच्यम्।

## उपसंहारः

अन्तःकरणम् इन्द्रियप्रणालिकया विषयदेशं गत्वा तदाकारपरिणमने तस्याः वृत्तेः विषयसम्बन्ध एव सन्निकर्षः। वृत्तेः विषयपरिणामे वृत्तिविशिष्टचैतन्यस्य विषयावच्छिन्नचैनन्यस्य च ऐक्यात् अयं घटः इत्यादि ज्ञाने अन्तःकरणवृत्तिविषयावच्छिन्नचैतन्ययोः ऐक्यात् घटे प्रत्यक्षत्वम्।

# शब्दप्रमाणम्

कल्याणीसाहु

तत्त्वानां साक्षात्कार एव दर्शनम्। ज्ञानदृष्ट्या साक्षात्कार इत्यर्थः। जीवनस्य व्याख्यैव दर्शनम्। 'दृश्यते अनेनेति दर्शनम्"। जीवनसम्बन्धिसर्वाणि तत्त्वानि दर्शनशास्त्रे वर्णितानि। भारतीयदर्शनम् आस्तिकनास्तिकभेदेन द्विविधम्। आस्तिकदर्शनं वेदानुकूलं दर्शनं विधदते। वेदविरोधिनास्तिकदर्शनमिति। सांख्ययोगन्यायवैशेषिकोत्तरमीमांसापूर्वमीमांसाभेदेन षड्विधम्। चार्वाक-बौद्ध-जैनभेदेन नास्तिकदर्शनं त्रिविधम्। एषु बौद्धदर्शनं सौत्रान्तिक-वैभाषिकमाध्यमिकयोगाचारभेदेन चतुर्विधम्। आस्तिकदर्शनेषु उत्तरमीमांसा "वेदान्तः" संज्ञां लभते। 'वेदान्त' इति नामत एव "वेदस्याऽन्तिमो भागो" बुध्यते। उपनिषत्तु वेदस्याऽन्तिमो भागः। तेन वेदान्तशब्देन उपनिषदेव ग्राह्या। वेदस्तु कर्म-उपासनाज्ञानभेदेन त्रिविधः। वेदान्त इति ज्ञानभागत्वेन अङ्गीक्रियते। अत उक्तं च सदानन्देन-"वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरिकसूत्रादीनि"।

## अद्वैतवेदान्ते प्रमालक्षणम्

ज्ञानं नाम किञ्चिदिह लोके सर्वानुभवसिद्धम्। सर्वो हि व्यवहरति यदिदं जानाम्यदो जानामीति। यद्यपीदमाबालगोपानुभवसिद्धं तथापि केचनैव प्रेक्षावन्तः किमेतस्य मूलमिति चिन्तयन्ति। ते ह्येवं विचारयन्ति यद्, अहं पश्यामि, दृष्ट्वेदं जानामीत्यनुभवोऽस्ति। एवमेवाहं शृणोमि, श्रुत्वा चेदं विजानाम्यहञ्जिघ्रामि विजानाम्यहं खादामि, रसं विजानाम्यहं स्पृशामि स्पृष्ट्वेदं विजानामि ध्यात्वेदञ्च विजानामीति च। तथा च ज्ञानं नाम 'किञ्चित् सामान्यं, दर्शनश्रवणादयो विशेषा इति गम्यते। एतद्व्यापकत्वेन च चक्षुरादीन्द्रियाणि प्रसिद्धानि करणत्वेन शास्त्रेषु व्यवहृतानि।

## अद्वैतवेदान्ते प्रमाणानि

अद्वैतवेदान्ते षट्प्रमाणानि स्वीकृतानि-प्रत्यक्षानुमानोपमान-शब्दार्थापत्त्यनुपलब्धयः भाट्टा अप्येतानि षट्प्रमाणानि स्वीकुर्वन्ति। चार्वाकाः प्रत्यक्षमेकं प्रमाणं स्वीकुर्वन्ति। बौद्धा वैशेषिकाश्च प्रत्यक्षानुमाने द्वे, सांख्या उपमानं संयुज्य त्रीणि, नैयायिकाः शब्देन सह चत्वारि, प्रभाकरा अर्थापत्या सह पञ्च, भाट्टा अद्वैतिनश्च तान्येवानुपलब्ध्या सह षट्प्रमाणानि स्वीकुर्वन्ति। प्रमाकरणं च प्रमाणं भवति। यथार्थज्ञानं येन भवति तस्य ज्ञानस्य साधनं प्रमाणमित्युच्यते।

## शब्दप्रमाणम्

स्वसमानविषयवाक्यार्थयथार्थज्ञानजन्यत्वं प्रमाणशब्दलक्षणम् कारणद्वारकमेवं वाक्यं तद्विषयाद्भिन्नो विषयो यस्य तत् स्वसमानविषयं तच्च तद् वाक्यार्थयथार्थज्ञानं तज्जन्यत्वं प्रमाणशब्द इति समन्वयः। कारणमत्र स्वसमानविषयकवाक्यार्थयथार्थज्ञानम्। एवञ्च लक्षणमाप्तोच्चरितवाक्येऽस्ति। किन्तु शुकबालादिवाक्ये तादृशयथार्थज्ञानजन्यत्वाभावादव्याप्तिः। किञ्च स्फोटवादिनां मते वाक्यस्फोटरूपस्य शब्दस्य नित्यत्वात् तादृशयथार्थ-ज्ञानजन्यत्वाभावाद् अव्याप्तिः। अत एव स्वसमानविषयवाक्यार्थ-यथार्थज्ञानजन्यत्वमिति कारणद्वारकं प्रमाणशब्दलक्षणमाचक्षते। नैतत्सारम्, शब्दबालादिवाक्ये अव्याप्तेः। न चेश्वरज्ञानं तद्वाक्यार्थविषयं तत्राख्येवेति वाच्यम् ईश्वरानङ्गीकर्तृमते तथाव्याप्तेः। किञ्च नेदं प्रमाणशब्दस्य लक्षणम्, शुकादिप्रयोगस्थले क्लृप्तपदावलीज्ञानादेवान्यत्र शब्दरचनोपपत्तौ गौरवेण च क्लृप्तवाक्यार्थज्ञानस्याहेतुत्वात्, वियदादीनामापेक्षिकनित्यत्वमङ्गीक्रियते तथा वर्णानामपि नित्यत्वम्, तथा च प्रतिवाक्यं भिन्नभिन्नानुपूर्वीघटित-पदवाक्यभेदेऽपि तादृशस्य नित्यशब्दस्य वाक्यार्थज्ञानजन्यत्वभावादिति भावः।

न चानुपूर्वीविशिष्टतया जन्यत्वम्, घटज्ञानानन्तरज्ञानविषयत्वरूपाया-स्तदुच्चारणानन्तरोच्चारणविषयत्वलक्षणं या वाऽऽनुपूर्व्या उपाधित्वेनानादित्त्या वाक्यार्थज्ञानाजन्यत्वात्। ततश्च करणद्वारकं प्रमाणशब्दलक्षणं न युक्तमित्य-भिसन्धाय प्रकारान्तरेण लक्षणमाह—"यस्य वाक्यस्य तात्पर्य्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम्। मानान्तराबाधिततात्पर्य्यविषयीभूतपदार्थ-संसर्गबोधकत्वं यस्य वाक्यस्य तद्वाक्यं प्रमाणशब्द इत्यर्थः।

अर्थवादवाक्ये “स प्रजापतिरात्मनो वपामुदखिदत्” इत्यादौ श्रूयमाणपदार्थसंसर्गस्य व्यवहारदशायामपि बाधात्तात्पर्यविषय इत्युक्तम्। प्रमास्वरूपयोग्यशब्दमात्रस्य लक्षणत्वाद्नाभसादौ नातिप्रसङ्गः। अथवा तात्पर्यविषयाबाधितसंसर्गयोः शब्दज्ञानजनकत्वं लक्षणम्। शब्दज्ञानं च पदज्ञानत्वेन पदज्ञानजनकत्वं लक्षणम्। शब्दज्ञानं च पदज्ञानत्वेन पदज्ञानजन्य तात्पर्यज्ञानत्वेन तात्पर्यज्ञानजन्यं वा तात्पर्यज्ञानकारणत्वं चाकरे स्फुटम्। वैशेषिकस्तु शब्दो न पृथक् प्रमाणमनुमानेनैव तस्य गतार्थत्वात्। तथा हि लौकिकानि गामानयेत्यादीनि वैदिकानि च “ज्योतिष्टोमेन स्वर्गकामो यजेत” इत्यादीनि तात्पर्य्यविषयपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षायोग्यताशक्ति-मत्पदकदम्बत्वात् पटमानयेत्यादि वाक्यवद्। एते पदार्थास्तात्पर्य्यविषयमिथः संसर्गवन्तः योग्यपदस्मारितत्वात्, सम्प्रतिपन्नवत्। न च शब्द एव संसर्गप्रतीतिं जनयतु अविशेषादिति वाच्यम् अनुमानस्य क्लृप्तप्रमाणभावतया तस्यैव करणत्वौचित्यात्। तस्मादनुमानविधया प्रमाणम्, न स्वातन्त्र्येणेति।

वाक्यजन्ये च ज्ञाने आकाङ्क्षायोग्यताऽऽसत्तिस्तात्पर्य्यज्ञानं चेति चत्वारि कारणानि। तथा च यादृशज्ञाने योग्यतादेः सहकारित्वं तादृशं क्लृप्तविज्ञानविजातीयं सिद्धमिति तदवच्छिन्नज्ञानजनकमानस्य मानान्तरत्वमा-स्थेयम्। अन्यथा शब्दप्रामाण्यप्रद्वेषिमते योग्यतादेः सर्वसिद्धं सहकारित्वं भज्येतेति भावः।

# शब्दप्रमाणविचारः

बिष्णुशङ्करमहापात्रः

आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता। वाक्यं-पदसमूहः, यथा–'गामानय शुक्लां दण्डेने'ति।। शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः।।[1] आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम्। प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽति-व्याप्तिरतः– आप्तोच्चरितत्वनिवेशः। तावन्मात्रोक्तौ जबगडदशादावतिव्याप्तिरतो वाक्यत्वम्। आप्तत्वं च–प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्। तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति। आकांक्षायोग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्ताऽननुभावकत्वम्–आकांक्षा। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकाक्षांदिरहितं वाक्यमप्रमाणम्।

यथा–'गौरश्वः पुरुषो हस्ती'ति प्रमाणम्, आकांक्षाविरहात्। 'वह्निना सिञ्चेदि'ति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि 'गामनये'त्यादिपदानि न प्रमाणम्, सान्निध्याभावात्।[2] अव्यवहितोत्तरत्वादि-सम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्ता-दृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा। यथा 'घटमि' त्यादिस्थलेऽ-व्यवहितोत्तरत्वादिसम्बन्धेन 'अम्' पदं 'घट' पदवदित्याकारकाऽम्-पदविशेष्यक 'घट' पदप्रकारकज्ञानसत्त्वे 'घटीयं कर्मत्वमि'ति बोधो जायते। 'अम् घट' इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते। अतस्तादृशाकांक्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो योग्यतेत्यर्थः। अग्निना सिञ्चेदित्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ

---

1. तर्कसंग्रहः– पृ.–129
2. तर्कसंग्रहः– पृ.–140

बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः।

वाक्यं द्विविधम्–वैदिकं, लौकिकं च। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम्।। वाक्यार्थज्ञानं शाब्दज्ञानम्, तत्करणं शब्दः। इति शब्दप्रमाणम्।।[1]

नन्वेतावता शाब्दसामग्री प्रपञ्चिता। प्रमाविभाजकवाक्ये शाब्द स्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह–वाक्यार्थेति। शाब्दत्वं च 'शब्दात्प्रत्येमी'त्यनुभवसिद्धा जातिः। शाब्दबोधक्रमो यथा– 'चैत्रो ग्रामं गच्छती'त्यत्र– 'ग्रामकर्मकगमनानुकूलवर्तमानकृतिमांश्चैत्र' इति शाब्दबोधः। द्वितीयायाः कर्मत्वमर्थः। धातोर्गमनम्। अनुकूलत्वं च संसर्गमर्यादया भासते। लटो वर्तमानत्वमाख्यातस्य कृतिः। तत्सम्बन्धः संसर्गमर्यादया भासते। लटो वर्तमानत्वमाख्यातस्य कृतिः। तत्सम्बन्धः संसर्गमर्यादया भासते। 'रथो गच्छती'त्यत्र 'गमनानुकूलव्यापारवान् रथ' इति शाब्दबोधः।। 'स्नात्वा गच्छती' त्यत्र 'गमनप्रागभावावच्छिन्नकालिकस्नानकर्तृकगमनानुकूलवर्तमानकृतिमानि'ति शाब्दबोधः। क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः। एवमन्यत्रापि वाक्यार्थो बोध्यः।।

**तत्र प्रमाकरणं प्रमाणम्।[2]**

तत्रेत्यस्य तेष्वित्यर्थः। ब्रह्मतज्ज्ञानतत्प्रमाणेष्विति भावः। तत्रेत्यस्य प्रमाणे निरूपणीये इत्यर्थः इत्यपि वदन्ति केचित्। प्रमायाः करणं प्रमाणं इति षष्ठीसमासः। तथा च ब्रह्म तज्ज्ञानतत्प्रमाणानां मध्ये प्रमाणस्य प्रमाकरणत्वं सामान्यलक्षणमिति सरलार्थः। करणत्वं तु असाधारणकारणत्वम्। कारणताया–साधारण्यं कार्यत्वन्यूनवृत्तिधर्मावच्छिन्नकार्यतानिरूपितत्वम्। तन्निवेशप्रयोजनं धर्माधर्मात्मकादृष्टे प्रमाणलक्षणातिव्याप्तिवारणं वेदितव्यम्। प्रकृते प्रमापद–समभिव्याहारात् कार्यत्वन्यूनवृत्तिधर्मपदेन प्रमात्वस्य ग्रहणम्। तथा च

प्रमात्वावच्छिन्नकार्यतानिरूपितकारणत्वं प्रमाणत्वम् इति लक्षणं सम्पद्यते। मनसि तु नातिव्याप्तिशङ्का, तस्य प्रमां प्रत्यपि हेतुत्वेन तन्निष्ठ–

---

1. तर्कसंग्रहः– पृ.–142
2. वेदान्तपरिभाषा– पृ.10

कारणतानिरूपितकार्यतायां प्रमात्वावच्छिन्नत्वाभावात्। एकाश्रयाश्रितावच्छेद्यावच्छेदकयोः समनियतत्वनियमाङ्गीकारात्। कारणलक्षणे व्यापारवत्त्वस्य न निवेशः वैयर्थ्यात्। यत्तु लिङ्गपरामर्शेऽतिव्याप्तिवारणाय व्यापारवत्त्वं निवेशनीयमिति शिखामणिकृद्भिरुक्तं, यच्चेन्द्रियसन्निकर्षेऽतिव्याप्तिवारणाय तन्निवेश इति आशुबोधिन्यामुक्तं तत्तु चिन्तनीयमेव। परामर्शकारणत्वस्यैव खण्डनीयतया व्यापारवत्वांशानिवेशेऽपि तत्रातिव्याप्त्यभावात्। इन्द्रियसन्निकर्षस्य तु प्रमाणत्वाभ्युपगमेऽपि क्षत्यभावात्। प्राचीनैः नैयायिकैरपि तथाभ्युपगमात्। तथा हि न्यायभाष्यम्–

"यदा सन्निकर्षस्तदा ज्ञानम्, यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्।" इति। अयमर्थः–यदा विषयेन्द्रियसन्निकर्षः प्रमाणं तथा विषयज्ञानं प्रमा यदा तु विषयज्ञानं प्रमाणं तदा विषयधर्मिकहानोपादानोपेक्षाज्ञानं प्रमा इति। "ननु चैतन्यमनादि तत्कथं चक्षुरादेः तत्करणत्वेन प्रमाणत्वमिति" ग्रन्थविरोधः, चक्षुरादेः प्रमाण्यानुपपत्तिशङ्कया चक्षुरादेः प्रामाण्याभ्यूपगमसूचनात् इति चेत्, अस्वरसूचनायैव आदिपददानात्। तथा च– इन्द्रियसन्निकर्षस्यैव प्रमाणत्वं ग्रन्थकाराभिप्रेतम्।

अत एव तदव्यवहितोत्तरमेव "तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जन्यत" इति ग्रन्थकृदुल्लेखः संगच्छते। अन्यथा इन्द्रियादिना जन्यते इत्येवोक्तं स्यात्। गौणकरणत्वाभिप्रायेण वा "कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्त्वम्" इति ग्रन्थः।

**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥**[1]

अयं भावः– अज्ञानावस्थायां यथा अहं गौरः अहं कृशः इत्यादिज्ञानमपि प्रमा अभ्युपेयते, तथा ब्रह्मसाक्षात्कारात् प्राक् जायमानम् 'अयं घटः अयं मठः' इत्यादिज्ञानमपि प्रमैव भवति। ज्ञाने प्रमात्वम् अप्रमात्वञ्च आपेक्षिकमभ्युपयते। ऐकात्म्यज्ञानापेक्षया अयं घटः इत्यादिज्ञानानाम् अप्रमात्वेऽपि शुक्तौ 'इदं रजतं', इति शुक्तिरूप्यज्ञानापेक्षया प्रमात्वमव्याहतम् इति गूढाशयः।

---

1. वेदान्तपरिभाषा–पृ.19

**अथ वेदान्ते आगमो निरूप्यते यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद् वाक्यं प्रमाणम्।**[1]

ननु शब्दनिष्ठतादृशतात्पर्यविषयत्वासम्भवात् संसर्गे तदसम्भवेन लक्षणासम्भव इति चेत्, शक्तिरूपायाः शब्दनिष्ठायाः निरुक्तयोग्यताया जनकतारूपत्वेन तादृशजनकता निरूपितजन्यतावत्प्रतीतिविषयत्वस्यैव तात्पर्यविषयत्वपदेन विवक्षितत्वात्। तथा च यद्वाक्यनिष्ठतात्पर्यघटकप्रतीतिविषयः संसर्गः न प्रमाणान्तरेण बाध्यते, तद्वाक्यमागमप्रमाणमित्यर्थः।

---

1. वेदान्तपरिभाषा–पृ.148

# विशिष्टाद्वैतसिद्धान्ते शब्दप्रमाणम्

**आलोककुमारः**

विशिष्टाद्वैते पदार्थानां विभाजनं द्वाभ्यां प्रमाणप्रमेयभेदाभ्यां कृतमस्ति। प्रमाणं प्रपूर्वकमाधातोः भावे करणे वा ल्युटि सति प्रमाणशब्दो निष्पद्यते। कस्यचिदन्यस्य मते करणे ल्युटि सति प्रमितिकरणं प्रमाणं भवति। प्रायः सर्वे दार्शनिकाः प्रमतिकरणं प्रमाणमित्येवाधिक्येन प्रमाणशब्दं करणे ल्युटि विधाय व्युत्पादयन्ति। येन यथार्थज्ञानं प्राप्नोति तदेव प्रमाणं कथ्यते। यद्यपि विभिन्नदर्शनेष्वाहत्य अष्टप्रमाणानि स्वीक्रियन्ते विशिष्टाद्वैतसिद्धान्ते तु प्रत्यक्षम् अनुमानं शब्द इति त्रिविधानि प्रमाणानि स्वीकृतानि। अत्र शब्दप्रमाणविषये विविच्यते–

महर्षिगौतमः आप्तपुरुषवचनं शब्दप्रमाणत्वेन स्वीकरोति, आप्त–पुरुषश्च यथार्थवक्ता भवति। किन्तु एषा सामान्या वार्ता यत् केवलं वचनं वाक्यं वा पदार्थज्ञानाय न स्वयं पर्याप्तं भवति। न च पदार्थज्ञानं वाक्यगतशब्दानां प्रत्यक्षमेव कारयति पश्चादर्थं बोधयति। इत्थं यदा शब्दज्ञानप्रामाण्यमाप्तवाक्ये आधृतं तदा तद् वाक्यार्थावबोध एव शाब्दज्ञानमस्ति। तस्य शाब्दबोधस्य करणं शब्दज्ञानम्। अतः एव शब्दप्रमाणं विद्यते। प्रपूर्वकमाधातोः भावे ल्युट्प्रत्ययश्चेत् क्रियते तदा सिद्धः प्रमाणशब्दः प्रमार्थकोऽर्थात् ज्ञानरूपमेव प्रमाणं भवति। फलरूपज्ञानं तस्य शाब्दबोधरूपफलस्वरूपसाधनं शब्दज्ञानं यत् श्रोतरि उत्पद्यते। इत्थं शब्दप्रमाणे शब्दज्ञानं करणं वाक्यार्थज्ञानं व्यापारः शाब्दबोधश्च फलं स्वीक्रियते।[1]

---

1. न्यायसिद्धान्तमुक्तावली– पृ. 281

अत्र प्रमाता आप्तवाक्यानि श्रुत्वा तत्र वृत्तिज्ञानं विधाय[1] तत् प्रकारकतद्विशेष्यकवृत्तिज्ञानसहकृतपदार्थोपस्थितिरूपे कारणे विद्यमाने शाब्दबोधरूपं कार्यं फलं प्राप्नोति। एतस्य न प्रत्यक्षेऽन्तर्भावः। प्रत्यक्षस्य इन्द्रियार्थसन्निकर्षजन्यत्वात्। शब्दस्य तथाभावात्। न चानुमानेऽन्तर्भावः अनुमानस्य व्याप्तिज्ञानजन्यत्वात्। न च शब्दे व्याप्तिज्ञानं सम्भवम्।

विशिष्टाद्वैतसिद्धान्ते अनाप्तानुक्तं यद्वाक्यं तत् शब्दप्रमाणं भवति। शाब्दबोधे च अनाप्तानुक्तवाक्यमेव करणमङ्गीकृतम्। यद्यपि नैयायिकप्रभृति-दार्शनिकाः आप्तवाक्यं शब्दः इत्युक्तवन्तः। अनीश्वरवादिदर्शनेषु मीमांसादिषु वेदोऽपौरुषेयः स्वीकृतः तस्य केनाप्यनुक्तत्वात् आप्तानुक्तत्वं स्वतः सिद्ध्यति। तेन तत्र शब्दप्रामाण्यानापत्तिरायाति। पूर्वोक्तलक्षणस्वीकारे तु न काप्यनुप-पत्तिरनाप्तानुक्तत्वं वेदे आयात्येव। फलतः तस्य न प्रामाण्यानुपपत्तिरायाति। वेदस्तु स्वतः प्रमाणत्वेन तिष्ठति। ब्रह्मसूत्रकारो बादरायणोऽपि "शास्त्रयो-नित्वात्" इति सूत्रे वेदानां स्वतःप्रामाण्यमङ्गीकृतवान्। आचार्यबुच्चिवेंकटाचार्यैः स्वग्रन्थे वेदान्तकारिकावल्याम् उक्तं–

**आकाङ्क्षादिकमेतच्च शाब्दबोधैककारणम्।**
**तद्विचारोऽत्र संक्षिप्तो ग्रन्थविस्तरभीरुणा।।[2]**

**मुख्यौपचारिकत्वाभ्यां स शब्दो द्विविधो मतः।**
**अभिधा मुख्यवृत्तिः स्याद् वृत्तिरन्यौपचारिकी।।[3]** इति

आकाङ्क्षादिकमिति। योग्यतासंनिध्यादिरादिपदार्थः, शाब्दबोधेति शब्देन शाब्दप्रमितौ जनयितव्यायामाकाङ्क्षायोग्यता संन्निध्यादयः सहकारिण इत्यर्थः शब्दस्य प्रभेदमाह मुख्येति। मुख्य औपचारिकश्चेति शब्दो द्विधा तत्राभिधावृत्या बोधको मुख्यः यथा– घटशब्दः कलशबोधकः। तदन्यया गौण्यादिकया बोधक औपचारिकः यथा–पुरुषोत्तमे मुख्यवृत्तस्य भगवच्छब्दस्यान्यत्र देवतान्तरादौ तद्गुणलेशयोगात् प्रवृत्तिः।

---

1. वेदान्तकारिकावलीविमर्शः पृ. 10
2. वेदान्तकारिकावली, कारिका. पृ. 12
3. वेदान्तकारिकावली, कारिका. पृ. 13

**शरीरवाचकाः शब्दाः शरीरिकृतवृत्तयः।**
**सर्वशब्दैकवाच्यत्वं हरेरिति गदिष्यते॥[1]**

लोके हि शरीरवाचकाः शब्दाः शरीरिपर्यन्तमर्थं बोधयन्ति। तथाहि– देवत्वमनुष्यत्वपुंस्त्वस्त्रीत्वादयो न जीवधर्माः अपितु शरीरधर्मा इति सर्वसंप्रतिपन्नम्। तथाहि 'देवो वन्द्य' इत्यादौ देवादिशब्दा न शरीरमात्रबोधनेन विरतव्यापारा भवन्ति। किन्तु तच्छरीरात्मनि पर्यवस्यन्ति। तत्र च निदानं देवादिशरीराणामात्मानं प्रत्यपृथक्सिद्धविशेषणत्वमेव, किं चाकृत्यधिकरणन्यायेन गवादिशब्दा गोत्वे शक्ता इत्यपि निर्विवादम्। तथापि ते गवादिव्यक्तिबोधका इत्यपि सर्वसंप्रतिपन्नम्। तत्रापि जातिव्यक्त्योरपृथक्सिद्धः संबन्ध एव निदानम्, अपि च शुक्लादयः शब्दाः रूपवाचका अपि। शुक्लः पटः इत्यादौ गुणिसामानाधिकरण्येन प्रयुज्यमाना गुणिपरा इत्यपि सर्वसंप्रतिपन्नम्।

तत्रापि गुणगुणिनोरपृथक्संबन्ध एव निदानम् एवमत्रापि भगवतोऽपृथक्सिद्धविशेषणभूतचिदचिद्वाचकाः सर्वे शब्दाः प्रकारिणि भगवति मुख्यैव वृत्त्या बोधका इति।

एवं च भगवतः सर्वशब्दवाच्यत्वं सिद्धम्। अत एव "सर्वे वेदा यत्पदमामनन्ति" "स ब्रह्मा स शिवः सेन्द्रः" "तदेवाग्निस्तद्वायुः" "ज्योतिषिं विष्णुर्भुवनानि विष्णुः" इति च श्रुतिस्मृतीतिहासेषु गीयत इत्यवगन्तव्यम्।

---

1. वेदान्तकारिकावली, कारिका. पृ. 14

# मीमांसादर्शनदिशा वेदस्य अपौरुषेयत्वविचारः

सुशीलकुमारः

चराचरमिदं जगत् स्थूलं सूक्ष्ममिति मुख्यतो द्विधा विभक्तम्। तदीयं स्थूलत्वं चर्मचक्षुर्बोध्यम् सूक्ष्मत्वञ्च ज्ञानचक्षुर्गम्यम्। प्रत्यक्षदृष्ट्या तदीया स्थूलतैव सर्वस्वमिति प्रतीयते परं वस्तुतः सैव न सर्वस्वायते। तस्य सूक्ष्मं स्वरूपं स्थूलस्वरूपतोऽपि महीयः। जगतः स्वरूपद्वये एकम्– 'अन्तर्जगत्' द्वितीयञ्च बहिर्जगदिति वक्तुं शक्यते। द्वयोरेतयोः संकलितं स्वरूपमेव वास्तविकं जगत्। तथाऽनयोरस्मिन् संकलन एव जगतः पूर्णतावतिष्ठते। बाह्यजगत् अन्तर्जगतः स्वरूपवहनकार्यं करोति। तस्य (अन्तर्जगतः) विकासं समृद्धिं पुष्टिञ्च अन्तरा बाह्यजगद् उन्नतेराशा आधारभूमिं विना निर्मितं भवनमिव निराधारा विद्यते। मानवो नामास्यान्तर्जगतो विकासस्य प्रतीकभूतः। अत एव जगतो जीवकोटौ स सर्वोत्कृष्टत्वेन परिगण्यते। स्थूलशरीरव्यवहारयोः सत्यामप्यन्यजीवैः समानतायां मानवोऽनेनैव वैशिष्ट्येन विश्वस्य नियामकतां बिभर्ति। मानवता नामास्यैव विकसितस्वरूपस्य विचारमय्यभिख्या। आत्मा बुद्धिः हृदयञ्चेति त्रीण्यस्य प्रमुखान्यङ्गानि, येषु प्रथमस्याङ्गस्य पुष्टिरेव नैतिकतायाः, द्वितीयस्य विकासो विद्वत्ताया एवं तृतीयस्योन्नतिः सहृदयतायाः पराकाष्ठाऽस्ति। किन्तु त्रयाणामङ्गानां विकासस्याप्येकः सीमा वर्तते एकश्च नियतः पन्थाः। मानवस्य बाह्यजगतो नियन्त्रणार्थमेकः शासको भवति। स हि शासकस्तस्य स्वच्छताया व्यवस्थितेर्विकासस्य च विषये सम्यगवधत्ते। यस्य कस्यापि जीवस्योच्छृङ्खलत्वं तस्य सह्यं न भवति। एवमेवान्तर्जगतोऽपि नियामकस्य पर्याप्तावश्यकता। तस्य कतिपयेषु च क्षेत्रेषु पूर्वं निर्दिष्टान्नियामकादप्यधिकं महत्त्वं विद्यते।

धर्मो ह्यस्य प्रतिपाद्यः। वेदोऽस्य मूलम् उक्तं च स्मृतौ

"वेदोऽखिलधर्ममूलमिति।" यत्रारूढमिदं स्वप्रभावेणाधिकं[1] चमत्कुरुते। साक्षात्सम्बद्धत्वेन हेतुना तेनालौकिकज्ञाननिधिनाऽपि मुक्तहस्तेन सता शक्तेर्योग्यतायाश्चात्र यावान् सञ्चारः कृतः न तावान् अन्यस्यां कस्याञ्चिद् विचारधारायाम्। अत एवास्य शास्त्रत्वं सर्वत आधिक्येन विकसितं परिपुष्टञ्च वर्तते। एवञ्चास्येदं महत्त्वं[2] 'शास्त्रप्रमुखमि' त्यभिदधताचार्यशंकरेणापि समर्थितम्।

"निरपेक्षो रवः श्रुतिः" इति श्रुतेः लक्षणं भवति। श्रुतेः अपरनाम वेदः। स च शब्दाराश्यात्मकः। तस्य वेदस्य नित्यत्वं प्रायः सर्वे स्वीकुर्वन्ति। परन्तु शब्दस्य नित्यत्वानित्यत्वविषये दार्शनिकानाम् अस्ति महती विप्रतिपत्तिः। तत्र वैयाकरणाः मीमांसकाश्च शब्दस्य नित्यत्वम् अभ्युपगच्छन्ति। अतः एतेषां नये वेदः अपौरुषेयः शब्दस्य अनित्यत्वस्वीकर्तृणां नैयायिकानां नये कण्ठताल्वाद्यभिघातेन शब्दस्य उत्पद्यमानत्वात् शब्दराश्यात्मको वेदः ईश्वरकर्तृकः। वेदस्य ईश्वरकर्तृकत्वात् वेदः पौरुषेय इति नैयायिकानां सिद्धान्तः। वेदस्य पौरुषेयत्वे अनुमानं प्रदर्शयन्ति नैयायिकाः- विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवत्। नैयायिकैः वेदस्य पौरुषेयं यत् साधितं तन्न युक्तम्। यतः वेदस्य गुर्वध्ययनपूर्वकत्वात् अपौरुषेयत्वं साधयितुं शक्यते। वेदस्यापौरुषेयत्वविचारप्रसङ्गे शास्त्रकाराणाम् इयं स्थितिः तत्राद्वैतिनः वेदस्य पौरुषेयत्वं न मन्वते। तेषां मते पौरुषेयत्वं नाम प्रमाणान्तरसाहाय्येन पुरुषस्य कर्तृत्वमिति। तादृशः वेदः नास्ति। अर्थात् न केनचित् अपि पुरुषेण प्रमाणान्तरेण सापेक्षः वेदः विरचितः। अतः वेदः अपौरुषेयः। एवं सत्यपि वेदान्तिनोऽनेन सममीश्वरस्य रचयितृरूपेण सम्बन्धं स्वीकुर्वन्ति- इदमेव तेषां मीमांसया सह वैमत्यमस्ति।

नास्तिकदर्शनानां विषये किमिव वक्तव्यम्? तेषामेतद्विषये प्रत्येकमुक्तिस्तर्को वा उपहसनीयः, न तु विचारपूर्णः। अत एव निरर्थको वाग्जालमात्रमिति वदद्भिस्तैर्वेदस्याप्रामाण्यं घोषितम्। इयं भिन्नानां पुरुषाणां कृतिरिति तेषां वक्तव्यम्। यानि वेदभागानां काठक-कौथुम-कलापकादीन्यभिधानानि सन्ति तानि खलु कर्त्राश्रितानि सन्ति। तात्पर्यमस्ति

1. मीमांसाशास्त्रतेजोभिर्विशेषणोज्ज्वलीकृते। (आचार्यभट्टः-श्लोकवार्तिकम् पृ. 1)
2. ननु शास्त्रप्रमुख एव प्रथमे पादे (शांकरभाष्यम् 3/3/53, पृ. 849)

यत् कठकलापादिभिराचार्यैस्ते भागा रचिता इति। एभिः प्रतिपादितो ज्ञानराशिः कर्मजालञ्च ब्राह्मणानामुदरपूर्त्यै[1] पिटकमिति चार्वाकैरभिहितम्। इत्थं वेदविषये समुत्पन्ना विचारणा मीमांसकैः खण्डिता। तेषामेव सामर्थ्यस्य प्रभावो येन भयङ्करेऽपि काले तैर्वेदस्य निरपेक्षं प्रामाण्यं स्थापितं रक्षितुं प्रयतितञ्च।

तैरुक्तम्–वेदोऽपौरुषेय इति। यद्यस्य रचयिता कश्चन पुरुषो भवेत् ततः कथमिव सम्भाव्यते यदेतादृशस्य ग्रन्थराशेः प्रणेता पुरुषविशेषोऽस्माकं पूर्ववर्तिभिर्न स्मर्यते।

केवलं तद् वाङ्मयमस्ति। अस्मादेव कारणाद् अनुमानाश्रयेण ईश्वरो हिरण्यगर्भः प्रजापतिर्वा कर्तृरूपेण सम्बद्धः स्वीक्रियते–इदं नास्त्य-पेक्षणीयम्। सर्वाण्यनुमानानि सत्यान्येव न भवन्ति सत्स्वप्यनेकेषु प्रमाणेषु प्रयुज्यमानेषु। यदि सर्वाण्यनुमानानि सत्यानि तर्हि "स्वस्त्रिया सम्भोगो न कार्यः, स्त्रीत्वात्, परस्त्रीवत्" इदृशानामप्यनुमानानां प्रामाणिकत्वं स्यात्। अनुमानानामीदृशदोषग्रहणायैव हेत्वाभासाः परिकल्पिताः। हेतवो यत्र दूषिता भवन्ति तादृशान्यनुमानानि प्रामाणिकतां न बिभ्रति। वेदस्यापौरुषेयत्वसिद्धयेऽपि यादृशमनुमानं विहितं तदुपाधिग्रस्तमिति। साध्ये सदपि यत् साधने न तिष्ठति स उपाधिरित्युच्यते। अत्रापि जन्यमानान्तरमूलकत्वस्मर्यमाणकर्तृत्व-रूपमुपाधिद्वयम्, यच्च पौरुषेयवाक्यं सदपि वेदवाक्ये न तिष्ठति। अयमभिप्रायः–यत् पौरुषेयं भवति तत् परतः प्रमाणं भवति, तस्य कर्त्ताऽपि स्मर्यते। परमेतद्द्वयमत्र नास्ति। अत एवैतदनुमानं दोषग्रस्तत्वेन वेदस्यापौरुषेयतां साधयितुं न क्षमम्।

नास्तिकमतं– कठकलापादीनां कर्तृरूपेण प्रस्तुतीकरणमिति सङ्गतं नास्ति। एतेषां प्रकरणानामाख्या न हि रचनाकर्तृत्वमूलाः किन्तु प्रवचन-कर्तृत्वमूलाः। तत्तद्भागस्य सर्वोत्तममसाधारणं वाऽध्ययनं कठेन वा कलापेन कृतम्। अत एव "कठेन प्रोक्तम्" काठकम्। एतत्पाणिनिप्रतिपादनानुसारं नामकरणानीमानि प्रवचननिमित्तकानि सन्ति। भगवतः पाणिनेः "तेन प्रोक्तम्" इति शासनमिदमस्य साक्षिभूतम्। इयमेव स्थितिः बबरः प्रावाहणिरकामयत, वनस्पतयः सत्रमासत, सर्पाः सत्रमासत, गावो वा इत्यादिवाक्यानामस्ति। नास्तिकाः समालोचकाः प्रावाहणिः कस्यचित्पुरुषविशेषस्य वाचकं परिकल्प्य

1. बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता।

वेदं पुरुषसम्बद्धं, अत एवानित्यं प्रावाहणेः पूर्ववर्तिनं मन्वते, परं 'प्रावाहणि' इत्यस्यार्थः पुरुषविशेषो नास्ति, अपि तु प्रवहणकर्त्ता इत्यस्ति। वनस्पतयः सत्रमासत, सर्पाः सत्रमासत एवामादीनि वाक्यानि नास्तिकाः 'उन्मत्तप्रलाप' इत्युक्त्वाऽपि वेदस्य प्रामाण्यं व्याहन्तु प्रयतन्ते परमेतत् सर्वं तेषां भ्रान्तविचाराणां निदर्शनमात्रम्। इमानि सर्वाण्यर्थवादवाक्यानि सन्ति, पुरुषेषु उत्साहस्य प्ररेणानां वा सञ्चार एषामुद्देश्यम्। अयमभिप्रायः, वनस्पतिभिः सर्पैरपि सत्रं कृतञ्चेत् मानवेन त्ववश्यं कर्त्तव्यमिति। ईदृशो भ्रान्ता विचारा मीमांसकानां समक्षमुपस्थातुं नाशक्नुवन्।

तैः पूर्णतया योग्यतया वैदुष्येण चैषां विचाराणां खण्डनं कृतम्। वेदः पौरुषेय इति साधयित्वा तैरेतन्निर्दिष्टं यत्कथञ्चिदपि पुरुषगतदोषाणां समावेशोऽत्र न भवितुमर्हतीति। वस्तुत एतावतोऽक्षय्यस्य ज्ञानराशेः रचना केनापि पुरुषविशेषेण सम्भाव्यो नास्ति। पूर्वाभिहितानुमानप्रकार इव वेदापौरुषेयतायाः साधकोऽयमनुमानप्रकारो नास्ति दोषग्रस्तः, यथा–

**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**[1]
**वेदाध्ययनसामान्यादधुनाध्ययनं यथा।।** इति।

इदं लोकसिद्धमपि। यथाद्यत्वेऽपि कमपि वेदज्ञं तस्य वेदाध्ययनविषये पृच्छामो वयम्, तदा स स्वकीयगुरुपरम्परां वर्णयति। यदि पुरुषविशेषरूपेण ईश्वरोऽपि कल्प्यते, ततस्तेनेश्वरस्य किमपि गौरवमथवा वेदस्यैव गौरव-मुपजायते। सर्वज्ञेनेश्वरेण कथमिव वेदरचनायां प्रवृत्तेन भाव्यम्? यदि कश्चित् सम्बन्ध इष्ट एव चेत् ततः स उपदेशकरूपेण कर्तुं शक्यते। योगदर्शने वेदं गुरूणां गुरुरित्यभिधीयते।

अपौरुषेयतां प्रसाध्य मीमांसकैः स्वकीयं महल्लक्ष्यं साधितम् नास्त्यत्र सन्देहः। यदि पुरुषस्य केनापि प्रकारेण प्रवेशोऽत्र स्वीक्रियते ततः पुरुषसम्बन्धभवा अनेके दोषा अत्र प्रविष्टा उपलभ्येरन्, येन नास्तिकैरस्य व्यापकं प्रामाण्यमुच्छिन्नं कृतं भवेत्। परं विचारकुशलैरमीभिस्तदर्थमवसरो न दत्तः। सर्वाश्चाशङ्का भ्रान्तयश्च समूलोच्छेदमुपशमिताः। इदमेवास्त्यस्या अपौरुषेयताया रहस्यमस्यावदानञ्चेति।

1. मीमांसादर्शनम् पृ. 202

# मीमांसादर्शने शब्दप्रमाणम्

सन्दीपकुमारः

भारतीयदर्शने प्रमाणस्य महत्त्वमनेनैव स्पष्टं भवति यत् आचार्य गौतमः निःश्रेयसं ज्ञातुमावश्यकपदार्थानामाद्यमिदं प्रमाणं उल्लेखयति। प्रमाणशब्दः 'प्र'उपसर्गपूर्वकात् माङ् माने धातोः ल्युटि प्रत्यये सति निष्पद्यते। प्रमाणशब्दस्य अर्थद्वयं भवति– प्रमा, प्रमायाश्च करणम्। यदा ल्युट्प्रत्ययः भावे अर्थे भवति चेत् प्रमाणशब्दः प्रमार्थकः भवति। यतो हि भावप्रत्ययः प्रकृत्यर्थकः एव। करणार्थे ल्युटि सति प्रमाणशब्दः प्रमायाः करणम् इत्यर्थकः भवति। एवमुभयेऽपि अर्थे विद्यमाने सति प्रमाणशब्दः प्रमायाः करणमित्यर्थे एव प्रयुज्यते आधिक्येन।

मीमांसाशास्त्रे अज्ञातार्थज्ञापकं ज्ञानं प्रमाणम् इति स्वीक्रियते। कुमारिलपार्थसारथिमिश्रौ ह्येतत्प्रतिपादितवन्तौ यत् प्रमाणम् अग्रहीतग्राही सदपि कारणदोषात् बाधकज्ञानाच्च रहितं भवेत्।[1]

गुरुमतानुयायिनः मीमांसकाः अनुभूतिमेव प्रमाणम् मन्वन्ते। वेदान्तशास्त्रेऽपि अग्रहीतग्राहित्वमेव प्रमाणस्य आधारतत्त्वमङ्गीकृतमस्ति।

**प्रमाणभेदाः–**

प्रमायाः प्रमाणस्य च स्वरूपेण सह प्रमाणानां संख्यायाम् अपि भारतीयदार्शनिकाः अनेकधा विभक्ताः सन्ति।

---

1. तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम्।
अदुष्टकारकाब्धं प्रमाणं लोकसम्मतम्।। श्लो. वा.
एतच्च विशेषणत्रयमुपादानेन सूत्रकारेण
कारणादोषबाधकज्ञानरहितम् अगृहीतग्राहिज्ञानं
प्रमाणम् इति प्रमाणलक्षणं सूचितम्।। शा. दी.

1. **चार्वाकः**– प्रत्यक्षम्

2. **बौद्धः**– प्रत्यक्षम्, अनुमानम्[1]

3. **वैशेषिकः**– प्रत्यक्षम्, अनुमानम्

4. **सांख्यः**– प्रत्यक्षम्, अनुमानम्, शब्दः[2]

5. **योगः**– प्रत्यक्षम्, अनुमानम्, शब्दः

6. **न्यायः**– प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्[3]

7. **मीमांसा ( प्रभाकरः )**– प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः

8. **मीमांसा ( भाट्टः )**– प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः, अनुपलब्धिः[4]

9. **वेदान्तः**– प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः अनुपलब्धिश्च

10. **पौराणिकः**– प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः, अनुपलब्धिः, सम्भवः, ऐतिह्यम्[5]

11. **जैनः ( अकलंकानुसारम् )**– प्रत्यक्षम्, परोक्षम्[6]

---

1. प्रमेयद्वैविध्याद् प्रमाणद्वैविध्यम्।
2. दृष्टमनुमानमाप्तवचनं सर्वप्रमाणसिद्धत्वात्।
   त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि।। सां. का.
3. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि।
4. जैमिनेः षट् प्रमाणानि चत्वारि न्यायवादिनः।
   सांख्यस्य त्रीणि वाच्यानि द्वे वैशेषिकबौद्धयोः।।
5. प्रत्यक्षमेकं चार्वाकाः कणादसुगतो पुनः।
   अनुमानञ्च तञ्चापि सांख्याः शब्दश्च ते उभे।
   नैयायिकदेशिनोऽप्येवमुपमानञ्च केवलम्।
   अर्थापत्या सहैतानि चत्वार्याहुः प्रभाकराः।।
   अभावषष्ठान्येतानि भाट्टवेदान्तिनस्तथा।
   संभवैतिह्ययुक्तानि इति पौराणिका जगुः।। वेदान्तकारिका
6. जैनन्यायः पृ. 113

**12. वैयाकरणाः– प्रत्यक्षम्, परोक्षम् (दश भेदाः)**[1]

## मीमांसादर्शने शब्दप्रमाणम्

ज्ञानस्य विषये परम्परायाः अपि महत्त्वं भवति परम्परायाश्च वाहकः शब्दः भवति। इदमपि अस्ति तथ्यं यदयं शब्देन प्रवर्तितः ज्ञानराशिः अलिखितः एव श्रुतिपरम्परया वंशानुवशं वितीर्णः अभवत्। अथ च मातृकासु ग्रथितः अभवत्। जगति ऋग्वेदः सर्वप्राचीनः स्वीक्रियते तथैव शब्दस्य समस्यायाः समाधानं चिन्तयतः ध्यानं वेदेन आकृष्यते चेन्नेयमसगंतिः।

भारतीयदर्शनं वैदिकमवैदिकञ्चेति द्विधा विभक्तम् अस्ति। अवैदिकप्रतिनिधयः चार्वाकबौद्धजैनाः शब्दस्य प्रामाण्यं नोररीकर्वन्ति अथ च वैदिकाः औलूक्याः शब्दं स्वतन्त्रप्रमाणत्वेन स्वीकुर्वन्ति।

व्युत्पत्तिदृष्ट्या शब्दः ध्वनिपर्यायः (शब्दयति)। लोके तु पदपर्यायः शब्दः। अथवा यस्यार्थबोधः भवति सः शब्दः। वैय्याकरणसम्प्रदाये सुबन्तः तिङन्तः वाऽपि विभक्त्यन्तः शब्दः पदं भवति। ज्ञानमीमांसाप्रसंगे शब्दो नाम प्रमाणविशेषः। एतत्स्वरूपे एव शब्दे अत्र चर्चितं भविष्यति। सामान्यस्तु उच्चरितः, परस्परसाकांक्षः, परस्परान्वययोग्यार्थप्रतिपादकः परस्परसन्निहितञ्च पदसमूहः वाक्यमित्यभिधीयते। यथार्थोपदेष्ट्रणा जनेन प्रयुक्तानि वाक्यानि एव शब्दप्रमाणमाख्यायन्ते।[2] शब्दप्राणस्यापि लक्षणे अन्यप्रमाणसामान्य-लक्षणमिव वैमत्यं दृश्यते विद्वत्सु।

मीमांसादर्शने ज्ञातशब्दात् पदार्थस्य यः स्मरणात्मको बोधः तदनु च यद् वाक्यार्थज्ञानं तत् शब्दप्रमाणमित्युच्यते। मीमांसासूत्रकृता ह्येतत् प्रतिपाद्यते स्वशास्त्रे शब्दप्रमाणं विवेचयता यत् शब्दस्य (वेदवाक्यस्थस्य प्रत्येकपदस्य) स्व-अर्थेन सह स्वाभाविकः सम्बन्धः भवति। (धर्मत्वात्) यथार्थज्ञानसाधनभूतत्वात् शब्दः वेदात्मकः उपदेशात्मकश्च भवति।

---

1. वा.प. परमलघुमञ्जूषा
2. आप्तवाक्यं शब्दः, आप्तस्तु यथाभूतस्यार्थस्योपदेष्टा पुरुषः। वाक्यं त्वाकांक्षायोग्यतासन्निधिमतां पदानां समूहः।। तर्कभाषा पृ. 149

अबाधितत्वात् निरपेक्षविषयकत्वाच्च बादरायणः तत् प्रमाणं वक्ति।[1] मानमेयोदये शब्दप्रमाणप्रतिपादनप्रसंगे तल्लक्षणं दीयते–

**"तत्र तावत्पदैर्ज्ञातैः पदार्थस्मरणे कृते।**
**असन्निकृष्टवाक्यार्थं ज्ञानं शब्दमितीर्यते।।"**

अर्थात् ज्ञातपदैः पदार्थे स्मृते सति यत् असन्निकृष्टार्थविषयकं यत् वाक्यार्थज्ञानं तन्नाम शब्दप्रमाणम्। भाष्यकृता प्रोच्यते–

**"शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्।"**
शां.भा. पृ. 37

चिदानन्दपण्डितः वार्तिकमनुसृत्य तदाशयमेव शाब्दसामान्यलक्षणं निर्दिशति– "विज्ञातेभ्यः पदेभ्यः पदार्थस्मृतिमुखेनासन्निकृष्टेऽर्थे यत् ज्ञानं तच्छाब्दम्" (नीति. पृ. 144)

पदैर्यत्पदार्थस्मरणं तदनु च यद्वाक्यार्थज्ञानं तदेव शाब्दं प्रमाणं दीयते। शबरस्वामी शब्दसंभवमप्रत्यक्षवस्तुविषयकं ज्ञानं शाब्दं भवति। भाष्यकारं स्पष्टीकुर्वन् कुमारिलः आह–

शब्दप्रमाणं तत्कथनम् अस्ति यत् श्रुत्वा शब्दानामर्थजः श्रोता तादृक् तथ्यमवगच्छति यत् श्रोतुः प्रत्यक्षात् परं भवति।[2] पार्थसारथिमिश्रः इदं किञ्चिद्विशेषयति– अनेन प्रमाणेन यत् ज्ञानं भवति तत् अज्ञातपूर्वं स्यात्।[3] कुमारिलमते शब्दजन्यं ज्ञानं द्विविधं भवति– **1. पौरुषेयम् 2. अपौरुषेयञ्चापि।**

पौरुषेयशाब्दज्ञानं सांसारिकाप्तपुरुषाणां कथनेषु आधृतं भवति अपौरुषेयञ्च नित्यम् अनादिवाक्यरूपं वेदेषु निहितम् अस्ति।

---

1. औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थे ऽनुपलब्धे तत् प्रमाणं बादराणस्यानपेक्षत्वात्।। मी. सू. 1/1/5
2. शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्। शां.भा. पृ. 105
3. विज्ञाताच्छब्दात् पदार्थाभिधानद्वारेण यत् वाक्यार्थविज्ञानं तच्छब्दं नाम प्रमाणम्, असन्निकृष्टग्रहणं च पूर्ववत्तद्रूप्यतद्विपर्ययपरिच्छेदनिरासार्थम्। शा.दी.

अत्रेदमपि विशिष्यते यत् मीमांसका वेदान् ईश्वरकृतान् न मन्वते। ईश्वरस्य अस्तित्वमपि ते निराकुर्वन्ति। अतः वेदाः तन्मतानुसारम् अनादि अपौरुषेयं शाब्दज्ञानमस्ति। नैयायिकानां मतम् अत्र भिन्नमस्ति। ते वेदान् ईश्वरकृतान् मन्वते। तैः शाब्दज्ञानं पौरुषेयमपौरुषेयञ्चेति नो विभक्तम्। ते वेदानपि आप्तपुरुषस्य ईश्वरस्य कथनं स्वीकुर्वन्ति। अतो नैय्यायिकमते वेदाः पौरुषेयाः सन्ति।

प्रभाकरमतेन लौकिकः अथवा पौरुषेयः शाब्दबोधः अनुमाने एव अन्तर्भवति अतः अपौरुषेयवैदिकवाक्यसंभूतं ज्ञानमेव शाब्दी प्रमा भवति। अवैदिकवाक्येषु अत्र प्रामाण्यं न स्वीक्रियते।[1]

पौरुषेयवाक्यानि तु यथार्थवक्तृणा उक्तान्येव प्रामाण्यम् अर्हन्ति किन्तु अपौरुषेयवाक्यानां तु स्वयंसिद्धप्रामाण्यम्। पदानाम् अर्थः पूर्वमेव ज्ञातः भवति इत्यतः तस्य प्रामाण्यं तु अनावश्यकप्रसंगः भवति। किन्तु तेषामेव ज्ञातपदानाम् अर्थसम्बन्धाश्रितवाक्यार्थस्य ज्ञानं नान्येन केनापि साध नेन शक्यम् इत्यतः स्वतन्त्रशब्दप्रमाणस्य स्थापना क्रियते। अयं वाक्यार्थः मीमांसकैः विशेषेणाभिनिविष्टः अस्ति।

वाक्यस्य आरम्भः वस्तुतः वर्णेभ्यः एव भवति। सर्वेऽपि शब्दाः वर्णात्मकाः एव भवन्ति। एते वर्णाः पदानामवयवभूताः एषां श्रुतिविषयगोचरी-भवनमेवार्थज्ञानस्य कृते साधनभूतम्। अस्माभिः शब्देन यः कश्चिदपि अर्थः अवगम्यते तत्र वर्णगता अर्थवत्ता एव कारणम् अस्ति। एतत् अर्थापत्तिप्रमाणेन ज्ञातं भवति। अन्यथा शब्दार्थानामनुपपत्तिप्रसंगः स्यात्। शब्दशक्तेरारंभः वर्णानां भिन्न-भिन्नशक्तिभ्यः भवति। एताः एव शक्तयः शाब्दज्ञाने साक्षात् कारणभूताः भवन्ति।[2]

मीमांसकानां सिद्धान्तोऽयमस्ति यत् शब्दमात्रेऽपि अर्थावबोधस्य स्वाभाविकशक्तिः विद्यते तत्र श्रोतरि बोद्धुं यत्नः सामर्थ्यं स्यान्नपि वा। जैमिनिः आचार्यः औत्पत्तिकसूत्रे (1/1/5) इदं स्फोटयति–

---

1. प्रकरणपंचिका पृ. 88.
2. S.N. Dasgupta, History of Indian Philosophy. Vol. 1, P. 395

**"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः ......"**

श्रोता शब्दश्रवणानन्तरमपि तावत् तस्यार्थग्रहणे असमर्थः भवति यावदसौ तत्र शब्दार्थयोः सम्बन्धं न जानाति यत् अस्मात् शब्दादयम् अर्थः बोध्यते इति। किन्तु श्रोतुरज्ञानस्य शब्दार्थयोः सम्बन्धे किञ्चिन्मात्रमपि प्रभावः न भवति। शब्दगता एव स्वाभाविकी अर्थावबोधशक्तिः शब्दार्थसम्बन्धः न तु ईश्वरस्य आश्रितः अस्ति न च परम्परया (यथा नैय्यायिकाः मन्वते)। केवलं व्यक्तिवाचकनाम्नां विषये एवं परम्परा आश्रीयते। अस्य सिद्धान्तस्य साक्षात् प्रभावः वैदिकविधीनां स्वतः प्रामाण्ये द्रष्टुं शक्यः। एतासां विधीनाम् अनुष्ठानेन एव अस्माभिः अन्यथा अज्ञातव्यफलानां प्राप्तिः भवति। नैय्यायिकानां विरुद्धं मीमांसकाः शब्दं नित्यं स्वीकुर्वन्ति। नित्येऽपि सति शब्दान् प्रकाशयितुं उच्चारणकर्तुः पुरुषस्य प्रयत्नस्य आवश्यकता भवति। नैय्यायिकाः पुरुषप्रयत्नं शब्दस्योत्पादकं मन्वते किन्तु मीमांसकाः प्रकाशकमात्रं स्वीकुर्वन्ति।

प्रभाकरः वेदविधीन् एव शब्दप्रमाणं मनुते, यथा– **"स्वर्गकामो यजेत"** अन्यस्थितिषु वक्तुः आप्ततायाः आधारेण तच्छब्दानां प्रामाण्यमनुमीयते। कुमारिल आप्तपुरुषमात्रस्य शब्दान् शब्दप्रमाणं स्वीकरोति।

# शब्दप्रमाणविमर्शः

सियंका शर्मा

**नमः प्रमाणमूलाय कवये शास्त्रयोनये।**
**प्रवृत्ताय निवृत्ताय निगमाय नमो नमः॥**

प्रमाणाद्धि प्रमेयसिद्धिः, प्रमेयं च वेदान्तानां ब्रह्म। तत्सिद्धिश्च शब्दप्रमाणान्नत्वितरप्रमाणेभ्यः[1] प्रत्यक्षाविषयत्त्वात्, लिङ्गाभावात् "तन्त्वौपनिषदं पुरुष" मित्यादिश्रुतिभ्यश्च। इत्यतः प्रत्यक्षादिप्रमाणान्तरप्रतिपादनं विहाय प्रकरणकाराः शब्दप्रमाणमेव निबबन्धुः।

प्रमाणव्यवस्था च लक्षणाधीना, तदुक्तम्–

**"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्।[2]" इति।**

अत आदौ शब्दप्रमाणलक्षणं विचार्यते। शब्दप्रमाणं नैयायिकैः साङ्ख्यैः तथा भाट्टैः वेदान्तिभिश्च स्वीक्रियते। प्रभाकरैस्तु शास्त्रस्यैव प्रामाण्यम्, लौकिकशब्दस्यानुमानविधया प्रामाण्यमिति स्वीक्रियते। काणादैश्चः शब्दस्यानुमानविधयैव सर्वत्र प्रामाण्यमुररीक्रियते। ग्रन्थकारैः सम्प्रदायसम्मतं शब्दप्रमाणलक्षणमेव निरटङ्क्‌ तथाहि–

**शब्दविज्ञानजा यार्थे सन्निकृष्टे सुनिश्चिता।**
**बुद्धिस्तच्छाब्दज्ञानं हि सङ्गिरन्ते विपश्चितः॥[3] इति।**

अत्रासन्निकृष्टपदं प्रमाणान्तरागोचरताबोधकम्। सूपसर्गघटितनिश्चित–पदेनासन्दिग्धाविपर्यस्तरूपमित्यर्थो लभ्यते। एवं च शब्दविज्ञानजं प्रमाणान्त–

---

1. "यथा शब्दान्मानसत्तत्वमीक्ष्यते"
2. चित्सुखी 2.12
3. शाब्दनिर्णयः–5.

रागोचरमर्थविषयमसन्धिग्धाविपर्यस्तज्ञानं शाब्दप्रमाणमिति फलितम्। प्रमाणपदं भावव्युत्पत्याश्रयणात् प्रमीयत इति प्रमितिपरं करणेऽपि प्रयुज्यते। शाब्दप्रमाण-मित्यत्र प्रमाणपदं प्रमितिपरमेव। ग्रन्थकारैरत्र शाब्दीप्रमाया एव लक्षणमुक्तम्।

ग्रन्थकारनिर्दिष्टमिदं शाब्दप्रमाणलक्षणं शाबरभाष्यस्थलक्षणसदृशम्। "शास्त्रशब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्।" इति हि शाबरभाष्यम्। प्रमाणान्तरानधिगतेऽबाधितेऽर्थे ज्ञापकं शब्दज्ञानजन्यमर्थज्ञानं शब्दप्रमाणमिति। अयं विशेषः– "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे" इति शाबरोक्ते लक्षणे सुनिश्चितपदं न दृश्यते। वार्तिककारैः भट्टाचार्यैः–"असन्निकृष्ट" पदेनैवा-धिगतत्वस्य बाधितत्वस्य च व्यावृत्तिरत्राभिप्रेतेत्युक्तम्–तथाहि

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।**
**ताद्रूप्येण गृहीतत्वं तद्विपर्ययतोऽपि च।।**[1] इति

शाब्दनिर्णयस्थलक्षणे सुनिश्चितेति पदसत्वात् असन्निकृष्टपदेन मानान्तराधिगतत्वयावृत्तिरेवात्राभिप्रेतेति टीकाकारैः श्रीमदानन्दबोधाचार्यैः व्याख्यातम्। "सुनिश्चितेति" पदेनाप्रामाण्यव्यावृत्तिरुक्ता। अप्रामाण्यं च मिथ्यात्वाज्ञानसंशयैः त्रिधा भिन्नम्। मिथ्याज्ञानसंशयानां मध्ये मिथ्यात्व-संशययोरेव दुष्टकारणात् सम्भवः इति, तयोः व्यावृत्तिः सुनिश्चितेति पदेन सूच्यते इति सूचनायैव टीकाकारैः "सुनिश्चिता असन्दिग्धाविपर्यस्त-स्वरूपेत्यर्थः" इति व्याख्यातम्। विपर्ययो मिथ्याज्ञानं तद्व्यावृतिः सुनिश्चितेत्यत्रोपसर्गभागेन सूचिता।

अज्ञानस्यानुत्पत्तिलक्षणाप्रामाण्यस्यानाद्यभावतया दोषादुत्पत्यसम्भवेन तद्व्यावृत्तिः "बुद्धि" रिति पदेनैव सिद्ध्यतीति तद्व्यावर्तकं पदान्तरं नापेक्षितमिति भावः। अज्ञानस्य दोषादुत्पत्यसम्भवश्च साम्प्रदायिकैरेवोक्तः। तदुक्तं भट्टवार्तिके–

---

1. "ताद्रूप्येण प्रतीतत्वं तद्विपर्ययतो पि च" इति वेदान्तकौमुद्याम् उद्धृतं वाक्यं लभ्यते। मूलं श्लोकवार्तिकम् – 1.2.167

**अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।**
**वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात्।।**
**अविज्ञाते तु दोषाणां व्यापारो नैव विद्यते। इति[1]।**

लक्षणेऽस्मिन् मतान्तरनिरासकानि त्रीणि विशेषणानि विद्यन्ते शब्दविज्ञानज्ञा, अर्थे, असनिकृष्टे इति। तैः क्रमशः शब्दस्यानुमानविधयैव प्रामाण्यं वदतां च बौद्धादीनां, विवक्षा शब्दार्थ इति च ब्रुवतां बौद्धादीनां तथा आप्तोपदेशः शब्द इति वदतां नैयायिकानां मतानि निवार्यन्ते। बौद्धानामिदं मतं वक्तुरर्थविषयविवक्षाप्रमाणयोः शब्दः प्रमाणं नार्थमात्र इति तदुक्तं धर्मकीर्तिना–

**नान्तरीयकताभावात् शब्दानां वस्तुभिः सह।**
**नार्थसिद्धिस्ततस्ते हि वक्त्राभिप्रायसूचकाः।।**[2] इति।।

अयं भावः– यदि शब्दस्यार्थे प्रामाण्यं तर्हि कस्मादनाप्तप्रणीताद् वाक्यतो नार्थनिश्चयः प्रवृत्तिसामर्थ्यं वा? यतोहि–

"नद्यास्तीरे पञ्च फलानि सन्ति" इत्याप्तानाप्तप्रणेतृकस्यास्य वचसः स्वरूपतो न कश्चन विशेषो दृश्यते। वक्ता तु शब्दाभिव्यक्तावेवोपयुज्यते न शब्दकार्ये। तथाहि–यथा–चक्षुष उन्मीलने सति स चक्षुः स्वसन्निकृष्टार्थ-प्रकाशने समर्थः स्वसम्बद्धमर्थं प्रकाशयति तथा शब्दोऽपि अर्थप्रकाशने समर्थश्चेत् वक्त्रा शब्दे उच्चरिते सति शब्दः स्वार्थं प्रकाशते। प्रकाशते चेदनाप्तवाक्याद् अपि अर्थनिश्चयो भवेत्। तथा च शब्देन नार्थसिद्धिः। एतदेव श्लोके पूर्वत्र दर्शितमुक्तम्– शब्दार्थयोः नान्तरीयकता भावात् शब्देन नार्थसिद्धिरिति। कथन्तर्हि शब्दश्रवणसमनन्तरं श्रोतुः प्रवृत्तिरिति चेद्, उच्यते शब्दाः वक्तृविवक्षां प्रतिपादयन्ति विनैवार्थव्यवहारहेतुमिति। एतदेव पूर्वत्रोक्तम्– शब्दा वक्त्र भिप्रेतं सूचयेयुरिति।[3]

---

1. श्लोकवार्तिकम्, 2.54
2. प्रमाणवार्तिकम्।
3. "विकल्पयोनयः शब्दविकल्पाः शब्दयोनयः। तेषामन्योन्यसम्बन्धे नार्थं शब्दाः स्पृशन्त्यमी।। न्या.म.पृ.–145"

**विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते।**
**अङ्गुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना॥**[1]

**वक्ता तु केवलं शब्दव्यक्तावेवोपयुज्यते।**
**ज्ञानन्तु शब्दमात्रेण निरपेक्षेण जन्यते॥**

**तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते।**
**ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः॥**

इत्यादिना। तस्मात् विवक्षां प्रमाणान्तरं वा शब्दाः प्रकाशयन्ति नार्थमात्रमिति प्राप्ते– अर्थ एव शब्दगोचरः न तु विवक्षा। अत्र समाधिरभिधीयते, पूर्वोक्तमतनिराचिकीर्षयैव संग्रहश्लोकः ग्रन्थकारैरेवं प्रदर्शितः।

**प्रवृत्या न विवक्षाधीर्मीयतेऽर्थैकनिष्ठया।**
**प्रयोगहेतुतामेव पश्चादपि समीक्षते॥**

निराकरणप्रकारश्चेत्थम्– यस्मिन्नर्थे शब्दस्य शक्तिः स एव हि शब्दार्थः। शक्तिश्च बाह्यार्थे न त्वन्तरे इति बाह्यार्थैकनिष्ठया प्रवृत्या ज्ञायते। तथाहि– गामानयेत्युत्तमवृद्धवचनसमनन्तरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा व्युत्पित्सुरित्थमाकलयति बालः, प्रवृत्तिगोचरबाह्यार्थविषयज्ञानपूर्विकास्येयं प्रवृत्तिः स्वतन्त्रप्रवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिवदिति। तथैव स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्वं चानुमाय तस्मिन् बाह्यार्थे शब्दान्तरभाविनि शब्दस्य शक्तिं गृह्णाति। न तु विवक्षाप्रमाणान्तरयोः शब्दस्य शक्तिं गृह्णाति। प्रवृत्यविषयत्वात्तयोः। तदनु च प्रयोगान्तरेषु गां बधान गामानयेत्यादिष्वानयनगोशब्दयोरुद्धारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्शनादन्वय-व्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यं गृह्णाति। एवं च व्युत्पत्तिसमये बाह्यार्थविशेष एव शक्तिः गृह्यत इति स एव शब्दार्थः तमेव चार्थं शब्दो गोचरयति न तु विवक्षाधियं प्रमाणान्तरं वा गोचरयति। अन्यथा (यः शब्दशक्यो न सोऽपि शब्देन प्रकाश्यते चेत्) घटशब्दश्रवणानन्तरं पटेऽपि प्रवृत्तिप्रसङ्गः।

---

1. प्रकरणपंचिका, श्लोकाः 3, 11, 28

तथा तु न भवति किन्तु प्रवृतिः–शब्दश्रवणसमनन्तरं तच्छब्दनियत–बाह्यार्थ एव दृश्यते। तथा च शब्दो बाह्यार्थगोचरां धियं जनयितुमीष्टे न तु विवक्षादिगोचरां धियमिति सिद्धम्। तदुक्तम्–"प्रवृत्या न विवक्षाधीर्मीयते ऽर्थैकनिष्ठये"ति। विवक्षाधीपदं प्रमाणान्तरस्याप्युपलक्षकम्। प्रवृत्तेरिति हेतुः तस्य च अर्थैकनिष्ठयेति विशेषणम्। विवक्षाधीः प्रमाणान्तरं वा न शब्दगम्यं, तयोः प्रवृत्त्यभावात्। बाह्यार्थ एवं शब्दगम्यः शब्दश्रवणसमनन्तरं तत्र प्रवृत्तिदर्शनादिति प्रयोगद्वयमत्र सूचितम्। एवं विषयाक्षेपे यं कञ्चिद्वि–षयमवलम्बेतेति घटमानयेति शब्दश्रवणानन्तरं पटानयनेऽपि प्रवृत्तिः स्यादेवं एतदतिप्रसंगवारणायार्थव्यावृत्तविवक्षैव शब्दगम्येति वक्तव्यम्, तथा च बाह्यार्थः शब्दगम्य इति सिद्धम्। तदुक्तं जयन्तभट्टैरपि–

**विवक्षायां हि शब्दस्य लिङ्गत्वमिव दृश्यते।**
**आकाश इव कार्यत्वान्न वाचकतया पुनः॥**

**शब्दादुच्चरिताच्च वाक्यविषया तावत् समुत्पद्यते।**
**संवित्तिस्तदनन्तरन्तु गमयेत् कामं विवक्षामसौ॥**

**अर्थोपग्रहवर्जिता तु नियमात् सिद्धैवमाजीविता।**
**तद्वाच्यार्थविशेषिता त्वविदिते नैषां तदर्थे भवेत्॥**[1]

किं च शब्दस्यार्थव्यावृत्तविवक्षागमकत्वे गौरवात् अर्थगमकत्वमेव लाघवात् स्वीक्रियतां को दोषः। न चार्थः विवक्षाया उपलक्षणमिति वाच्यम् नित्यसङ्घटितत्वात् तेन विवक्षायाः अन्यथा (अर्थः उपलक्षणमिति चेत्) क्वचिदर्थमन्तरेणापि विवक्षा प्रतीयते, हंसावगम इव राजमन्दिरम्। अपि च विवक्षादेः प्रयोगलिङ्गगम्यतयाऽनन्यलभ्यत्वाभावान्न शब्दार्थत्वम्। तदुक्तम्–"अनन्यलभ्यः शब्दार्थः" इति।

अपदार्थस्य वाक्यत्वे पूर्वोक्तातिप्रसङ्गो दुर्वारः। शब्दस्य विवक्षा–ऽनुमापकत्वमप्यनेकान्तम्– सविकल्पकप्रत्यक्षे "चायं घटः" इति विनापि विवक्षां शब्दोल्लेखस्य दर्शनात्। तस्माद् अर्थ इव शब्दगोचरः। यस्तु "नान्तरीयकताभावाद्" इत्यादिना बौद्धः "विनाप्यर्थं हि शब्देने" त्यादिना

---

1. न्या.मं. पृ.सं.–143

च प्राभाकरः शब्दस्यार्थासंस्पर्शितावादम् उत्थापयति, तत्र समाधिरभिधीयते कोऽयमर्थासंस्पर्शः भवतामभिमतः? यदि संयोगसमवाययोरभावः सोऽनुज्ञात एव, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणयोरदर्शनात्। यदि कार्यकारण-निमित्तनैमित्तिकाश्रयाश्रयिभावादीनामभावः सोऽप्यनुजात एव, शब्दार्थयो-र्नित्यत्वात्[1] भिन्नाश्रयकत्वाच्च।

ननु यदि शब्दोऽर्थसंस्पर्शी तर्हि कस्मादनाप्तवाक्यतो नार्थनिश्चयः? "नद्यास्तीरे पञ्चफलानि सन्ति" इत्याप्तानाप्तप्रणेतृकस्यास्य वचसः स्वरूपतो विशेषस्यादर्शनादिति चेत्। अत्रेदं बोध्यं यत् अनाप्तवाक्ये अप्रामाण्यग्रहात् न तादृशार्थनिश्चयः। इति 'शम्!

---

1. नित्यस्य शब्दस्य नित्येनार्थेन नित्यस्सम्बन्धः इति "औत्पत्तिकस्तु–" (जै.सू. 1.1.5) शब्दार्थसम्बन्धनित्यताधिकरणे निर्णीतम्।

# नव्यन्यायमते शब्दप्रमाणम्

धीरजकुमारः

आप्तोपदेशः शब्दः।[1] उपदेशशब्दः इत्युच्यमाने पर्यायमात्रोच्चारणाद् अकारके=बोधाजनके शब्दमात्रे प्रामाण्यप्रसङ्ग इति तत् निवृत्यर्थं पूर्वसूत्रात् साध्यसाधनपदमाकृष्यते। साध्यसाधनम् इत्यस्य करणम् इति अर्थाद् अकारके शब्दे नातिव्याप्तिः। तदुपादानेऽपि वीचीतरङ्गन्यायेन शब्दान्तरजनके पूर्वशब्दे अतिव्याप्तिः। अतः प्रत्यक्षसूत्रात् ज्ञानपदस्य, स्मृतिजनकेऽतिप्रसङ्गवारणाय अर्थग्रहणस्य संशयविपर्ययजनकनिराकरणाय च व्यवसायात्मकव्यभिचारि-पदयोरनुवृत्तिः इत्येवम् अव्यभिचारि-व्यवसायात्मकः अर्थविषयकज्ञानं यतः भवति स उपदेशशब्दः इति फलति। वस्तुतस्तु उपदिश्यतेऽनेनेति उपदेश इति उपदेशशब्देनैव अव्यभिचारादिविशेषणकार्थप्रतीतिजनकत्वं लभ्यत इति अनुवृत्त्यादिक्लेशो न कार्यः।

अपि च प्रमाणसामान्यलक्षणेऽव्यभिचारादिविशेषणसद्भावात् प्रमाण-विशेषलक्षणे तद्विशेषणमनावश्यकम्। सामान्यलक्षणविरहिते विशेषलक्षण-प्रसक्त्यभावात्। अनाप्तोपदेशेऽतिव्याप्तिवारणाय आप्तपदम् आवश्यकमेव। न चैतिह्यस्य अज्ञातप्रवक्तृकत्वेन आप्तोपदेशरूपत्वाभावात् शब्देऽनन्तर्भावा-पत्तिरिति वाच्यम्। तत्रापि यथार्थप्रतीतिहेतुत्वेन आप्तोपदेशत्वस्यानुमानात्। मणिकारस्तु शब्दखण्डारम्भे- "अथ शब्दो निरूप्यते। प्रयोगहेतुभूतार्थ तत्त्वज्ञानजन्यः शब्द प्रमाणम्" इति शब्दप्रमाणस्य निरूपणीयतया प्रतिज्ञातस्य लक्षणमाहुः। प्रयोगहेतुभूतं प्रयोगकरणीभूतं यद् अर्थतत्त्वज्ञानम्-अर्थविषयक-तत्त्वज्ञानम्, तज्जन्यःप्रमाणशब्दः इत्यन्वयः। प्रमाणं शब्द इति लक्ष्यनिर्देशः। अन्यथा शब्द-शब्दस्य लक्षणान्तर्गतत्वे प्रमाणसामान्यस्य लक्षणत्वापत्तौ अर्थान्तराव्याप्तिः प्रसज्येयाताम्। अर्थान्तरमनाकाङ्क्षिताभिधानम्। प्रमाणसामान्यस्य

---

1. न्याय.सू. 1-1-7

लक्ष्यत्वे अनाकाङ्क्षितस्य शब्दातिरिक्तप्रमाणस्य अभिधानापत्तिः। एवं प्रमाण-सामान्यान्तर्गतप्रत्यक्षादौ प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यशब्दत्वाभावाद् अव्याप्तिः। प्रमाणमिति लक्ष्यविशेषणानुपादाने शब्दसामान्यस्य लक्ष्यत्वे ध्वन्यात्मक-शब्देऽतिव्याप्तिः।

ननु प्रयोगहेतुभूतेति ज्ञाने विशेषणं व्यर्थम्। नहि प्रयोगाहेतुभूतेनापि ज्ञानेन शब्दो जन्यते, यदिदं व्यावर्तयेत्। शब्दः अहेतुभूतम् अथ च शब्दं जनयतीति वदतो व्याघातात्। किं च अर्थपदमपि व्यर्थम्, अर्थत्वस्य ज्ञानविषयत्वरूपस्य केवलान्वयितया ज्ञानमात्रस्यैवार्थविषयकत्वेन अव्यावर्तक-त्वात् उच्यते; इदं हि न प्रमाणशब्दसामान्यलक्षणम्। शब्दमात्रस्यैव प्रमाणत्वेन साकाङ्क्षशब्दत्वस्य शब्दत्वस्य वा लक्षणत्वात्। वह्निना सिञ्चति इत्यस्यापि किञ्चिदर्थे प्रमाणत्वेन अर्थतत्त्वम् इत्यादेर्व्यर्थत्वापत्तेश्च। किन्तु यस्मिन्नर्थे यद्वाक्यं प्रमाणं तस्यैव लक्षणम्।

तथा च तद्विशेष्यकतत्संसर्गकतत्प्रकारकयथार्थज्ञानजन्यो यः सः तद्विशेष्यकतत्संसर्गकतत्प्रकारकप्रमाजनकः शब्दः इत्यर्थः। एतल्लाभायैवार्थ-पदम्। वह्निना सिञ्चतीत्यादि अयोग्यवाक्यस्य सेके वह्निकरणकत्वांशे प्रमाणत्ववारणाय "प्रयोगहेतुभूत" इति जन्यविशेषणम्। प्रयोगहेतुभूतत्वं च वर्णसामग्रीजन्यत्वम्। प्रयोगस्य-वर्णस्य, हेतुः-सामग्री, ततो भूतः उत्पन्न इति व्युत्पत्तेः तथा च वर्णसामग्रीजन्यत्वे सति निरुक्ततत्त्वज्ञानजन्यत्वं निरुक्तप्रमाणशब्दत्वमिति लक्षणं फलितम्।

शब्दप्रमाणलक्षणस्य न्यायसूत्राल्लाभप्रकारः न्यायकौस्तुभे[1] प्रदर्शितः— "तत्र आप्तोपदेशः शब्दः। तत्र आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान्, तस्योपदेशः तज्जन्योपदेशः। विशिष्टजन्यत्वं च विशेष्यस्यास्यावर्तकतया विशेषण-जन्यत्वपर्यवसन्नम्। तथा च प्रकृतवाक्यार्थयथार्थज्ञानजन्यशब्दत्वं लक्षणं फलितम्। अत एव तद् अनुसारिणा मणिकृतापि—प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् इत्युक्तम्। अस्यार्थः प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् इत्युक्तम्। अस्यार्थः प्रयोगहेतुभूतं यद् अर्थतत्त्वं ज्ञानं तज्जन्यत्वम्। तथा चोक्त एवार्थः" इति।

केचित्तु– प्रयोगो हेतुभूतो यस्येति व्युत्पत्त्या प्रयोगात् हेतोरुत्पन्नमिति व्युत्पत्त्या वा प्रयोगहेतुभूतपदं शाब्दत्वरूपजातिविशेषविशिष्टपरम्। तादृशं यद् अर्थतत्त्वज्ञानं तदेव जन्यं यस्येति रीत्या शाब्दप्रमाकरणत्वं लक्षणं पर्यवसितम्। अर्थपदं च स्वरूपकथनम्। न चैवं लक्ष्यतावच्छेदकलक्षणयोरभेद इति वाच्यम्। लक्ष्यप्रविष्टस्य विलक्षणप्रमाकरणत्वस्य लक्षणेऽनिवेशात्। तयोरभेदेऽपि क्षतिविरहाच्च। प्रमात्वं च पूर्ववत् तत्तत्संसर्गकतत्पदार्थघटितं बोध्यमिति प्राहुः।

ननु मौनिश्लोकेऽव्याप्तिः। यदा कदाचित् येन केनचित् क्रम-व्युत्क्रमोच्चरितानामेव तत्तत्पदानां मौनिनार्थक्रमेणानुसन्धीयमानानां मौनिश्लोक-त्वम्। तत्र च यस्मिन्नर्थे यदर्थांशे प्रमाणशब्दत्वं तदर्थविशेष्यकतदर्थप्रकारक-यथार्थज्ञानजन्यत्वं नास्ति। तादृशज्ञानवता मौनिना अनुच्चरितत्वाद्, उच्चारकस्य च तादृशज्ञानाभावादिति। एवं यत्र वक्त्रा यदर्थबुबोधिषया वाक्यमुच्चरितं, श्रोत्रा तात्पर्यभ्रमेण लक्षणादिना वा तदितरयोग्यार्थोऽवगतः, तत्र श्रोतुरवगतार्थे तद्वाक्यस्य अप्रामाण्यापत्तिः, तद्विशेष्यकतत्प्रकारकज्ञानजन्यत्वाभावात्। एवं शुकाद्युच्चरिते पयसा सिञ्चतीत्यादिवाक्येऽव्याप्तिः। शुकादेः प्रकृतवाक्यार्थम् अनभिज्ञतया इदं वाक्यं सुखसाधनमिति सुखसाधनता ज्ञानादेव तेन तद्वाक्य-प्रयोगादिति चेत्–न। तेषामपि ईश्वरीयतादृशज्ञानजन्यतया लक्षणसमन्वयात्। प्रयोगहेतुभूतेत्यादिशब्दप्रमालक्षणव्याख्यानावसरे रुचिदत्तमिश्राः प्राहुः– अत्रार्थतत्त्वज्ञानं वाक्यार्थतत्त्वज्ञानम्। तथा चान्यवाक्यार्थतत्त्वज्ञानरूप-परमेश्वरज्ञानजन्यतया अयोग्ये शब्देऽतिव्याप्तिवारणाय प्रयोगहेतुभूतेति विशेषणम्। तदर्थोऽपि प्रयोगहेतुतावच्छेदकावच्छिन्नत्वम्। तथा च स्वसमान-विषयकवाक्यार्थज्ञानत्वेन तद्धेतुत्वाद् वाक्यार्थज्ञानत्वं यत्र जनकतावच्छेदक-कोटिप्रविष्टम्, तादृशतत्त्वज्ञानजन्यत्वं पर्यवस्यति। एवं च नोक्तातिप्रसङ्गः। ईश्वरज्ञानस्य तेन रूपेण तत्राजनकत्वात्।

यद्वा स्वार्थज्ञानत्वेन प्रयोगहेतुत्वात् स्वार्थतत्त्वज्ञानजन्यत्वमेव विवक्षित-मिति नोक्तदोषः।

स्वार्थत्त्वं च स्वप्रतिपाद्यवाक्यार्थत्वम्। तेन स्वरूपायोग्ये घटेः कर्मत्वम्, आनयनं कृतिरिति निराकाङ्क्षे नातिव्याप्तिः। स्वरूपयोग्यस्य च

1. न्यायकौस्तुभः पृ.सं. 7

तस्य संग्राह्यत्वमेव। प्रमाणशब्दत्वेन प्रमाणजनकस्वरूपयोग्यस्यैव लक्ष्यत्वात्।

केचित्तु काकाक्षिगोलकन्यायेन लक्षणेऽपि शब्दपदं ज्ञानजननस्वरूप-योग्यशब्दपरम्। तेन स्वरूपायोग्यनिरासः। तावन्मात्रं चायोग्येऽपीति पूर्वप्रतीकम्। न च तथापि तत्त्वपदं फलम्, स्वार्थाभावादेव तत्राप्रसङ्गादितिवाच्यम्। स्वज्ञाप्यस्यैव स्वार्थत्वात् तस्य च तत्रापि सत्त्वादित्याहुः। केचित्तु प्रयोगो हेतुभूतो ज्ञापको यस्यार्थस्य तत्तत्त्वज्ञानजन्यत्वं तदित्याहुः। नव्यास्तु-प्रमाणशब्दव्यवहारार्थमिदं लक्षणम्। योग्येऽप्याकाङ्क्षारहिते प्रमाणजनके शब्दे तान्त्रिकाणां तदव्यवहारात् तस्यासंग्राह्यत्वमेव। एवं चाकाङ्क्षा-आसत्याद्युपेतपदकदम्बकात्मकवाक्यरचना प्रयोगः तद्धेतुभूतं तज्जननानुकूल-सहकारिविशिष्टं यत् स्वार्थतत्त्वज्ञानं तज्जन्यशब्दत्वं लक्षणम्। अत एव आकाङ्क्षा-योग्यतासत्तिमान् शब्दप्रमाणमित्याहुः।

# न्यायनये शब्दप्रमाणम्

दीपककुमारद्विवेदी

प्रमाणं न्यायशास्त्रस्य प्रथमः पदार्थोऽस्तीति न्यायदर्शनं प्रथम-सूत्रेणावगम्यते। 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णय-वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति प्रथमसूत्रेण प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानं खलु मानवानामावश्यकं भवतीति समुपदिश्य महर्षिणा गौतमेन मोक्षस्य प्राप्तिः कथं भवतीति अपवर्गप्राप्तौ क्रमश्च कः इति प्रश्नस्योत्तरं 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञाना-नामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः इत्येवं द्वितीयसूत्रे प्रस्तुतम्।[2] तदनु प्रमाणस्य विभागः कृतः। "प्रमाणैरर्थपरीक्षणं न्यायः"[3] इति दिशा न्यायशास्त्रस्य प्रमुखः प्रतिपाद्यविषयः प्रमाणमिति सिद्ध्यति। एतेषां चतुर्णां प्रमाणानामन्तः करणे पर्यवसानं वेदान्तमीमांसापुराणाचार्याणां मते भवति।[4] "प्रमाणं प्राण-निलयः"[5] इति वचनानुरोधेन प्रमाणशब्दः परमेश्वरस्य वाचकः इति विदुषाम-परोक्षमेव। न्यायशास्त्रन्तावद् वस्तुतः प्रमाणशास्त्रमेवेत्यपि तत्त्वविदामतिरोहितम्।

प्रायः सर्वाण्येव शास्त्राणि तेषां तेषां तत्त्वानां प्रतिपादने प्रामुख्येनाधि-कृतानीति परम्परया ज्ञायते। यथा व्याकरणशास्त्रं शब्दसाधुत्वं व्यवस्थापयितुं प्रामुख्येन प्रवृत्तम्, मीमांसादर्शनं जैमिनिप्रणीतवेदार्थनिर्णयपुरस्सरं धर्मस्वरूप-निर्धारणार्थं प्रवर्तितम्, उत्तरमीमांसा तावत् ब्रह्मस्वरूपप्रकाशनमुद्दिश्य प्रवृत्ता, तथैव न्यायशास्त्रमपि "प्रत्यक्षानुमानोपमानशब्दभेदेन चतुर्धा प्रथितानां प्रमाणानां लक्षणस्वरूपप्रामाण्यादिभिः निरूपणार्थमवतीर्णमिति सुनिश्चितं तथ्यम्।"

---

1. न्यायसूत्रम् 1/1/1
2. न्यायसूत्रम् 1/1/2
3. न्यायसूत्रम् 1.1.1
4. न्यायसूत्रम् 2.2.2
5. न्यायसूत्रम् 1.1.3

नव्यन्यायप्रवर्तका गङ्गेशोपाध्याया अपि "अथ जगदेव दुःखपङ्क-निमग्नमुद्दिदिर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्रादौ प्रेक्षावत्प्रवृत्यर्थं प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादाव-सूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।"[1] इति प्रामाण्यवादारम्भे स्वाभिमतं प्रकाशयन्तः प्रमाणस्य वैशिष्ट्यं प्रामुख्यञ्च विद्योतयन्ति। मुनिना गौतमेन प्रथमं प्रत्यक्ष[2]प्रमाणस्य लक्षणं विधाय अनुमानो[3]पमान[4]शब्द[5]प्रमाणानां लक्षणं कृतम्। प्रत्यक्षानुमानोपमानप्रमाणेषु शब्द-प्रमाणस्य अद्वितीयं स्थानं वर्तते। यथा संसारे कस्यामपि सभायां प्रारम्भान्तयो-र्विशेषमहत्त्वं भवति। कार्यक्रमस्य प्रारम्भो विशिष्टवचनैः एवमन्तो विशिष्टा-तिथीनामध्यक्षानाञ्च सुव्याख्यानैर्भवति तथैव न्यायशास्त्रप्रणेतारः गौतमाः प्रारम्भे प्रत्यक्षस्य तदनु शब्दप्रमाणस्य लक्षणं भेदांश्च कृतवन्तः प्रत्येकं शास्त्रस्य किमपि वैशिष्ट्यं, महत्त्वं, मूल्यञ्च भवत्येव तदेवाधारीकृत्य व्याकरणं पदशास्त्रमित्यभिधीयते, न्यायवैशेषिकञ्च प्रमाणशास्त्रं मीमांसाशास्त्रं तु वाक्यशास्त्रमित्याख्यायते। तदिदं प्रमाणशास्त्रं प्रदीपवत् सर्वशास्त्रोपकारकं प्रथते।[6] व्युत्पत्तेराधानं प्रमाणशास्त्रं विना नैव सम्भवति। 'आप्तोपदेशः शब्दः[7] इति गौतमेन शब्दस्य लक्षणं कृतम्। तर्कसङ्ग्रहकारेण श्रीमदन्नम्भट्टेन तर्कभाषाकारेण केशवमिश्रेण च शब्दप्रमाणस्य लक्षणं "आप्तवाक्यं शब्दः"[8] इति स्वीकृतम्। तर्कामृतकारेण जगदीशतर्कालङ्कारेण च "आप्तोक्तः शब्दः प्रमाणम्"[1] इति लक्षणं प्रस्तुतम्। न्यायशास्त्रे स्वतन्त्रमेव प्रमाणमिति मन्यते। सम्प्रति प्रश्नोऽयमायाति आप्तः कः? एवं तस्योपदेशः कः? न्यायभाष्यकारेण वात्स्यायनेनोच्यते आप्तः खलु साक्षातकृत्धर्मा यथादृष्टार्थस्य चिख्यापयिषया

---

1. तत्त्वचिन्तमणौ, प्रामाण्यवादे पृ. 7
2. इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेशमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्। (न्या.सू. 1.1.4)
3. अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेशवत् सामान्यतो दृष्टञ्च। (न्या.सू. 1.1.5)
4. प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् (न्या.सू.1.1.6)।
5. न्या.सू. 1.1.7
6. प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
   आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता। (अर्थशास्त्रे, न्यायभाष्ये 1.1.1)
7. न्या.सू. 1.1.7
8. तर्कसंग्रहः पृ. 239, तर्कभाषा पृ. 137

प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिस्तया प्रवर्तत इति आप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते नातोऽन्यथेति।[2] तर्कसंग्रहकारेण 'आप्तस्तु यथार्थवक्ता[3] एवममरसिंहेन अमरकोषे "आप्त प्रत्ययितौ समौ"[4] इति आप्तस्य परिभाषा प्रदत्ता। शब्दप्रमाणलक्षणे 'उपदेशः शब्दः' इति लक्षणं भवति तर्हि भ्रान्तपुरुषस्य वाक्येऽतिव्याप्तिः प्रसज्यते अत एव वस्तुस्थितिः यथा भवति तस्याः अनुगुणमुपदेष्टा आप्तो भवतीति सिद्ध्यति। यथाभूताबाधितार्थोपदेष्टा आप्तः। इदं प्राचीननैयायिकानाम् अभिमतमस्ति। परं नव्यन्यायमते आप्तसम्बन्धे मतभेदः दृश्यते। नव्यन्याय-जनकः गङ्गेशोपाध्यायः वाक्यार्थज्ञानमेव प्रमाणमिति मनुते-प्रयोगभूतार्थतत्त्व-ज्ञानजन्य आप्तः।[5]

व्याकरणदर्शने शब्दप्रमाणं सर्वस्वभूतं विद्यते। अर्थवत् सूत्रेऽपि अर्थविषयकजनकत्वघटितमेवार्थवत्त्वं सर्वसम्मतं तत्र बोधपदेन शाब्दबोध एवाभिमतः प्रत्यासन्नत्वात् लाघववत्त्वाचेति शब्दप्रमाणं विना नेदं सङ्गच्छते।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**[6]

एवं भर्तृहरिविरचिते वाक्यपदीयग्रन्थे शब्दस्य महत्त्वं प्राप्यते। व्यवहारे लोके सर्वमपि ज्ञानं शब्दमाध्यमेनैव भवति। तदेवं स्पष्टं प्रतिभाति यत् भारतीयचिन्तने न केवलं प्रमाणमात्रतया शब्दः स्वात्मानं प्रतिबिम्बयति प्रत्युतः महार्थभूतं शब्दतत्त्वम्-आत्ममहेश्वर-विश्वात्मविश्वोतीर्णस्वरूपेण स्वातन्त्र्येणापि स्फुटति। शब्दप्रमाणं दृष्टादृष्टार्थभेदात्[1] द्विविधं भवति यस्यार्थः (फलं) लोकेऽस्मिन् दृश्यते स दृष्टार्थो, यस्यार्थश्च परलोके प्रतीयते

---

1. तर्कामृतम् पृ. 386
2. न्यायभाष्यम् 1.1.7
3. तर्कसंग्रहः पृ. 239
4. अमरकोषः पृ. 175
5. तत्त्वचिन्तामणौ शब्दखण्डे
6. वाक्यपदीयम् ब्रह्मकाण्डम् का. 124

सोऽदृष्टार्थः। इत्थं प्रत्येकं लौकिकवैदिकवाक्यानां विभागो बोधनीयः।[2] आप्तवाक्यं शब्दः इत्यत्र वाक्यं त्वाकाङ्क्षायोग्यता सन्निधिपदानां समूहोऽस्ति। पदमिति प्रतीतिः नानावर्णातिरिक्ता एवास्ति अत्र वैयाकरणाः स्फोटशब्दस्यार्थं द्विविधं कुर्वन्ति 'स्फुटति स्फुटीभवति अस्मात् अर्थव्युत्पत्या इति स्फोटः अर्थप्रत्यायकः स्वीक्रियते। एवं स्फुट्यते व्यज्यते वर्णैः इति व्युत्पत्या वर्णाभिव्यङ्ग्योपवीतस्फोटः इत्थं महर्षिपतञ्जलिना महाभाष्ये प्रोच्यते 'अयं गौरित्यत्र कः शब्दः? येनोच्चारितेन सास्नालाङ्गूलक-कुदखुरविषाणानां सम्प्रत्ययो भवति स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। फलतः वैयाकरणमते स्फोटस्यावलम्बनं विधायैव 'एकं पदम्' इत्येका प्रतीतिर्भवति। सार्थकः शब्द एव शब्दबोधजनने समर्थो भवति सार्थको नाम अर्थसहितः, अर्थयुक्तो वा इति ध्येयम्। अयं शब्दार्थयोः सम्बन्धः शक्तिस्वरूपो भवति। कदाचिदर्थस्य सम्बन्धः लक्षणारूपोऽपि स्वीक्रियते। यथा संसारे गोशब्दश्रवणान्तरं "लाङ्गूलखुरविषाणककुदमतः पशुविशेषस्य बोधः नियमेन भवति। शब्दशक्तिज्ञानन्तु शाब्दबोधे सहकारिकारणमिति मुक्तकण्ठेन स्वीक्रियते। अस्मिन् विषये न्यायसिद्धान्त-मुक्तावलीकारेण विश्वनाथपञ्चाननभट्टेनोक्तम्-

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥**[1]

अर्थात् शाब्दबोधे पदजन्यज्ञानं करणं भवति। ज्ञानेऽस्मिन् शक्तिज्ञानं सहकारिकारणं भवति। न्यायदर्शने शक्तिपदेन शब्दशक्तेः ग्रहणं भवति। प्राचीनन्यायाचार्याणां मते ईश्वरेच्छा शक्तिः, नव्यनैयायिकानां मते तु इच्छा एव शक्तिरित्यवधार्यम्। श्रीमदन्नंभट्टेन तर्कसंग्रहे प्रोक्तम् आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावक-त्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम्, आकाङ्क्षाविरहात्। अग्निना सिञ्चतीति न प्रमाणं योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं, सान्निध्याभावात्।[2]

1. न्यायसूत्रम् 1.1.8
2. न्यायभाष्यम् 1.1.8

केचन जनाः शब्दस्य फलनिरूपणमित्थं कुर्वन्ति पदानि पदार्थानां प्रतिपादनं कुर्वन्ति, पदार्थे वाक्यज्ञानमुत्पादयन्ति तथा पदार्थज्ञाने 'पदार्थ' एव कारणं भवति, पदार्थानां प्रतिपादने पदानामुपयोगः भवति।[3] विषयस्यास्य खण्डनं श्लोकवार्तिके मीमांसाचार्येण कुमारिलेन स्पष्टतया क्रियते–

**साक्षाद् यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।**
**वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले।।**

**वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्।।**[4]

**शब्दप्रमाणपरीक्षा–** महर्षिगौतमेन प्रथमाध्यायस्य प्रथमाह्निके शब्दप्रमाणस्य लक्षणं विभागश्च कृतः। तत्पश्चात् द्वितीयाध्यायस्य प्रथमाह्निके सूत्रसंख्या 49तः प्रारभ्य 68 सूत्रपर्यन्तम् अर्थात् विंशतिसूत्रेषु परीक्षा पूर्वपक्षविरोधिमतानां खण्डनं साङ्गोपाङ्गविधिना विधाय शब्दप्रमाणस्य निर्मलं वैशिष्ट्यं, महत्त्वञ्च साधितम्। परीक्षाऽवसरे शङ्कासंयुक्तसज्जनानां समाधानं मुनिना गौतमेन न्यायसूत्रे समारभते–"आप्तोपदेशसामर्थ्याच्छब्दार्थसम्प्रत्ययः"[5] अर्थात् अप्रत्यक्षपदार्थानां ज्ञानं शब्दमात्रेण न भवति परं वेदादिशास्त्र-सुसज्जितपरमाप्तवचनैः शब्दज्ञानमेव प्रकाशकं भवति। एवं मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्।"[6] यथा मन्त्रायुर्वेदश्च प्रामाणिकः तथैवाप्तजनानां वचनमपि प्रमाणिकं भवति। आप्तप्रमाणेन एव वेदानां प्रमाणं समृद्धिं प्राप्नोति।

एवं शब्दप्रमाणस्य न केवलं न्यायशास्त्रे अपितु सम्पूर्णेऽपि भारतीयसंस्कृतवाङ्मये महती भूमिका विद्योततेतराम्। सर्वे नास्तिकास्तिक-दार्शनिकाः स्वीकृतप्रमाणेषु स्वस्वदृष्ट्या शब्दस्य अन्तर्भावं स्वीकुर्वन्ति इति मे दृढा मतिः।

---

1. कारिकावली 81
2. तर्कसंग्रहः पृ. 245
3. तर्कभाषा पृ. 198
4. श्लोकवार्तिकम् (वाक्य.) 342, 343
5. न्यायसूत्रम् 2/1/52
6. न्यायसूत्रम् 2.1.68

# न्यायमते शब्दप्रमाणम्

राजेशकुमारः

"मानाधीना मेयसिद्धिः" इति वचनमनुसृत्य न्यायशास्त्रे चत्वारि प्रमाणानि स्वीकृतानि सन्ति। तानि च प्रमाणानि "प्रत्यक्षानुमानोपमानशब्दाः" इति। प्रत्यक्षमिन्द्रियं, अनुमानं व्याप्तिज्ञानं, उपमानं सादृश्यज्ञानं, शब्दश्च पदज्ञानं भवतीति नैयायिकानां सिद्धान्तः। तत्र शब्दप्रमाणस्य किं स्वरूपमिति जिज्ञासायामुच्यते–

तत्र भगवान् सूत्रकारः "आप्तोपदेशः शब्दः"[1] इति सूत्रेण शब्दस्य लक्षणं प्रोवाच। अत्र शब्द इति लक्ष्यनिर्देशः। आप्तोपदेश इति लक्षणम्। उपदिश्यतेऽनेनेत्युपदेशः वाक्यज्ञानं वा तदर्थज्ञानं वा अभिधीयते। आकाङ्क्षा-योग्यतासत्तिमत्पदम्बकं वाक्यं तस्य ज्ञानं तदित्यर्थः। तत्र वाक्यं ज्ञायमानं प्रमाणमिति पक्षे वाक्यार्थज्ञानं फलम्, पदार्थस्मृत्यादयस्तु आन्तरालिका इतिकर्तव्यताः। तदर्थज्ञानं प्रमाणमिति पक्षे तु हानादिबुद्धिः फलम्। यद्यपि विधिरुपदेशः प्रवर्तनमिति पर्यायाः, तथापि अप्रवर्तकभूतार्थपरोपनिषदादि-व्यापकत्वाद् उत्कृष्टप्रयोजनवद्वचनमात्रमत्र उपदेशशब्देन विवक्षितम्। यद्यपि 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यं न क्वचित् प्रवर्तयति कुतश्चिद्वा निवर्तयति पुरुषम्, तथापि पुरुषश्रेयोऽभिधत्त इति उपदेशशब्देन तद्वाक्यं संग्रहीतं भवति। तथापि "चैत्यं वन्देत" इत्यादिवाक्येष्वतिव्याप्तिः, तेषा-मप्युक्तोपदेशरूपत्वात्। तद्वारणायोक्तम् आप्तेति। आप्तानाम् ऋष्यार्य-म्लेच्छानामुपदेशः शब्दः न तु अनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकनैरात्म्यादिवादिनामिति। तथा च भाष्यम्– आप्तोपदेशः शब्दः, न शब्दमात्रमिति सूत्रार्थः इति।

---

1. न्याय.सू. 1/1/7

सूत्रस्याप्तलक्षणपरं भाष्यम्– "आप्तः खलु साक्षात्कृतधर्मा यथार्थदृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः उपदेष्टा। साक्षात्करणमर्थस्य आप्तिः,[1] तया प्रवर्तत इत्याप्तः" इति। सुदृढ़ेन प्रमाणेनावधारिताः साक्षात्कृताः धर्माः–हिताहितप्राप्तिपरिहार– प्रयोजनाः पदार्थाः येन स तथोक्तः। तथापि पदार्थतत्त्वं विद्वान् अकारुणिकतया वा अनुपदिशन्, मत्सरितया वा विपरीतमुपदिशन् आप्तः स्यादित्यत आह– यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त इति। यथादृष्टस्य इत्यनेन मत्सरितया विपरीतोपदेष्टुर्व्युदासः। चिख्यापयिषयेत्यनेन अकृपा–स्वार्थ–कामत्वयोर्निरासः। प्रयुक्त इत्यस्य उत्पादितप्रयत्न इत्यर्थः। अनेनालसत्वनिरासः। तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासमर्थस्य आप्तत्वं स्यात् अत उपदेष्टेति स्थानकरणपाट–ववानित्यर्थः।

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"[2] इति सूत्रस्थं "किं पुनराप्तानां प्रामाण्यम्? साक्षात्कृतधर्मता भूतदया यथार्थभूतार्थ–चिख्यापयिषेति" इति भाष्यमप्यत्रानुसन्धेयम्। दर्शनाद् ऋषिः करतलामलक–फलवत् साक्षात्कृतत्रैकाल्यवर्तिसकलप्रमेयः। आराद् द्वारात् यातः पातकेभ्यः इत्यर्थः मध्यमो लोकः। म्लेच्छः प्रसिद्धः। म्लेच्छा अपि हि परिपथमवस्थिताः पान्थानामपहृतसर्वस्वानां मार्गाख्याने हेतुदर्शनशून्या भवन्त्याप्ताः[3]" इति तात्पर्य टीकाकाराः

म्लेच्छानामाप्तत्वोपपादकोक्तटीकाव्याख्यानरूपा औदयनी परिशुद्धिः इयम्। द्विविधो हि पुरुषः सर्वज्ञः असर्वज्ञश्चेति। तत्र पूर्वस्य तावत् सत्त्वसाधकात् प्रमाणादेव रागद्वेषमोहविरहसिद्धावनाप्तत्वं निरस्तम्। उत्तरस्यापि ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेणैव निश्चीयन्त इति तत्र सर्वेषामविवाद एव। ज्ञानं तु तस्य यथार्थमयथार्थ वा स्यात्। इच्छापि प्रतिपिपादयिषा विप्रलिप्सा वा स्यादिति सन्देहोऽवशिष्यते। तत्राभ्यासदशा–पन्नोऽयमर्थोऽस्येति सामान्यतो निश्चये भवत्येव तज्ज्ञानस्य यथार्थत्वनिश्चयः, यथा अभ्यासदशापन्नमिदमरण्यममीषां म्लेच्छानाम् अतः अस्मिन्नेति

---

1. न्या.भा. शब्द प्रकरणम्
2. न्या.सू. 2/1/68
3. न्या. वा.ता.टी., पृ. 202

मार्गामार्गविभागज्ञा इति पान्थानामेवं निश्चयः। विप्रलिप्सा च हेतुदर्शनेन व्याप्ता हेतौ सति स्यात्। स च विप्रतलिप्साहेतुः द्विरूपः स्वोपकारः परोपकारो वा। तत्र तावत् पान्थेषु विमार्गेण प्रतिष्ठमानेषु म्लेच्छादीनां न कश्चित् स्वोपकारः। नापि द्वितीयः, न ह्यनुन्मत्ता अनपकारिणमपकुर्वते। न वा परोपकारमात्रं पुरुषार्थः। तथा हि सति सर्वः सर्वमपकुर्यादिति विप्रलिप्सापि निवार्यते। अनभ्यासदशापन्नविषये तु प्रवृत्तिसामर्थ्यात् प्रमाणान्तरसंवादाद्वा मोहविप्रलिप्सयोर्निवृतिः।

म्लेच्छा अप्याप्ता भवन्ति यतः प्रतीतिगोचराः, ततः कः सन्देहो महाधियामार्याणां च तत्त्वावधारण इति अपिशब्दार्थः इति।

एतावता हिताहितप्राप्तिपरिहारप्रयोजकपदार्थतत्त्वनिश्चयवन्तः कारुणिकाः अनलसाः अमत्सरिणः स्थानकरणपाटववन्तः आप्ताः इत्याप्त-लक्षणमुक्तं भवति। ते च ऋषयः आर्याः म्लेच्छा वा भवितुमर्हन्ति। तेषामुपदेशः तैः उच्चरितम् आकाङ्क्षायोग्यतासत्तियुक्तपदसमूहात्मकं वाक्यं शब्दः इति शब्दलक्षणमुक्तं भवति।

उपदिश्यतेऽनेनेत्युपदेश इत्युक्तम्। तत्र उपदिश्यत इत्यस्य कोऽर्थः? अभिधानक्रिया क्रियते इत्यर्थ इति चेत्? केऽयमभिधानक्रिया नाम? प्रतीतिरिति चेत्– तर्हि प्रतीतिकरणमुपदेशः। तथा च चक्षुरादेरपि प्रतीकरणत्वाद् उपदेशत्वप्रसङ्गः। न च स्वज्ञानपूर्वकं प्रतीतिकरणमुपदेशः, चक्षुरादिकम् अज्ञायमानं सत् प्रतीतिकरणमिति नातिप्रसङ्गः शब्दस्तु ज्ञातः सन् प्रतीति-करणमिति समन्वय इति वाच्यम्। एवमपि धूमादेरपि उपदेशताप्रसङ्गात्। तस्य ज्ञातस्य सतः वह्न्यादिप्रतीतिकरणत्वाद् अत्रोच्यते। श्रोत्रग्राह्यवस्तुकरणिका तदर्थप्रतीतिरभिधानक्रिया तत्करणभूतं श्रोत्रग्राह्यं वस्तु शब्दप्रमाणम्। लोके तथैव व्यवहारात्। उक्तः, अभिहित इति च स एवार्थो लोके व्यपदिश्यते यः श्रोत्रग्राह्यवस्तु प्रतीतिविषयतां प्राप्तम्। श्रोत्रग्राह्यस्य वर्णराशेरेवार्थ-प्रतीतिकरणत्वात्। न तु श्रोत्रजन्यज्ञानविषयः स्फोटात्मा शब्दः। श्रोत्रग्रहणे ह्यर्थे शब्दशब्दः प्रसिद्धः। "यतोऽर्थप्रतीतिः स शब्द" इति तूच्यमाने धूमादिरपि शब्दः स्यात्' अगृहीतसम्बन्धे शब्दे च शब्दत्वं न स्यात्, अर्थप्रतीतेकरणात्- वस्तुतस्तु अर्थप्रतीतिकरणस्वरूपयोग्यताविवक्षणे नायं पश्चिमो दोषः। श्रोत्रग्राह्यवस्तुकरणकार्थप्रतीतिकरणत्वस्य शब्दलक्षणत्वेऽपि अगृहीतसम्बन्धे

शब्दे स्वरूपयोग्यताघटनयैव लक्षणस्य सङ्गमनीयत्वात्। आप्तलक्षण-परभाष्यमित्थं व्याख्यातं जयन्तभट्टेन–

**धर्म इत्युपदेष्टव्यः कश्चिदर्थो विवक्षितः।**
**साक्षात्करणमेतस्य यथार्थमुपलम्भनम्।।**[1]

न तु प्रत्यक्षेणैव ग्रहणमिति नियमः, अनुमानादिनिश्चितार्थोपदेशिनोऽप्याप्तत्वानपायात्।

**चिख्यापयिषया युक्त इत्युक्ता वीतरागता।**
**उपदेष्टेत्यनेनोक्तं प्रतिपादनकौशलम्।।**[2]

**तस्य च प्रतिपाद्येऽर्थे वीतरागत्वमिष्यते।**
**सर्वथा वीतरागस्तु पुरुषः कुत्र लभ्यते।।**[3]

**ऋष्यार्यम्लेच्छसामान्यं वक्तव्यं चाप्तलक्षणम्।**
**एवं हि लोकेऽप्याप्तोक्त्या व्यवहारो न नङ्क्ष्यति।।**[4]

येऽव्याप्तिदोषक्षयमाचक्षते तैरपि दोषक्षयः प्रतिपाद्यर्थिष्वेव वर्णनीयः। अन्यथा लोके दृश्यमानस्य अयमाप्तोक्त इति व्यवहारस्य निह्नवः स्यात्।

अथवा वेदप्रामाण्यसिद्धत्वाच्छास्त्रस्य तत्प्रणेतुः आप्तस्य ईश्वरस्य यथाश्रुतमेवेदं लक्षणम्। स हि साक्षात्कृतधर्मा, धर्मस्येश्वरप्रत्यक्षगोचरत्वात्। चिख्यापयिषाप्रयुक्त इति। कारुणिक एव भगवान्। उपदेष्टा च, वेदाद्यागमानां तत्प्रणीतत्वात्। वीतरागता स्वार्थकामनाराहित्यम्। प्रतिपादनकौशलम्-करणादि-पाटवम्। वीतरागोऽपि मुकादिरुपदेष्टुमशक्तः किं कुर्यात्? वक्तुं शक्योऽपि साक्षात्कृतधर्मोऽपि अवीतरागो न वक्ति तूष्णीमास्त इति। वीतरागः प्रतिपाद्यार्थ-विषयकपक्षपातरहित इत्याहुः।

---

1. न्या.मञ्जरी शब्दप्रकरणम्
2. न्या.मञ्जरी शब्दप्रकरणम्
3. न्या.मञ्जरी शब्दप्रकरणम्
4. न्या.मञ्जरी शब्दप्रकरणम्

# सांख्ययोगनये शब्दप्रमाणम्

दिनेशशर्मा

वैशेषिकातिरिक्तानि सर्वाणि आस्तिकदर्शनानि शब्दप्रमाणं स्वीकुर्वन्ति, तेष्वन्यतमं दर्शनं न्यायदर्शनं विद्यते। यद्यपि न्यायवैशेषिकयोः बहवः सिद्धान्ताः अविरुद्धाः सन्ति तथापि शब्दप्रमाणस्य अन्तर्भावं वैशेषिकाः अनुमानप्रमाणे कुर्वन्ति। अतः न्यायमाश्रित्य शब्दप्रमाणस्य स्वरूपमिदमुच्यते। गौतमेनोक्तम्– "आप्तोपदेशः शब्दः"[1] अत्र शब्दः लक्ष्यः आप्तोपदेशत्वं लक्षणम्। न्यायभाष्यवार्तिककारो वदति– "अथ शब्दः आप्तोपदेशः शब्दः।[2] न शब्दमात्रमिति सूत्रार्थः। आप्तः खलु साक्षात्कृतधर्मा। साक्षात्करणं अर्थस्य आप्तिः, तथा सह वर्तत इति आप्तः।[3] अत्र उद्योत्करस्य तात्पर्यं इदं वर्तते यदि अर्थस्य साक्षात्करणमाप्तिः इति स्वीक्रियते यदा सृष्टिर्जायते ततः पूर्वम् स्वर्गस्य दर्शनं न केनापि कृतम्, अतः स्वर्गकामो यजेत इति वाक्यस्य न प्रामाण्यं स्यात्। आप्तोपदेशः इत्यत्र आप्तस्य उपदेशः इति षष्ठीतत्पुरुषसमासः न आश्रयणीयः, अपितु आप्तश्चासौ उपदेशः इति आप्तोपदेशः, अतः इह लौकिक-अलौकिकपदार्थानां यःसाक्षात्कारं करोति तस्य उपदेश एव आप्तोपदेशः भवितुमर्हति।

वाचस्पतिमिश्रः भणति यदुपदिश्यते अनेन उपदेशो वाक्यज्ञानं वा पदार्थज्ञानं वा अभिधीयते। तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं बलं, पदार्थस्मृत्यादयः त्वान्तरालिका इतिकर्तव्यता। तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम्।"[3]

---

1. न्यायसूत्रम्–1.1.7
2. न्यायभाष्यवार्तिकम्–
3. न्यायवार्तिकम् पृ. 166

आप्तोपदेशः अस्य षष्ठीतत्पुरुषसमासं प्रतिपादयन् आह वाचस्पतिमिश्रः आप्तानाम् ऋष्यार्यम्लेच्छानाम् उपदेशः शब्दः। अस्मिन् मते बुद्धादीनाम् उपदेशः शब्दप्रमाणं नास्ति। आप्तशब्दस्य तात्पर्यं वाचस्पतिमिश्रनये तु सुदृढेन प्रमाणेन अवधारिताः साक्षात्कृताः धर्माः पदार्थाः हिताहितप्राप्तिप्रयोजना येन सः आप्तः। अथ च मत्सरीत्याविपरितोपदेशभिन्नं वाक्यम् एव शब्दप्रमाणं भवति, अथ च स्थानकरणपाटववान् उपदेष्टा भवति। यस्मात् शब्दात् अवगम्यार्थं प्रवर्तमानः प्राप्नोति तमेवार्थं स आप्तोपदेशः शब्दः प्रमाणमिति वाचस्पतिमिश्रो वदति। उदयनाचार्येण शब्दप्रमाणे त्रिविधा विप्रतिपत्तिः प्रदर्शिता प्रामाण्यतः भेदतः लक्षणतश्च।[1] उदयनाचार्य उपदेशशब्दस्य अर्थं करोति वाक्यं तच्च आकांक्षा- योग्यता-शक्तिमत् पदकम्बकमिति। उदयनाचार्यमते आप्तः पुरुषः द्विविधो भवति सर्वज्ञ असर्वज्ञश्च तत्र असर्वज्ञः सत्त्वप्रसाधकादेव प्रमाणाद् रागद्वेषमोहविरहसिद्धः तस्य वाक्यमपि शब्दप्रमाणं भवति। सर्वज्ञस्यापि ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेण एव निश्चीयन्ते।[2]

शब्दप्रमाणं द्विविधं भवति दृष्टादृष्टप्रवक्तृत्वात्। अत एव सूत्रकारेण उक्तं "सः द्विविधो दृष्टादृष्टार्थत्वात्"[3] प्रत्यक्षतः उपलब्धः अर्थः दृष्टार्थः अनुमानतः उपलब्धः अर्थः अदृष्टार्थ इति। अत्र भाष्यकारो वदति–यस्यामुत्र प्रतीयते स दृष्टार्थः, दृष्टः अर्थः येन सः दृष्टार्थः प्रवक्ता भवति। तस्य वाक्यं लौकिकशब्दप्रमाणं एवमदृष्टः अर्थः अनुमितः येन स प्रवक्ता अदृष्टार्थप्रवक्ता भवति। तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः इति सूत्रेण वेदस्य अप्रामाण्यं प्रतिपादितं यतो हि वेदे अनृतदोषः व्याघातदोषः पुनरुक्तदोषश्च सन्ति। पुनः अस्य निराकरणं कुर्वन् आह सूत्रकारः "मन्त्रायुर्वेदप्रामाण्यवच्च तदप्रामाण्यमाप्तप्रामाण्यम् इत्यनेन वेदस्य प्रामाण्यं प्रतिपादितं यथा मन्त्राणां प्रामाण्यमायुर्वेदस्य प्रामाण्यं च लोके सर्वत्र एव दरीदृश्यते तथा आप्तोच्चरितत्वात् वेदस्यापि प्रामाण्यं निराबाधमेव।

---

1. न्यायवार्तिकतात्पर्यपरिशुद्धिः पृ. 220
2. न्यायवार्तिकतात्पर्यपरिशुद्धिः पृ. 224
3. न्यायसूत्रम्–1.1.8

अन्नंभट्टेनोक्तं 'आप्तवाक्यं शब्दः'[1] यथा– गाम् आनय, दण्डेन शुक्लम् इत्यादयः। तथा च आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणस्य लक्षणम्। यदि वाक्यत्वम् एव शब्दस्य लक्षणं तदा यदि आप्तः गौः अश्वः, पुरुष इत्यादि शब्दमुच्चारयति तदेव शब्दप्रमाणं भवितुमर्हति, परन्तु आप्तत्वे सति वाक्यत्वं यत्र विद्यते तदेव शब्दप्रमाणमिति अनया रीत्या नैयायिकाः शब्दस्य स्वरूपं प्रतिपादयन्ति।

सांख्यदर्शने त्रीणि प्रमाणानि भवन्ति, प्रत्यक्षानुमानागमाः प्रमाणानि इति। अत एव ईश्वरकृष्णैरुक्तम्–

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥**[2]

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरमनुमानस्य निरूपणं ग्रन्थकारेण विहितम्। अनुमानोपजीवकत्वात् अनुमानानन्तरं शब्दप्रमाणस्य निरूपणं कृतमिति। अनुमानानन्तरं शब्दनिरूपणे सङ्गतिं प्रतिपादयन्नाह वाचस्पतिमिश्रः– "प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृतिहेतुः ज्ञानानुमानपूर्वकत्वात् शब्दार्थसम्बन्धग्रहणस्य, स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्य अर्थप्रत्यायकत्वात् अनुमानपूर्वकत्वम् इत्यनुमानानन्तरं शब्दं लक्षयति आप्तश्रुतिराप्तवचनन्तु इति।" आप्तवचनमेव शब्दप्रमाणम्, आप्तवचनम् इत्यनेन लक्ष्यनिर्देशः कृतः, आप्तश्रुतिः शब्दप्रमाणस्य लक्षणम्। आप्ताः प्राप्ताः युक्ता इति यावत्, आप्ताश्च असौ श्रुतिः इति आप्तश्रुतिः। श्रुतिशब्दस्य अर्थो भवति वाक्यजनितं वाक्यार्थज्ञानम्। यदि शब्दस्य लक्षणे आप्तं पदं न दीयते तर्हि श्रुतिः शब्दस्य लक्षणम्, तदा शाक्यादिवाक्येषु अतिव्याप्तिर्भविष्यति। यदि आप्तपदं दीयते तदा आप्तोच्चरितत्वात् वेदादीनामेव प्रामाण्यं भविष्यति। श्रूयते श्रुतिः इति व्युत्पत्त्या श्रोत्रग्राह्यं वाक्यमेव अर्थो भविष्यति। तथा च आप्तपुरुषाणां वाक्यजन्यज्ञानमेव शब्दप्रमाणं भविष्यति। तथा च आप्तपुरुषाणां वाक्यजन्यज्ञानमेव शब्दप्रमाणं भविष्यति। सांख्यानां नये तु ईश्वरस्य अविद्यमानत्वात् वेदः न पौरुषेयः अपि तु अपौरुषेयः। अथ च वेदः स्वतः

---

1. तर्कसंग्रहः–शब्दखण्ड–पृ. 72
2. सांख्यकारिका–4

प्रमाणं भवति। एवं वेदमूलकस्मृतीतिहासपुराणं वाक्यजनितज्ञानमपि शब्दप्रमाणम् एव भवति। तथा च आदिविदुषः कपिलस्य सर्वाणि वाक्यानि शब्दप्रमाणभूतानि सन्ति। यथा सांख्याःत्रीणि प्रमाणानि स्वीकुर्वन्ति तथैव योगिनः अपि त्रीण्येव प्रमाणानि स्वीकुर्वन्ति। भावागणेशमते योग्यशब्दजन्यत्वे सति वृत्तित्वं शब्दप्रमाणस्य लक्षणम्।[1] यदि वृत्तित्वं शब्दप्रमाणस्य लक्षणं तदा विपर्ययादौ अतिव्याप्तिरतः योग्यशब्दजन्यत्वं लक्षणे निविष्टम्। नागोजीभट्टैरुक्तम्– आप्तेन तत्त्वदर्शनकारुण्यकरणपाटवरूपाप्तिमता स्वयं दृष्टस्य श्रुतस्यानुमितस्य वा अर्थस्य स्वचित्तवृत्तिज्ञानसदृशज्ञानविषयतया परचित्ते समर्पयितुमुपदिश्यते यः शब्दस्तज्जन्या तदर्थविषयावृत्तिः शब्दप्रमाणम्[2]। आप्तेन दृष्टः अनुमितः वा अर्थः येन शब्देन उपदिश्यते तस्मात् शब्दात् श्रोतुः तदर्थविषयवृत्तिः आगमाः इति मणिप्रभाकारः शब्दस्य लक्षणं करोति।[3] चन्द्रिकाकारैरुक्तमाप्तस्य ईश्वरस्य वाक्यं वेदः शब्दप्रमाणम्।[4] पदार्थज्ञानद्वारा वाक्यार्थावगाहिनी वृत्तिः शब्दप्रमाणमिति योगसुधाकारः भणति।[5] यद्यपि आनुपूर्वीणां लक्षणे भेदेऽपि सर्वेषां लक्षणानां तात्पर्यं एकमेव विद्यते। श्रीकृष्णवल्लभाचार्यैः स्वामिनारायणभाष्येऽनुमानोपजीवकत्वं शब्दप्रमाणे प्रतिपादितम्।

आप्ता युक्ता यथार्था इति, यथार्थं वाक्यजनितं वाक्यार्थज्ञानम्। यथार्थज्ञानं स्वतः प्रमात्मकं भवति वेदजन्यं ज्ञानं वेदमूलकत्वात् श्रुतिस्मृतीतिहासपुराणादिवाक्यजन्यज्ञानं शब्दप्रमाणं भवति। लोके भ्रमप्रमादविप्रलिप्साकर्णाऽपाटवादिदोषरहितपुरुषेणाभिहितशब्दजन्यं यथार्थज्ञानमपि शब्दप्रमाणं भवति। अथवा इति विकल्पेन द्वितीयं लक्षणमुच्यते श्रीकृष्णवल्लभाचार्यैः यथार्थबोधजनकशब्दत्वं शब्दप्रमाणस्य लक्षणम्। अत एव वेदस्य वेदमूलकत्वात् शास्त्रस्य वाक्यानां यथार्थशब्दत्वात् शब्दप्रमाणे अन्तर्भावो भवति। यदा शब्दप्रमाणं तदा शाब्दबोधात्मिका बुद्धिवृत्तिः प्रमाणं तदा बुद्धिवृत्तिः प्रतिबिम्बितचैतन्यं प्रमा। तादृशवाक्यार्थविषयकशाब्दबोधात्मकफले पदज्ञानं करणं पदजन्यपदार्थस्मरणं व्यापारः पदपदार्थयोः सम्बन्धः शक्तिलक्षणा–

---

1. योगसूत्रम्–भावागणेशवृत्तिः 1–7
2. योगसूत्रम्– नागोजीभट्टवृत्तिः 1–7
3. योगसूत्रम्– मणिप्रभाकारः 1–7
4. योगसूत्रम्– चन्द्रिकाकारः 1–7
5. योगसूत्रम्– योगसुधाकारः 1–7

न्यतरात्मकः। शक्तिश्च परमेश्वरेच्छारूपा मीमांसकानां मते पदार्थान्तरं वा ईश्वरेच्छाया आकारस्तु इदं पदममुमर्थं बोधयति अथवा अस्मात् शब्दात् अयमर्थः बोद्धव्य इति। सा च शक्तिः जात्याकृतिव्यक्तिषु तिष्ठति। यथा गोपदस्य गोव्यक्तौ, गोत्वजातौ अवयवसंयोगे च त्रिषु एव शक्तिः वर्तते। यथा घटपदस्य घट-घटत्व-संसर्गेषु त्रिषु एव शक्तिः।[1]

शाब्दबोधे आसत्तिज्ञानस्य, आकांक्षाज्ञानस्य, योग्यताज्ञानस्य, तात्पर्यज्ञानस्य कारणं यथा विहितं तथैव स्वामिनारायणभाष्ये उपलभ्यते, एवं वैशेषिका बौद्धाश्च शब्दप्रमाणस्यानुमानेऽन्तर्भावं यथा कुर्वन्ति तथैव अत्रैवोपलभ्यते। यद्यपि योगदर्शने त्रिविधं प्रमाणमेवाभीष्टं तथापि अत्र वैशेषिकानां तथा बौद्धानां मतमपि गृहीतम् इति।

1. योगदर्शनं-स्वामिनारायणभाष्यम्- पृ. 15

# सयुक्तिकं सांख्याभिमतशब्दप्रमाणविमर्शः

**गौतमदेवी**

इह खलु जगति व्यवहारस्य मूलकारणं शब्द, शब्दमन्तराः व्यवहाराः नैव प्रवर्तन्ते। अतः शब्दस्य व्यवहारोपयोगित्वं वर्तते एव, तत्र च शब्दः गुणपदार्थ इति न्यायवैशेषिकानां युक्तिः। स च शब्दः सांख्यमते पञ्चतन्मात्रान्तर्गतः, अस्य शब्दस्य सांख्ये किं स्वरूपमिति जिज्ञासायाम् प्रमाणेन प्रमेयसिद्ध्यर्थं प्रत्यक्षानुमानागमेति त्रिविधप्रमाणेषु शब्दस्य स्वरूपं प्रतिपादयति "आप्तश्रुतिराप्तवचनं तु" इति। कारिकारूपेण वर्त्तते–

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धिः॥** (सा.का.–4)

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु॥**(सा.का.–5)

तत्रेदं ज्ञेयं दर्शनशास्त्रेषु सर्वत्र प्रमाणनिरूपणं प्राप्यते। सांख्यदर्शने प्रमेयतत्त्वानां ज्ञानाय प्रमाणानामनिवार्यता स्वीक्रियते। सांख्यमते प्रमाणानि त्रीणि सन्ति, दृष्टम्, अनुमानम्, आप्तवचनञ्चेति।

तत्र आप्तस्य कोऽर्थः इति जिज्ञासायां शास्त्रकारः इत्थं प्रतिपादयति। "आप्तो नाम रागादिवियुक्तस्यागृह्यमाणकारणपरार्थाः व्याहृतिः। श्रवणं श्रुतिः। आप्ता चाऽसौ श्रुतिराप्तश्रुतिः। अथवा आप्तोऽस्यास्तीत्याप्तः। आकारो मत्वर्थीयः। तद्यथा तुन्दो घट इति। आप्तेभ्यः श्रुतिराप्तश्रुतिः। आप्तश्रुतिश्चाप्त श्रुतिश्चाप्तश्रुतिः, सरूपाणामित्येकशेषः। तत्र पूर्वेणाप्तश्रुतिग्रहणेनैव प्रतिपादयति अपुरुषबुद्धिपूर्वक आम्नायः, स्वतन्त्रः पुरुषनिःश्रेयसार्थं प्रवर्तमानो निःसंशयं प्रमाणमिति। द्वितीयेन मन्वादिनिबन्धनानां च स्मृतीनां वेदाङ्गतर्केतिहासपुराणानां शिष्टानां नानाशिल्पाभियुक्तानां चादुष्टमनसां यद्वचस्तत्प्रमाणमित्येतत्सिद्धं भवति। तुशब्दोऽवधारणार्थः। आप्तश्रुतिरेवाप्तवचनं न शब्दमात्रम्। एवं

सति यदुक्तं तन्त्रान्तरीयैः शिंशपदिशब्दानां निर्विकल्पकानुमानेऽन्तर्भाव-स्त्रिलक्षणत्वादिति तदयत्नतः प्रतिक्षिप्तं भवतीति व्याख्यातानि प्रमाणानि"।[1] विद्वत्तोषिणीकारमते प्रयोजकप्रयुक्तगामानयेत्यादिवाक्यश्रवणसमनन्तरं प्रयोज्य-वृद्धस्य गवानयनमुपलभ्य पार्श्वस्थो व्युत्पित्सुर्बाल इत्थमाकलयति प्रवृत्तिर्ज्ञान-पूर्विका स्वतन्त्रप्रवृत्तित्वान्मदीयप्रवृत्तिवद् इति, तदनु चायं प्रवर्तकप्रत्यय आचार्योच्चरितवाक्यजन्यस्तदनन्तरभावित्वादित्येवं स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्वं चानुमाय शब्दानन्तरभाविनि तस्मिन् शब्दस्य शक्तिं गृह्णाति। तदनु च गां बधान समिधं चानय इत्यादिप्रयोगान्तरेषु आनयनगोशब्दयोरुद्धारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्शनादन्वयव्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यमवगच्छतीति स्फुटं संबन्धज्ञानस्यानुमानपूर्वकत्वमिति "प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञानानुमानपूर्वकत्वा-च्छब्दार्थसंबन्धग्रहणस्य, स्वार्थसंबन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वाद-नुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति "आप्तश्रुतिराप्तवचनं तु" इति।[2]

लक्ष्यलक्षणभावेन मूलवाक्यस्य विभागमाह— 'तत्र' इति, तत्र 'आप्तश्रुतिराप्तवचनं तु' इति मूलवाक्ये परिशिष्टम् 'आप्तश्रुतिरित्याकारकम्'। युक्ता तथ्यार्थप्रत्यायनसमर्थत्वेन समीचीना। 'श्रुतिः स्त्री वेद आम्नाय' इत्यभिधानाद् वेदवाक्ये शक्तिमपि श्रुतिपदमत्र लक्षणया सामान्यवाक्यपरं तन्नीत्वा पुनरुपचाराद् वाक्यजन्यबोधपरत्वेन व्याख्येयमित्यर्थः।

यद्वा यथा द्विरेफः शब्दायत इत्यादौ तार्किकैः पूर्वं द्विरेफपदेन रेफद्वयघटितं भ्रमरपदं लक्ष्यते। पुनश्च भ्रमरपदेन स्वशक्यसंबन्धी जन्तुविशेष-रूपोऽर्थो लक्ष्यते तथाऽत्रापि पूर्वं श्रुतिपदेन वाक्यं लक्ष्यते पुनश्च वाक्येन तज्जन्यं ज्ञानं लक्ष्यत इत्येवं लक्षितलक्षणासमाश्रयणेनायं ग्रन्थो नेयः।

'श्रूयत इति श्रुतिः' श्रोत्रग्राह्यं वाक्यमिति व्युत्पत्त्या श्रुतिपदस्य वाक्यमिति वाच्योऽर्थः तज्जन्यं ज्ञानं च लाक्षणिकोऽर्थ इति पन्था अत्राऽऽश्रयणीयः, सर्वथापि श्रुतिपदमत्र वाक्यजन्यज्ञानपरमिति ग्राह्यमिति तत्त्वम्।

---

1. युक्तिदीपिका पृ. सं. 174
2. सां त. कौ., पृ. 75

एवमाप्तवचनमित्यत्राप्युपचारे आप्तवचनजन्यं ज्ञानं ग्राह्यम्। नचैवं पौनरुक्त्यं शङ्क्यं, लक्ष्यलक्षणभावस्थले पौनरुक्त्याऽनङ्गीकाराद् अन्यथा प्रमाकरणं प्रमाणमित्यादौ का गतिः स्यात्? "शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादाद्" (न्यायसूत्रम् अ.5 आ.2 सू.14)। वाक्यजनितं ज्ञानमित्येतावतैव सिद्धेऽलमन्तगडुना 'वाक्यार्थ' इत्यनेन, न हि वाक्यार्थज्ञानभिन्नमन्यकिंचिद् वाक्यजन्यं ज्ञानं यद् वाक्यार्थेतिविशेषणेन व्यावर्त्येद् इति, 'वाक्येनाऽर्थ्यते' स्वकीयतात्पर्यविषयतया प्रार्थ्यते योऽभिधेयस्तज्ज्ञानस्यैव वाक्यजन्यस्याऽऽगमप्रमाणत्वं न यथाश्रुतवाक्यजन्यज्ञानस्येत्यर्थबोधनार्थं तस्यार्थवत्वाद्, युक्तं चैतद् अन्यथा 'गावः सत्रमासत' 'यजमानः प्रस्तर' इत्याद्यर्थवादवाक्यजन्यज्ञानस्य प्रामाण्यं न स्याद्, यथाश्रुतस्य तस्य प्रत्यक्षादिविरुद्धत्वेनासम्भवग्रस्तत्वाद्, तात्पर्यविषयीभूतस्य वाक्यजन्यार्थज्ञानस्यागमप्रमाणत्वाभ्युपगमे त्वर्थवादवाक्यानामपि स्वबोध्यतात्पर्यविषयीभूतप्राशस्त्यादिरूपार्थज्ञानजनकत्वसम्भवात् उत्पन्नमर्थवादवाक्यजन्यस्यापि ज्ञानस्यागमप्रमाणत्वमिति।

# भारतीयदर्शनेषु शब्दप्रमाणम्

सुनीलकुमारः

भारतीयदर्शनेषु प्रमाप्रमाणशब्दद्वयं ज्ञानमीमांसायाः प्रमेय-प्रमातृशब्दद्वयं तत्त्वमीमांसायाः प्रतिनिधित्वं करोति। एते चत्वार एव भारतीयदर्शनस्य आधारबिन्दवः सन्ति।

प्रमाणशब्दस्य व्युत्पत्तिः प्रकारद्वयेन भवति। तत्र प्रथमप्रकारेण **"प्रमीयते अनेन इति प्रमाणम्"**[1] अत्र प्रमाणशब्दः 'प्र' इत्युपसर्गपूर्वकात् 'मा' धातोः करणार्थे 'ल्युट्' प्रत्ययात् व्युत्पन्नो भवति। तदनुसारं प्रमाणं साधनं भवति अर्थात् येन साधनेन यथार्थज्ञानस्य प्राप्तिर्भवति तत्साधनं प्रमाणमिति। द्वितीयप्रकारेण **"प्रमीयते यत् तत् प्रमाणम्"** इत्येतदनुसारं प्रमाणशब्दस्यार्थः साध्यरूपेऽस्ति। व्यापारानन्तरं यज्ज्ञानं भवति अर्थादत्र प्रमाणस्यार्थः साध्यस्य (ज्ञानस्य) द्योतकमस्ति।

नैयायिकानां मते **"प्रमाकरणं प्रमाणम्"**[2] इत्यनुसारं प्रमायाः (यथार्थज्ञानस्य) करणम् (असाधारणकारणं) अथवा साधनेषूत्तमं साधनं प्रमाणमित्युच्यते। भारतीयदर्शनस्य कतिपयसम्प्रदायाः प्रमाणलक्षणे **अनधिगतस्य** (अज्ञातस्य) शब्दस्य प्रयोगं कुर्वन्ति। तत्र भाट्टमीमांसकानां मतानुसारम् **"अनधिगतार्थगन्तृप्रमाणम्"** इत्यनुसारम् यदनधिगतमर्थात् पूर्वं न ज्ञातं एतादृग्ज्ञानस्य बोधकं प्रमाणमिति कथ्यते। बौद्धानां मतेऽपि प्रमाणलक्षणे अनधिगतपदमेवाभीष्टं प्रतीयते। एतदर्थं **प्रमाणसमुच्चयस्य**[3] टीकायां कथितम्।

---

1. सांख्यतत्त्वकौमुदी
2. तर्कसंग्रहः
3. "अज्ञातार्थज्ञापकं प्रमाणमिति प्रमाणसामान्यलक्षणम्"

**भारतीयदर्शनानां परिप्रेक्ष्ये प्रमाणानां सङ्ख्या**

विविधदार्शनिकसम्प्रदायैः प्रमाणानां सङ्ख्या पृथक् पृथक् मता

चार्वाकदर्शनम् – प्रत्यक्षम्।

बौद्धदर्शनम् – प्रत्यक्षम्, अनुमानञ्च।

जैनदर्शनम् – प्रत्यक्षम्, अनुमानं शब्दश्च।

न्यायः–प्रत्यक्षम्, अनुमानम्, उपमानं, शब्दश्च।

साङ्ख्य–योगदर्शनम् – प्रत्यक्षम्, अनुमानं शब्दश्च।

प्रभाकर–मीमांसकाः – प्रत्यक्षम्, अनुमानम्, उपमानं, शब्दश्च अर्थापतिः।

भाट्टमीमांसकाः – प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अभावः।

पौराणिकाः – प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अभावः, सम्भवः, ऐतिह्यञ्च।

**शब्दप्रमाणस्य स्वरूपम्**

ज्ञानस्य क्षेत्रे परम्परायाः अपि माहात्म्यं वर्तते परम्परायाः प्रमुखो वाहकः च शब्द एव। ऋग्वेदः विश्वस्य सर्वप्रथमः ग्रन्थः मन्यते अतः शब्दस्येतिहासस्य प्रमाणस्य च समस्यायाः सन्दर्भे यद्यस्माकं ध्यानं वेदान् प्रति याति तु अत्र काप्यसङ्गतिः नास्ति। व्युत्पत्तिदृष्ट्या शब्दः (शब्दयति) ध्वनेः पर्यायोऽस्ति। जनसामान्यदृष्ट्या शब्दपदयोः कोऽपि भेदः नास्ति। यस्मादर्थबोधः सः 'शब्दः'– एवमपि बह्वाचार्याणां मतमस्ति। किन्तु वैयाकरणानां दृष्ट्या तु **"सुप्तिङन्तं पदम्"**[1] इति। ज्ञानस्य साधनानां प्रसङ्गे 'शब्दः' प्रमाणमेकं मन्यते। साधारणतः एतादृशानां पदानां समूहो वाक्यमुच्यते यदुच्चरितं, परस्परं साकांक्षयुक्तं, परस्परान्वययोगार्थानां प्रतिपादकं, परस्परसन्निहितञ्च भवति। यथार्थोपदेशकर्त्रा जनेन प्रयुक्ते सति एतादृगेव वाक्यं शब्दप्रमाणं कथ्यते।

---

1. मध्यसिद्धान्तकौमुदी 1.4.14

शब्दः वाक्यार्थज्ञानम्[1]। अभिहितान्वयवादः – मीमांसा – कुमारिल–भट्टः। अन्विताभिधानवादः – मीमांसा – प्रभाकरमिश्रः। तात्पर्यवादः(संसर्ग–मर्यादावादः) – न्यायः – जयन्तभट्टः। पदम्[2], यौगिकपदम्, यथा पाचकः। रूढपदम्, यथा गौः अग्निः। यौगिकरूढपदम्, यथा पङ्कजः 'पङ्कात् जायते'। रूढयौगिकपदम्, यथा उद्भिद्, मण्डपः पदवृत्तयः[3] अभिधालक्षणा। "गङ्गायां घोषः" – जहल्लक्षणा। "काकेभ्योः दधिरक्षताम्" – अजहल्लक्षणा। "तत्त्वमसि" – जहदजहल्लक्षणा

## साङ्ख्यदर्शने शब्दप्रमाणम्

शब्दप्रमाणस्य परिभाषायाः सम्बन्धे साङ्ख्याचार्याणां कथनं नैयायिकानां तुल्यमेव। किन्तु आप्तशब्दस्य व्याख्यायां कश्चित् भेदोऽस्ति। साङ्ख्यसूत्रकारानुसारं **"आप्तोपदेशः शब्दः"**[1]। किन्त्वत्र आप्तस्याऽर्थः आप्तियुक्तमस्ति। आप्त्याः अर्थोऽस्ति योग्यतोपदेशयोः आशयम्– यथाभूतपदार्थस्य निर्दोषकथनम्। एतस्याः परिभाषाया एव उत्तरवर्तिभाष्य–काराणामनुसारं विश्लेषणमस्ति यत् यः जनः वस्तूनां साक्षात्सङ्ग्रहं कृत्वा तेषां यथार्थज्ञानं करोति सः तद्विषये आप्तः कथ्यते। एतादृक्जनस्योपदेश एव शब्दप्रमाणं मन्यते। ईश्वरकृष्णः विश्वसनीयवचनम् **आप्तवाक्यं** कथयति।[2] ईश्वरकृष्णस्य वचनस्य विश्लेषणं कुर्वन् वाचस्पतिमिश्रः कथयति यद् आप्तशब्दस्यार्थः प्राप्तमर्थाद् युक्तमस्ति। अनेन प्रकारेण या श्रुतिरस्ति साप्तश्रुतिः। श्रुतिरर्थाद्वाक्यादुत्पन्नं वाक्यार्थज्ञानम्।[3] एवमेव ईश्वरकृष्णेनोक्तम् **"आप्तश्रुतिराप्तवचनं तु"**[4] अत्रापि 'तु' पदस्य प्रयोगः आगमप्रमाणमनुमान–प्रमाणात् पृथक् कर्तुं कृतम्। शब्दप्रमाणे वाक्यार्थः प्रमेयो भवति। वाक्यं वाक्यार्थस्य धर्मः नास्ति अतः तत् वाक्यार्थस्य लिङ्गमपि न भवति अतो वाक्यवाक्यार्थयोः व्याप्तिसम्बन्धः नास्ति। अतः शब्दप्रमाणमनुमानात् पृथगस्ति।

## योगदर्शने शब्दप्रमाणम्

योगदर्शने शब्दस्य कृते आगमशब्दस्य प्रयोगः कृतः। व्यासभाष्य–स्यानुसारं यथार्थद्रष्टा आप्तपुरुषैः स्वज्ञानस्य सम्प्रेषणार्थं शब्दमाध्यमेन यः

---

1. वाक्यं त्वाकांक्षायोग्यतासन्निधिमतां पदानां समूहः' – तर्कभाषा
2. शक्तं पदम्। चतुर्विधम् – न्यायसिद्धान्तमुक्तावली
3. सङ्केता लक्षणा चार्थे पदवृतिः' – शक्तिवादः – गदाधरः

उपदेश: दीयते तत्र शब्दस्य श्रवणात् पदार्थस्य विषये श्रोतु: या चित्तवृत्ति: भवति सा 'आगम' इति कथ्यते।[1]

## न्यायदर्शने शब्दप्रमाणम्

नैयायिकानां चतुर्थमन्तिमञ्च प्रमाणं शब्दो वर्तते। नैयायिका: शब्दमाप्तवचनं कथयन्ति अर्थात् आप्तपुरुषानां कथनमेव शब्दप्रमाणमस्ति। न्यायसूत्रकार: गौतमोऽपि कथयति।[2] जयन्तमतानुसारं वस्तूनां प्रतीतौ समर्थशब्दस्य बोध: अर्थादभिधानक्रिया।[3] भासर्वज्ञ: किञ्चित् भिन्नतया करोति शब्दप्रमाणस्य लक्षणम्। तस्य मतं स्पष्टीकुर्वन् न्यायसागरस्य टीकाकार: वासुदेवसूरी कथयति यत् सम्यक्संशयादिविलक्षणज्ञानस्य चेष्टालिप्यक्षरादिसहितं यानि शब्दात्मकाशब्दात्मकानि साधनानि सन्ति तान्यागमशब्दप्रमाणानि सन्ति।[4]

गंगेशोपाध्याय: तस्यानुयायिनश्च वाक्यार्थज्ञानं शब्दप्रमाणं कथयन्ति। वाक्यार्थज्ञानेन तेषामाशयोऽस्ति यद् वाक्यस्यान्तर्गतपदसमूहस्य स्मरणात्मकं ज्ञानम्।[5] केशवमिश्रान्नंभट्टोत्तरवर्तिन: नैयायिका: शब्दप्रमाणस्य परिभाषायां परिवर्तनं कुर्वन्ति ते उपदेशस्य स्थाने वाक्यस्य प्रयोगं कृत्वाप्तवाक्यं मन्यन्ते।[6] केशवमिश्रानुसारं वाक्यं तदस्ति आकांक्षा–योग्यता–सन्निधियुक्तपदानां सम्मिश्रणस्ति।[7]

आकांक्षा–'पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा'।[8]

योग्यता–'अर्थाबाधो योग्यता'।[9]

सन्निधि:–'पदानामविलम्बेनोच्चारणं सन्निधि:'।[1]

तात्पर्यवाद:–'आसत्तिर्योग्यताऽऽकांक्षा तात्पर्यज्ञानमिष्यते।'[2]

---

1. न्यायसूत्रम् 1.1.7
2. 'आप्तश्रुतिराप्तवचनं तु' – साङ्ख्यकारिका
3. 'तच्च स्वत: प्रमाणमपौरुषेयवेदवाक्यजनित्वेन सकलदोषाशंकाविनिर्मुक्तेर्युक्तं भवति' – तत्त्वकौमुदी
4. साङ्ख्यकारिका

**वैशेषिकदर्शने शब्दप्रमाणम्**

प्राचीनवैशेषिकदर्शनं शब्दप्रमाणं न मन्यते। तस्यान्तर्भावः अनुमान-प्रमाणे एव स्वीकरोति। प्राचीनवैशेषिकाचार्येषु कणादप्रशस्तपादश्रीधरादयः शब्दप्रमाणम् अनुमानतुल्यमेव मन्यन्ते। तेषामनुसारमनुमाने व्याप्तिग्रहः, लिङ्गदर्शनं, व्याप्तिस्मृतिः तत्पश्चाच्च अनुमितिर्भवति। एवमेव शब्देऽपि शक्तिग्रहः, वाक्यश्रवणं, पदार्थस्मृतिः तत्पश्चाच्च वाक्यार्थज्ञानं भवति।[3] अनेन प्रकारेण तुल्यविधित्वात् शब्दस्यानुमाने एवान्तर्भावो भवति।

**मीमांसादर्शने शब्दप्रमाणम्**

शबरस्वाम्यनुसारं शब्दात् प्रादुर्भूतस्य अप्रत्यक्षवस्तुविषयकज्ञानं शब्द इति कथ्यते। यः शब्दस्यार्थज्ञातुः श्रोतारं तत्तथ्यस्य बोधं कारयति यः श्रोतुः प्रत्यक्षस्य सीमातः बहिर्भवति।[4]

कुमारिलेन शब्दप्रमाणजन्यज्ञानं द्विप्रकारकमुक्तम् - पौरुषेयम-पौरुषेयञ्च। पौरुषेयाप्तज्ञानं सांसारिकाप्तपुरुषाणां कथने आधारितं भवति। अपौरुषेयञ्च नित्यानादिवाक्यमस्ति यद्वेदेषु निहितं वर्तते। मीमांसकाः वेदानीश्वरनिर्मितं न मन्यन्ते। ते ईश्वरस्य सत्तायां न विश्वासं न कुर्वन्ति। अतो वेदाः तेषां मतानुसारं अनाद्यपौरुषेयशाब्दज्ञानमस्ति।

प्रभाकरस्य मतानुसारं लौकिकः अपौरुषेयो वा शाब्दबोधस्तु अनुमा-नान्तर्भूतो भवति, अतोऽपौरुषेयवैदिकवाक्येभ्यो जनितज्ञानमेव शाब्दिप्रमास्ति। अवैदिकवाक्येषु प्रामाण्याभावं मन्यन्ते।

---

1. 'शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः' – व्यासभाष्यम्
2. 'आप्तोपदेशः शब्दः' – न्यायसूत्रम् 1.1.7
3. 'श्रोत्रग्राह्यवस्तुकरणिका तदर्थप्रतीतिरभिधानक्रिया' – न्यायमञ्जरी
4. 'सम्यक् संशयादिविलक्षणज्ञानस्य साधनं करणं शब्दात्मकं वा चेष्टालिप्यक्षरादि यत् तत् सर्वमागमः' – न्यायसारटीका
5. 'प्रयोगहेतुभूतार्थत्त्वज्ञानजन्यः शब्दः' – तत्त्वचिन्तामणिः, शब्दखण्डः
6. 'आप्तवाक्यं शब्दः' – तर्कभाषा
7. 'आकांशा-योग्यता-सन्निधिश्च वाक्यार्थज्ञाने हेतुः' – तर्कसंग्रहः
8. तर्कसंग्रहः
9. तर्कसंग्रहः

वाक्यार्थविषयकं परस्परभिन्नमतद्वयं मीमांसकेषु ज्ञायते– अन्विताभिधानवादः अभिहितान्वयवादश्चेति। अन्विताभिधानवादस्य प्रवर्तकः प्रभाकरमिश्रः मन्यते। तस्यानुसारं विधायकवाक्येषु स्थितशब्देभ्य एव शब्दार्थज्ञानं भवति। पृथक् पृथक् शब्दस्य ज्ञानं न भवति। विधिवाक्येषु परस्परान्वययुक्तपदानामर्थबोधनमेव अन्विताभिधानवादः कथ्यते। अभिहितान्वयवादस्य मतं कुमारिलभट्टस्य वर्तते। यस्यानुसारं वाक्येषु प्रत्येकं पदस्य पृथक् पृथगभिधानं भवति। एतस्यार्थान् आकांक्षा–योग्यता–सन्निधिसाहाय्येन वाक्यार्थस्य रूपे युज्यते। अनेन प्रकारेण वाक्यार्थं पदार्थञ्च भिन्नतथ्यद्वयमस्ति। वाक्यार्थः तात्पर्यार्थोऽपि कथ्यते।

कतिपयाचार्याः अनयोः द्वयोः मतयोः समन्वयं कर्तुं प्रयतितवन्तः। तेषु मुकुलभट्टस्य नामाग्रिममस्ति। यस्यानुसारं यदि शब्दान् ध्यात्वा विचारयामः तु अभिहितान्वयवादोचितं वर्तते वाक्यदृष्ट्या च विचारयामः चेत् अन्विताभिधानवादः। अतः मुकुलभट्टः सिद्धान्तद्वयं सम्मिल्य समुच्चयवादस्य प्रतिपादनं करोति मुकुलभट्टस्यानुसारं वादद्वयमेव आंशिकरूपे उचितमस्ति।

## वेदान्तदर्शने शब्दप्रमाणम्

दर्शनेऽस्मिन् आगमार्थाच्छब्दप्रमाणस्यात्यधिकं महत्त्वमस्ति। यतः वेदान्तस्य एकमात्रं प्रमेयं 'ब्रह्म' तथा तस्य ज्ञानं प्रत्यक्षानुमानयोः विषयः नास्ति अपितु ब्रह्मज्ञानस्य एकमात्रसमर्थप्रमाणमागम एवास्ति। वेदान्तमतानुसारमागमप्रमाणं तद्वाक्यमस्ति यस्य तात्पर्यविषयभूतसंसर्गोऽन्यप्रमाणैः न बाध्यते। तद्वाक्यमागमप्रमाणं कथ्यते।[1] वेदान्तस्यागमः मीमांसावदेव।

शब्दप्रमाणं सर्वाणि भारतीयास्तिकदर्शनानि स्वीकुर्वन्ति वैशेषिकदर्शनमात्रं परित्यज्य। किन्तु प्राचिनवैशेषिका अपि शब्दस्यानुमाने

---

1. तर्कसंग्रहः
2. भाषापरिच्छेदः
3. "शब्दोपमानयोर्नैव पृथक् प्रमाणमिष्यते।
   अनुमानगतार्थत्वादिति वैशेषिकं मतम्।।"
4. 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' – शाबरभाष्यम्

अन्तर्भावं कुर्वन्ति। उत्तरवर्तिनः आचार्यास्तु न्यायस्य प्रमाणमीमांसां स्वीकरणत्वात् शब्दं स्वतन्त्रप्रमाणं मन्यन्ते। अतः शब्दं समस्तास्तिकषड्दर्शनानि स्वतन्त्रप्रमाणत्वेन स्वीकुर्वन्ति। लोकेऽपि प्रभाततः सायं पर्यन्तं प्रत्येकं क्षणस्य क्रिया शब्दाधारिता एव भवति। कस्यापि ज्ञानस्य व्यापारः शब्दाश्रित एव भवति। अतो वैयाकरणैः उक्तम्– "शब्दपूर्वकज्ञानव्यापार" इति।

1. 'यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते, तत् वाक्यं प्रमाणम्' – वेदान्तपरिभाषा

# भारतीयदर्शनेषु शब्दप्रमाणम्

सुनीताकुमारीनागरः

संस्कृतवाङ्मयमतिविस्तृतं यत्र च सन्ति बहवः विषयाः तेषु च भारतीयदर्शनमपि अतिविशिष्टं वर्तते। भारतीयदर्शनस्य आस्तिक-नास्तिक भेदेन द्वौ भेदौ। आस्तिकदर्शने षड्दर्शनानि सर्वविदितानि नास्तिकानि च षड्दर्शानामि। आस्तिकदर्शनेषु विभिन्नानि प्रमाणानि आचार्यैः स्वीकृतानि। तेषु प्रमाणेषु शब्दप्रमाणं प्रायशः सर्वैः अङ्गीकृतम्। संसारेऽस्मिन् शब्दव्यतिरिक्तं नहि किञ्चिदस्ति, यदस्ति चराचरं तत् सर्वं शब्देन भासते। कथितं भर्तृहरिणा–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**[1]

शब्देनैव कृत्स्नं भुवनत्रयं प्रकाशितं किल, अन्यथा लोकत्रयमिदं अन्धतमसि निमग्नं स्यादिति ध्रुवम्। तदवेम्–

**इदमन्धतमः कृत्स्नं जायते भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते॥**[2]

व्युत्पत्तिदृष्ट्या शब्दो ध्वनिश्चेति पर्यायौ। लौकिकदृष्ट्या तु शब्दपदयोश्च न कश्चन भेदः। यस्मात् यदुच्चारणाद् अर्थबोधः जायते स एव शब्दः इति आचार्याणाम् अभिप्रायः।

"शपत्यर्थम् आह्वयति, प्रत्याययति, शप्यते येन शपनमात्रं वा शब्दः।" सुप्तिङन्तं पदमिति वैयाकरणाः प्रवदन्ति, शक्तं पदमिति नैयायिकाः

---

1. वा.प. 1.123
2. काव्यादर्शे 1.4

अभ्युपगच्छन्ति। ज्ञानसाधनप्रसङ्गे तु शब्दस्य प्रमाणत्वमभ्युपेत्य किञ्चित् समुपस्थाप्यते।

**न्यायनये–**

तत्तद्धर्मसाक्षात्कारवतः आप्तस्योपदेशः शब्द इति परमकारुणिकानां महर्षीणां गौतमीयानां शब्दलक्षणम्।[1] लक्षणमिदं सर्वेषाम् आर्याणां म्लेच्छानां च समानमिति वात्स्यायनः अवादीत्।[2] परिशुद्धावुदयनाचार्यस्तु न्यायसारसम्मतमेवानुवदति समय सामर्थ्यवशात् सम्यक् परोक्षानुभवसाधनं शब्द इति।[3] वैशेषिकास्तु शब्दस्य पृथक् प्रमाणत्वं नाभ्युपगच्छन्ति, अपि च अनुमाने एव शब्दमन्तर्भावयन्ति। तथा हि शब्दोऽनुमानं, व्याप्तिबलेनार्थप्रतिपादकत्वात्, धूमवदिति[4] अतः शब्दः न पृथक् प्रमाणम्। अनुमानेऽन्तर्भावादिति तेषां मतम्। सप्तपदार्थ्यामपि शिवादित्येन अनुमानविषयत्वेन, व्याप्ति-बलेन च शब्दोऽनुमानमेवेति समसाधि, नातिरिक्तः।[5]

**भट्टनये–**

भाट्टमतानुसारेण शब्दप्रमाणस्य लक्षणं यत् गृहीतपदपदार्थ-संगतिमतः पुरुषस्य, कतिचित्पदश्रवणानुपदं पदार्थस्मृतौ समुत्पन्नायां स्मारितैस्तैः पदार्थैः अज्ञाताबाधितार्थविषयकं यद्विशिष्टं वाक्यार्थज्ञानमुत्पद्यते सैव शाब्दी प्रमेत्याख्यायते।[6] तादृशप्रमाणजनकः शब्दः प्रमाणं भवितुमर्हति। "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्।"[7]

---

1. आप्तोपदेशः शब्दः – न्यायदर्शनम् 1.1.7
2. न्यायभाष्यम् – 365
3. तत्र समयबलेन सम्यक् परोक्षानुभवसाधनं शब्द इति एके– परि. 372
4. शब्दादीनामपि अनुमानेऽन्तर्भावः समानविधित्वात्। यथा प्रसिद्धसमयस्य असन्दिग्धलिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्याम् अतीन्द्रियेऽर्थे भवत्यनुमानमेव शब्दादिभ्योऽपीति। प्र.भा.शब्द. प्र.
5. शब्दस्याप्यनुमानविषयत्वेन अविनाभावोपजीवकत्वेन वा अनुमानत्वम् स.प.
6. तत्र तावत्पदैर्ज्ञातैः पदार्थस्मरणे कृते।
असन्निकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते।। मा.मे.
7. शाबरभाष्यम्

**प्राभाकरनये–**

अत्र प्रभाकरः– किं शब्दाद्विज्ञानम् शब्दविज्ञानम्? उत शब्द एव विज्ञानं शब्दविज्ञानम्? इति विकल्प्य द्वितीयपक्षात् प्रेरणं न किमप्यवगम्यते। प्रेरणं नाम शासनम्। यस्मात् शासनमवगम्यते तच्छास्त्रम्। शासनात् खलु शास्त्रमिति व्यपदिशन्ति लोके। शब्दादर्थे यद्विज्ञानमुत्पद्यते तत् शब्दविज्ञानम्।

**शाब्दिकानां नये–**

शब्दो ब्रह्म एवेति शाब्दिकाः। तथा च जगन्निदानमर्थात् मौलिककारणं स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैवेति भर्तृहरिणा स्वकीयग्रन्थे व्यवस्थापितम्। उपर्युक्तन्यायमीमांसकयोः मतमपि च वैयाकरणानां शब्दप्रमाणं निरुप्य सम्प्रति किं पदं, तस्य पदार्थस्य कथं ज्ञानं, कथं तस्य विभिन्नक्रियाभिः सह संयोगो भवति इत्यस्मिन् विषये विचार्यते। वर्णसमूहः पदम्, पदसमूहो वाक्यम्, वाक्यसमूहः प्रकरणम्, प्रकरणसमूहो यथासमयं पादो वाह्निकं वाध्यायो वा, तत्समूहः शास्त्रमिति। कथं पुनः क्षणिकानां वर्णानां समूहः सम्भवति? नैवात्र वनादिवदवस्थितानां समूहो विवक्षितः किन्तु कल्पनया यागादिक्रियासमूहवत्।

कथं पुनर्वर्णसमूहः पदार्थज्ञानस्य हेतुः? कथं च न स्यात्? अन्त्यवर्णश्रवणे पदार्थज्ञानानुत्पत्तेरन्त्यवर्णकाले पूर्ववर्णानां तिरोभावादहेतुत्वमिति। न चान्त्यस्यैव हेतुत्वम्, अधस्तनोच्चारणानर्थक्यप्रसङ्गादिति। अत्रैके ब्रुवते–विनिष्टानामपि हेतुत्वमस्ति, यथेष्टदेशप्राप्तावन्त्यक्रियाकाले अधस्तन-क्रियाणामिति, तन्न, असिद्धत्वात्। अन्त्यक्रियैव तत्र हेतुर्न नष्टाः क्रियाः, नष्टानां जनकत्वे प्रमाणाभावात्, अन्त्यवर्णा एव तर्हि पदम्। न चाधस्तना-नर्थक्यम् अधस्तनानुच्चारणेऽन्त्यत्वासम्भवात्, पूर्वक्रियानुत्पत्तौ अन्त्य- क्रिया-वदिति। विषमोऽयमुपन्यासस्तर्हि यतो हि दूरदेशस्थस्याभिप्रेतदेशात् पूर्वपूर्वदेशैः सह संयोगो यावन्न सम्भवति, तावदुत्तरोत्तरप्रदेशैः संयोगो न भवति, तेन पूर्वपूर्वप्रदेशादुत्तरोत्तरप्रदेशसंयोगार्थानि कर्माण्युपकारीणि सम्भवन्ति। यस्त्वभिप्रेत-देशानन्तरदेशस्थः स कर्मान्तराण्यकृत्वैवाभिप्रेतदेशेन संयुज्यते। न चात्र पूर्वपूर्ववर्णानुच्चारणेऽभिप्रेतवर्णोच्चारणमशक्यम्, येन तदुच्चारणमप्यर्थवत् स्यादिति।

पूर्ववर्णसंस्कारापेक्षोऽन्त्यो वर्णः पदमिति चेत्, न संस्कारस्य साक्षादनुभवोत्पतौ सामर्थ्यानवधारणात्। अन्यथा हि लिङ्गशब्दोऽपि संस्कारापेक्षा वार्थप्रतिपत्तिं करिष्यतः, किं व्याप्तिसंकेतयोः स्मृत्या कल्पितयेति? एवं तर्हि पूर्वसंस्काराः स्मृतीर्जनयन्ति, ताभिः सहान्त्यो वर्णः पदमिति, न ज्ञानयौगपद्यप्रतिषेधात्। एकामेव तर्हि स्मृतिं जनयन्तु, तया सहान्त्यो वर्णः पदमिति न; प्रतिबन्धभावात्। एकात्मसमवायित्वप्रतिबन्धे, देशकालविषये भेदेनोत्पन्नानामपि संस्काराणामेकस्मृतिजनकत्वप्रसङ्गः। एतेन तेभ्यः एकसंस्कारस्तस्मात् चैका स्मृतिरित्येषापि कल्पना प्रत्युक्ता। ता एताः कल्पना वाक्यपक्षेऽपि कृत्वा दूषयितव्याः, समानन्यायत्वादिति।

सम्यगनुभवसाधनं प्रमाणम् इति। अनेन समानजातीयेभ्यः प्रमाणाभासेभ्योऽसमानजातीयेभ्यश्च प्रमेयादिभ्यो व्यवच्छेदः प्रसाध्यते। एवं प्रत्यक्षादिलक्षणानामपि समानासमानजातीयव्यवच्छेदकत्वं व्याख्यातव्यमिति।

केषाञ्चिदाचार्याणां मतेन शब्दे द्विविधा शक्तिर्विराजते। प्रथमा आत्मप्रकाशिका। द्वितीया अर्थप्रकाशिका। यथा प्रदीपः स्वं प्रकाशयन् अन्यानप्यर्थान् प्रकाशयति। इन्द्रियेषु बाह्यार्थप्रकाशनस्य शक्तिः भवति, किन्त्वात्मप्रकाशनस्य शक्तिर्न भवति। मतेऽस्मिन् 'उच्चारितेन' इति पदस्य द्वावर्थौ भवतः। उच्चारणं प्रकाशनञ्च मतत्रयस्यापि समीक्षात्वेन संक्षिप्तोऽयं निष्कर्षः स्फुटीभवति, यत् प्रथममते 'शब्दो' ध्वनिसमूहस्य पृष्ठतः प्रच्छन्नबुद्धिस्थशक्तिविशेषः। द्वितीयमते 'शब्दो' जातिः। शब्दजातिरेव स्फोटः। तृतीयमते स ध्वनिः शब्दो यः स्वस्य रूपस्य अन्यवस्तुनः च प्रत्यायको भवति। व्याकरणशास्त्रे कार्यरूपेण नित्यरूपेण च शब्दो विचारितो वर्तते किन्तु परमार्थतस्तु शब्दो नित्य एव स्वीकृतोऽस्ति। मीमांसकैरपि 'शब्दो नित्य' इति मतमङ्गीकृतम्। पाणिनि[1], व्याडिकात्यायन[2]भर्तृहरि[3]प्रभृतयः सर्वेऽपि वैयाकरणमूर्द्धन्याः परमार्थतः शब्दस्य नित्यतामेव स्वीकुर्वन्ति, किन्तु नैयायिका बौद्धाश्च शब्दस्य नित्यतां भृशं खण्डयन्ति। जैमिनिमतमभिलक्ष्य धर्मकीर्तिरुपहसति। तस्य तावदीदृशं प्रज्ञास्खलितं कथन्नु सविस्मयानुकम्पं

1. तद्शिष्यं सञ्ज्ञा प्रमाणत्वात्। अष्टाध्यायी – 1-2-53
2. सिद्धे शब्दार्थसम्बन्धे–(म.भा. 1.1. पृ. 22)
3. वाक्यपदीयम्–123

नश्चेत् तमपरेऽप्यनुवदन्ति इति निर्दयाक्रान्तभुवनं धिग् व्यापकं तमः।[1]

इत्थं सम्भवतः प्रतिवादिनो वैयाकरणानां सिद्धान्तस्य सूक्ष्मतां ज्ञातुं न प्राभूवन्। सम्मान्याः समेऽपि शब्दशास्त्रविचक्षणा विरोधिनां तर्कपरम्परां निराकृत्य शब्दस्य व्यावहारिकदृष्ट्या कार्यरूपतां स्वीकुर्वन्तोऽपि परमार्थस्तु नित्यतामेवाङ्गीकुर्वन्ति। महर्षेः पतञ्जलेरपि मतमित्थमेव प्रतिभाति।

